‡कालिदासादिप्रबन्धेषु । गुणीभूतव्यङ्ग्यं वाच्याङ्गत्वादिभेदैर्यथासंभवं समासोक्त्यादौ प्रदर्शितम् ।

---

दितोऽलंकारेणालंकारो यथा—

अणिवारिओवगूहण संछंदालावसोअ ववसजण ।
बंधवमरणमहूसव दिअहे दिअहे समो अरसु ॥

छाया—अनिवारितोपगूहनस्वच्छन्दालापशोकविवशजनः ।
बान्धवमरणमहोत्सवः दिवसे दिवसे समवतरतु ॥ इति ।

कविनिबद्धाया.[1] स्वैरिण्याः प्रौढोक्तिनिष्पादितेन रूपकालङ्कारेण उपगूहनादिनिवारण[2]शालिन्योऽस्य[3] बान्धवमरण[4]महोत्सवस्य अतिशयप्रत्यायनात्मा[5] व्यतिरेकालङ्कारः प्रत्याय्यते[6] । इत्थमन्यदप्यूह्यम्[7] ।

अथ [8]गुणीभूत[9]व्यङ्ग्यस्वरूपदिक् । गुणी[10]भूत[11]व्यङ्ग्यं वाच्याङ्गे[12]त्यादि । वाच्याङ्गत्वमगूढत्वमपराङ्गत्वमस्फुटत्वम्, सन्दिग्धप्राधान्यं तुल्यप्राधान्य काकाक्षिप्त[13]मसुन्दरत्वम् इति वाच्याङ्गत्वादयो भेदा. । समासोक्त्यादौ[14] प्रदर्शित[15]मिति । ध्वनिकारादिभिरिति शेषः । तत्र वाच्याङ्गत्वं यथा—

शून्ये[16] त्वद्रिपुराजधाम्नि सुहशा चित्रार्पिता[17]ना करं
संलापस्पृहया पतन्नपि मुहुः कीरस्समारोहति ।
श्रीवल्लालनृपाल ! शिक्षितरसान्मञ्जीररेखामुखं
षण्ड्वभ्रेण च हन्त हंसपृथुकस्सञ्चालयन्क्रन्दति ॥

अत्र शून्यीकृतरिपुराजवेश्म[18] नायकप्रभावातिशयः [19]प्रतीयमानोऽपि शुकहंसवृत्तान्तोपपादकत्वेन स्थित[20] इति वाच्याङ्गत्वम् । इत्थमगूढत्वादयोऽपि भेदा ज्ञेयाः ।

इत्थं ध्वनिगुणीभूतव्यङ्ग्ययोः काव्ययोस्स्वरूप[21]मुपोद्घाततत्वेन[22] यथायोग-

---

1. C. बद्धायां 2. C. शाली 3. A. न्यो वा 4. A's alt. C. मरणोत्सव 5. A's alt प्रत्ययनाङ्क्षति 6. A's alt प्रतीयते D.H. प्रयते 7. D.E.I. मप्यूह्यम् । 8. A's alt C. गुण 9. D गुणस्वरूपमूलं, 10. A's alt C. गुण 11. D. भूतं 12. C D. अङ्गे 13. C.D. क्षिप्तत्वं सु. 14 A.C.D. सोक्त्यादिषु 15. A's alt C. दर्शिता 16. Except E all read देव 17. H. अर्पितादी 18. A.C. वेश्मना ना A's alt वेश्मात्माना, 19. A's alt प्रत्याय्यते 20. A's alt स्थितं 21. A. रूपग्रहणमुपो 22. H. उपोद्घात्वेन ।

‡ The N. S. ed. here adopts the reading अलङ्कारमञ्जर्यां दर्शितः काव्यस्य शृङ्गारप्रधानत्वात् । शिष्टस्तु यथावसरं तत्रैव विभक्त. । गुणी" though there is no positive evidence from Jayaratha for the same. The Sañjīvanī does not help us to fix the reading.

चित्रं तु शब्दार्थालङ्कारस्वभावतया बहुतरप्रभेदम् । तथा हि—

इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं शब्दार्थपौनरुक्त्यं चेति त्रयः पौनरुक्त्यप्रकाराः ॥१॥

आदौ पौनरुक्त्यप्रकारवचनं निरूपयिष्यमाणालङ्काराणां कक्ष्याविभागघटनार्थम् । अर्थापेक्षया शब्दस्य प्रतीतावन्तरङ्गत्वेऽपि प्रथममर्थगतनिर्देशश्चिरन्तनप्रसिद्ध्या पुनरुक्तवदाभासस्य पूर्वं लक्षणार्थं । इह शाब्दे प्रस्थाने । इतिशब्दः प्रकारे । त्रिशब्दादेव संख्यापरिसमाप्तिसिद्धेः ।

---

मुपन्यस्य प्रकरण[1]प्रतिपिपादयिषितं[2] चित्राख्यं काव्यमधिचिकीर्षुराह—चित्रं त्विति । ध्वनिगुणीभूतव्यङ्ग्यापेक्षया भेदबाहुल्यं तत्त्वार्थं ।

अथादिसूत्रमवतारयितुमाह—तथाहीति—अथ सूत्रम्[3] । इहार्थपौनरुक्त्यं शब्दपौनरुक्त्यं[4] शब्दार्थपौनरुक्त्यं चेति त्रयः[5] पौनरुक्त्यप्रकाराः[6] ।

ननु चित्र[7]मित्युपक्रम्य पौनरुक्त्यप्रकारकथने का सङ्गतिः इत्यत[8] आह—आदौ पौनरुक्त्येत्यादि । पौनरुक्त्यप्रकाराणाम् एषां यदेतदादौ वचनं[9]तन्निरूप[10]यिष्यमाणानां शब्दार्थोभयाश्रयतया[11] कक्ष्या[12]विभागं घटयितुं कक्ष्याविभागस्यैव[13] च स्फुटीकाराय[14] प्रत्येकं पौनरुक्त्यग्रहणम् । अतोऽनुप्रासयमकादयः शब्दालङ्काराः । उपमारूपकादयोऽर्थालङ्काराः । लाटानुप्रासादयस्तूभयालङ्कारा इति कक्ष्याविभागोऽनुसन्धेयः ।

ननु शब्दप्रतीतिपूर्वक[15]त्वादर्थ[16]प्रतीतेः प्रथमं अर्थपौनरुक्त्यनिर्देशो न युज्यत इत्यत आह—अर्थापेक्षयेत्यादि । अन्तरङ्गत्वं प्रायमिकत्वं, अर्थगतनिर्देशः[17] अर्थविषयक[18]पौनरुक्त्य[19]निर्देश[20] इत्यर्थः । चिरन्तनप्रसिद्ध्या भामहोद्भटादिपूर्वाचार्यप्रसिद्ध्यनुसारेण । ते हि[21] पुनरुक्तवदाभासाख्यमर्थालङ्कारमेव[22] पूर्वं लक्षितवन्तः[23] । निर्दिष्टस्य च[24] पौनरुक्त्यत्रयस्य सम्प्रतिपन्नतामभिप्रायेणाह—शाब्दे प्रस्थाने इत्यादि । [25]इतिशब्दं योग्येऽर्थे व्यवस्थापयति—इतिशब्दः प्रकार इति । ननु[26] त्रय एवेति समाप्त्यर्थता किं नेष्यत इत्यत आह—त्रिशब्दादेवेत्यादि[27] ।

---

1 A's alt. D E करणे 2 D पिपति 3 A सूत्र चा सि C सूत्र चाह 4 F पुनरुक्तवदाभासा शब्द 5 D त्रय 6 D प्रकार 7 C च क्रम 8 H अत्र 9 A's alt तत्र निरू 10 H निरूप्यमाण 11 H आश्रयत्वेन 12 A C कक्ष्या 13 A's alt E. भागस्य च C D H omit च 14 A's alt. करणाय 15 H पूर्वक पदार्थ 16 A C अर्थादीनां 17 A's alt निर्देशस्य विषय C निर्दश D निर्देशा 18. C विषयकं 19 C. पौनरुक्त्य 20 F निर्देश इत्यर्थं । चिर 21 D तेन 22. Except H. all read एव 23 D लक्षितवन्तो निर्दिष्ट 24 H omits च 25 H omits इति 26. A C repeat 'ननुत्रय एवेति' 27 C शब्दादेवेत्यादि' ।

## तत्रार्थपौनरुक्त्यं प्ररूढं दोषः ॥२॥

प्ररूढाप्ररूढत्वेन द्वैविध्यम्। प्रथमं हेयवचनमुपादेये विश्रान्त्यर्थम्। तत्रेति त्रयनिर्धारणे। यथावभासनं विश्रान्तिः प्ररोहः।

## आमुखावभासनं पुनरुक्तवदाभासम् ॥३॥

आमुखग्रहणं पर्यवसानान्यथात्वप्रतिपत्त्यर्थम्। लक्ष्यनिर्देशे नापुंसकः

---

अन्नायमाशय। विभागेनैव[1] त्रित्वमवगतम्। त्रिशब्दात्तु[2] परिसमाप्तिस्सिद्धा, 'सिद्धे सत्यारम्भो नियमाय' इति न्यायात्[3]। अत इतिशब्दः प्रकारे[4] विवक्ष्यते। न च मन्तव्य सति[5] प्रकारशब्दे पौनरुक्त्य प्रसजेदिति[6]। प्रकारशब्दो हि पौनरुक्त्यप्रकार-माह—स च पौनरुक्त्यप्रकारः केन प्रकारेण त्रिप्रकार इति जिज्ञासायाम् इतिशब्द.[7] तत्प्रकार[8] वचन इति सर्वमव[9]दातम्।

विभागा[10]धिगत त्रित्वं त्रिशब्देन समाप्यते।
[11]त्रिप्रकारत्व[12]वचन-[13] इति शब्दस्ततो मतः[14] ॥ इति

अर्थेषु[15] पौनरुक्त्येषु हेयांशं[16] विभक्तु[17] सूत्रम्—तत्रार्थपौनरुक्त्यं प्ररूढं[18] दोषः। प्ररूढग्रहणस्य[19] व्यावर्त्यमुद्घाटयति[20]—प्ररूढाप्ररूढत्वेनेति। उपादेये विश्रान्त्यर्थमिति। उपादेये प्रतियोग्यन्तरे प्रस्तुताया[21] प्रतिपत्तृ[22]प्रतीते. [23]अव्याक्षेपाय इत्यर्थः। [24]हेयांशैर्हि विविच्य त्यक्ते स्वरसा[25] भवत्युपादेयमीमांसा। त्रयनिर्धारण इति। भावानयने[26] द्रव्यानयनमिह अनुसर्तव्य[27] निर्धारिते पौनरुक्त्यत्रय इत्यर्थः। ननु प्ररूढं[28] दोष इत्युच्यते। कोऽय प्ररोह इत्यत आह—[29]यथावभासनमित्यादि। यच्छ्रवणसमनन्तर यथावदव[30]भात [31]तत्तथैव चेत्प्रतीति. [32]विश्रान्त्यन्त [33]निर्बाधम् [34]अवतिष्ठेत स प्ररोह इत्यर्थः।

यथोद्देशं पौनरुक्त्यमधिकृत्य सूत्रम्—आमुखाव[35]भासनं [36]पुनरुक्त[37]वदाभासम्[38]। आमुखम् आरम्भ.[39]। पर्यवसानान्यथात्व[40] इत्यनेन[41] हेयात्[42] वैधर्म्यं [43]दर्शितम्।

---

1 H. विभागादेव. 2. C. omits. तु 3. H. न्यायतः 4 D. प्रकारेऽपि च- 5. A's alt. असति D. सप्रति 6. A. प्रसज्येदिति D प्रसजदिति 7. C. शब्दत्वप्रकार 8 H. इतिवचन 9. A's alt. C. H. अनवद्यम् 10. H. त्रिभाग 11. C. त्रिः 12. H. omits. त्व 13. D. E वचन इति 14. H. मतः अथ 15. A. C. अर्थैतेषु 16. C. हेयांश 17. C. विभक्तुः E. F. विभङ्क्तुं 18 A. C. प्ररूढ 19. A's alt. C. H. शब्दस्य 20. C. D. E. H. 'यति। उपादेय' 21. C. प्रहृतायाः 22. C. 'वक्तृ' 23. D. अव्यां-क्षेपे F. आक्षेपाय 24. A's alt C. H. ज्ञेयांशे 25. A's alt. स्वत एव भव 26. A. D. द्रव्यानयने द्रव्य 27. A. C. F. अनुपसर्तव्यं 28. A. F. प्ररूढ 29. A. यथाभा (याभा) सन C. यथाभास D. E. F. H. यथाभास। 30 A.C. आभातं। 31. A's alt. C omit सत् 32. C विश्रान्त्यं तन्निर्बा D. विश्रान्त्यर्थं 33. H. 'तन्निर्बाधमविघ्नतः स' 34. A. C. इव तिष्ठेत् 35. A. C E. H. I. भासमानं 36. A.D. E. F. I. भासनं तु 37. A. C. तदाभासः 38. F आभासः 39 C. आरंभ D. आरंभं 40, A's alt. C. अन्यथात्वेन अनपेक्षायां वै। 41. A. omits न 42. H. ज्ञेयात् 43. F. दर्शयति सं।

संस्कारो लौकिकालङ्कारवैधर्म्येण काव्यालङ्काराणामलङ्कार्यपारतन्त्र्यध्वननार्थः । अयंपौनरुक्त्यादेवार्थाश्रितत्वादर्थालङ्कारत्वं ज्ञेयम् । प्रभेदास्तु विस्तरभयान्नोच्यन्ते। उदाहरणं मह्वीये श्रीकण्ठस्तवे—

अहीनभुजगाधीशवपुर्वलयकङ्कणम्
शैलादिनन्दिचरितं क्षतकंदर्पदर्पकम् ॥
वृषपुङ्गवलक्ष्माणं शिखिपावकलोचनम् ।
ससर्वमङ्गलं नौमि पार्वतीसखमीश्वरम् ॥

---

ननु लक्ष्यपदे[1] पुनरुक्तवदाभास इति स्वरूपप्राधान्येन निर्देशो न्याय्यः; न तु पुनरुक्तवदाभास[2]मिति काव्यपरतन्त्रतया इत्यत आह—लक्ष्यनिर्देश इत्यादिना[3] । [4]नापुंसकः संस्कारः पुनरुक्त[5]वदाभासो यत्रेति बहुव्रीहिसमासाश्रय[6]णेनालङ्कार्यपारतन्त्र्यध्वननार्थः इति लौकिकालङ्कारवत् काव्यालङ्काराणां[7] अलङ्कार्यपृथग्भावेनाप्य[8]वस्थानसम्भवः। अपि तु नियमेन काव्यपारतन्त्र्यमेवेति[9] ज्ञापना[10]येत्यर्थः । अर्थालङ्कारत्वम् अस्य स्फुटमेवेत्याह—अयंपौनरुक्त्यादेवेति[11] । [12]अतिगम्भीरेऽर्थे वृथाप्रयनभीरुतामाविश्चिकीर्षुराह—प्रभेदास्त्विति। अवान्तरभेदाः प्रभेदाः । मह्वीये मह्वा[13]ख्यकविकर्तृके[14] ।

अहीनेति[15] । इनस्स्वामी अहीनाम्[16] इनो[17] भुजङ्गाना[18]मधीशश्चेति[19] । वलयकङ्कणञ्चेति[20] आमुखे पौनरुक्त्या[21]वभासन[22], पर्यवसानेषु[23] अहीनस्य महतो[24] भुजङ्गाधीशस्य वपुर्वलयं कङ्कणमस्येत्यन्यथात्वम्[25] । इत्थं शिला[26]देरपत्य[27] शैलादिः शैलादेः नन्दिन[28] इव चरितमस्येति, शैलादिं नन्दयति चरितमस्येति च । तथा क्षतः[29] कन्दर्पो दर्पकश्चेति, क्षतः[30] कन्दर्पदर्पो येनेति[31] च । तथा वृषः पुङ्गवो[32] गौश्चेति, वृषश्रेष्ठ इति च । तथा शिखी पावकश्च लोचने यस्येति च शिखिपावकलोचन[33] इति च[34] । तथा[35] सर्वमङ्गलासहितः पार्वतीश[36] इति च सर्वैर्म[37]ङ्गलैस्सहितश्चेति[38]

---

1. A. F. पदेन । 2. A's alt. आभास इति 3. H. आदिना । अर्थालंकारत्वमस्य घटघटेत्यत आह—अयंपौनरुक्त्यादेवेति । 4. A. C. 'नपुंस' 5. D भावनदा 6. D.E. आश्रयणात्मका 7 D. अलंकाराः 8. A's alt. भावेन प्य D. भावेन अप्य 9. A's alt. C. omit. इति 10 A's alt. 'ज्ञापयितुमि' 11. D.E. इत्यादि 12. A.'अनति' 13. A's alt. C. 'मह्वस्तुकाख्य' D. 'मेह्वाख्य' 14. D. मर्तृके 15. D. अनीनेति 16. A. अहीनाना 17. D. ईशः 18. D. ईयथति 19. C. omits इति 20. C. इत्यस्य दर्पकश्चेति स्यामुखे 21. A. C.D. उत्पादवदाभासन. 22. F. अवभादन 23. D. पर्यवसानान्यथात्वं च अनुसन्धेयम् । 24. C.'महामु' 25. E. इत्यर्थः शि 26. C. शाला 27. E. शिलादस्या 28. A's alt. इव नन्दि चरितं C. उपनन्दनं चरि 29. C. क्षतः 30. E. omits तः C. क्षतकन्दर्पो 31. A's alt. C. येन पेति 32. C. पुरुषो 33. A's alt. D. पावन 34 Omitted in C. 35. Except E. all omit तथा 36. A's alt. E. पार्वतीसखश्चेति 37. A's alt. C. सर्वमङ्ग 38. A. असहित C. आसहित ।

दारुणः काष्ठतो जातो भस्मभूतिकरः परः ।
रक्तशोणाचिरुच्चण्डः पातु वः पावकः शिखी ॥

एतच्च सुबन्तापेक्षया । तिङन्तापेक्षया च यथा तत्रैव—

भुजङ्गकुण्डली व्यक्तशशिशुभ्रांशुशीतगुः ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः ॥

शब्दपौनरुक्त्यं व्यञ्जनमात्रपौनरुक्त्यं स्वरव्यञ्जनसमुदायपौनरुक्त्यं च । अलङ्कारप्रस्तावे केवलस्वरपौनरुक्त्यमचारुत्वान्न गण्यत इति द्वैविध्यमुक्तम् ।

---

पौनरुक्त्यं [1]चामुखाभासनं, पर्यवसानान्यथात्वं च अनुसन्धेयम् ।

अथ व्यस्ततया समासान्तराश्रयतया च दर्शयितुमुदाहरणान्तरं—दारुण इति । पौनरुक्त्या[2]पेक्षया दारुण इति पञ्चम्यन्तम्[3] । पर्यवसाने तु[4] प्रथमान्तम् । इत्थं भस्म च[5] भूतिश्चेति भस्मनोऽभि[6]वृद्धिरिति च । तथा[7] रक्तं च शोणं[8] चेति च रुधिरवच्छोण[9]मिति [10]चावगन्तव्यम्[11] । इत्थं सुबन्तापेक्षया [12]द्विधोदाहृतम्[13] ।

अथ[14] तिङन्तापेक्षया—भुजंगेति[15] । कुण्डली[16] सर्पो[17] भुजंगश्च कुण्डली[18] चेति भुजंगकुण्डलवानिति च[19] । शशी[20] शुभ्रांशु:, शीतगुश्चेति[21] । शं शिवः शुभ्रैः अंशुभिः शीतं चक्षुरिन्द्रियमिति च[22] । हरश्शिव इति[23] चेतो हर इति[24] च योजनीयम् । शशि[25]-शुभ्रांशुशीत[26]गुरिति त्रिषु[27] पौनरुक्त्यं दर्शितम् । पायादव्याच्चेति तु [28]तिङन्तापेक्षया इत इत्यपायविशेषण[29]त्वेन पर्यवसाने पञ्चम्यन्ततया पायादव्यादि[30]त्यन्यथात्वम् ।

पुनरुक्तवदाभासो यत्रे[31]त्येवं हि संस्क्रिया ।
अलङ्कार्यैक[32]निघ्नत्वव्यक्तये समुपाश्रिता[33] ॥

अथ शब्दपौनरुक्त्यप्रस्तावाय सूत्रम्—शब्दपौनरुक्त्यं[34] व्यञ्जनमात्र[35]पौनरुक्त्यं स्वरव्यञ्जन[36]समुदायपौनरुक्त्यं च । अत्राद्यं[37] पदमु[38]द्देश्यं[39] चरमं[40] तु द्वयं

---

1. F. चाभास 2. C. उत्तय 3. D. पञ्चम्या 4. C. तुचेति भुजंग (But the omitted portion is found after. शिव इति) । 5. C. omits च 6. A. अभि वृद्धारिति 7. Omitted in C. 8. A's alt. C. शोणमिति च 9. D. शोणाद् 10. D. omits. च 11. E. गन्तव्यः, 12. A's alt द्विविधं 13. A's alt. 'हृतः' 14. Omitted in C. 15. D. भुजगेति 16. D. कुली 17. C. अस्पों 18. C. ली भुज 19. च omitted in C. D. 20. C. शशि 21. A. C. D. E. H. I. शीतांशुश्चेति 22. C. omits च 23. A's alt. C. हृतश्चेतो 24. A. C. E. F. H. I. हरश्चेति 25. D. E. शशी 26. A's alt. C. F. शीतांशु 27. omitted in C. 28. A's alt. C. 'तिङपेक्षतया' 29. C. 'विशेषणं । त्वनपर्यं' 30. A. C. F. H. I. इति तदन्य 31. A's alt C. इति सं 32. D. कार्यैक C. कायकविघ्नं 33. A's alt. उदाश्रिता 34. A. 'तु' 35. A. मात्र निघ्नतया 36. A's alt. ■ विग्रपौनरुक्त्यं स्वरपौन 37. A's alt. E. आद्य द्वयमु C. आद्यद्वयमु 38. C. अपरेस्यं 39. A. E. F. च चरमा 40. A.F. चरमं तद्द्वयं C. चरमद्वयं E. यं चरमं तु द्वयं ।

संख्यानियमे पूर्वं छेकानुप्रासः ॥४॥

द्वयोर्व्यञ्जनसमुदाययोः परस्परमनेकधा सादृश्यं संख्यानियमः । पूर्वं व्यञ्जनसमुदायाश्रितं यथा—

किं नाम दर्दुर दुरध्यवसाय ! सायं कायं निपीड्य निनदं कुरुषे रुषेव ।
एतानि केलिरसितानि सितच्छदानामाकर्ण्य कर्णमधुराणि न लज्जितोऽसि ॥

अत्र सायंशब्देऽस्यालङ्कारस्य यकारमात्रसादृश्यापेक्षया वृत्त्यनुप्रासेन सहैकाभिधानानुप्रवेशलक्षणः संकरः । छेका विदग्धाः ।

अन्यथा तु वृत्त्यनुप्रासः ॥५॥

केवलव्यञ्जनसादृश्यमेकधा समुदायसादृश्यं त्र्यादीनां च परस्परसा-

---

विधेयम् । शब्दपौनरुक्त्य[1] व्यञ्जनमात्रनिष्ठतया,[2] स्वरव्यञ्जनसमुदायनिष्ठतया च द्विप्रकारमित्यर्थः ।

ननु केवलस्वरपौनरुक्त्यस्य[3] किं वृत्तमित्यत आह—अलङ्कारप्रस्ताव इत्यादि । अलङ्कारो हि[4] विच्छित्तिः, तत्प्रस्तावे केवलस्वरपौनरुक्त्यम[5]चारुत्वात् न गणनामर्हतीति भावः ।

तत्र व्यञ्जनमात्रमधिकृत्य सूत्रम्—सङ्ख्यानियमे पूर्वं[6] छेकानुप्रासः । कोऽय सङ्ख्यानियम इत्यत आह—द्वयोर्व्यञ्जनेत्यादि । युग्मशोऽवस्थितानां व्यञ्जनसमुदायानां[7] परस्पर[8]मनेकधासादृश्यम् इह सङ्ख्यानियमः ।

किन्नामेति । दर्दुरो भेकः[9] । कायं निपीड्य वपुरायास्य[10] । सितच्छदा. हंसा.[11] । अत्र[12] दर्दुरदुरध्यवसाय इत्यादौ सङ्ख्यानियमः[13] । ननु साय [14]कायमित्यत्र कोऽलङ्कार इत्यत आह—अत्र सायं शब्देत्यादि । यकारमात्रसादृश्यपेक्षया हि साय सायेतिच्छेकानुप्रासः । साय कायमिति तु[15] सानुस्वार[16] यकारमात्रापेक्षया[17] वृत्त्यनुप्रासः । इत्थं च सति सायं शब्दे[18] द्वयोरेकाभिधानलक्षणस्सङ्करः[19] अभिधत्त इत्यभिधानं वाचकः[20]शब्दः एकवाचकानुप्रवेशलक्षण[21] इत्यर्थः । लक्ष्यपदं निर्विवक्षुराह[22]—छेका विदग्धाः[23] इति । छेको[24]पलालितत्वाच्छेकानुप्रास इत्यर्थः ।

अथानुप्रासान्तराय सूत्रम्—अन्यथा तु [25]वृत्त्यनुप्रासः । अन्यथात्वं त्रिधा संभवतीत्याह—केवलव्यञ्जनेत्यादि । केवलव्यञ्जनसादृश्य समुदायत्वाभावादन्यथा-

---

1. D. व्यञ्जनमात्रपौनरुक्त्यं 2. A's alt. C. निष्ठतया 3. F. उक्त्यं किं C. उक्त्यम-चारु 4. H. विचित्रित म 5. C. क्त्यं चारु 6. A's alt. पूर्वंश्छेका 7. A. repeats. 'व्यञ्जनसमुदायानां' 8. C. परं सादृ 9. D. भेकं 10. A's alt. आयस्य C. च पुरा यस्य 11. omitted in D. 12. A. दुरध्यवसाय (अत्र दुरदुरसाय) साये C. दुरध्यवसाय साये 13. D. नियमं 14. A's alt. C. 'सायं' 15. D. omits. तु 16. A. C. अनुप्रासार A's alt अनुप्रस्वार 17. D. omits य 18. A. after शब्दे repeats the portion from अनुस्वार ... to शब्दे 19. A. धानानुप्रवेशलक्ष 20. D. वाचकः श 21. H. वाचकतानु 22. C. विविक्षु 23. A. दग्धा 24. A's alt. C. D. छेकैरुपलालितोऽनु 25. C. 'अन्यनु'—

दृश्यमन्यथाभावः । वृत्तिस्तु रसविषयो व्यापारः । तद्वती पुनर्वर्णरचनेह वृत्तिः । सा च परुषकोमलमध्यमवर्णारब्धत्वात् त्रिधा । तदुपलक्षितोऽयम् अनुप्रासः । यथा—

सह्याः पन्नगफूत्कृतानलशिखा नाराचपाल्योऽपि वा
राकेन्दोः किरणा विषद्रवमुचो वर्षासु वा वायवः ।
न त्वेताः सरलाः सितासितरुचः साचीकृताः सालसाः
साकूताः सरसाः कुरङ्गकदृशां मानानुविद्धा दृशः ॥

त्वम् । एकधा[1] समुदायसादृश्य[2] [3]स्वनेकधात्व[4]विरहात् । त्र्यादीना[5] पुनस्समुदायाना[6] [7]व्यातिरिक्तत्वादन्यथात्वम् अनुसन्धेयम् । लक्ष्यपद निर्वक्ति—वृत्ति[8]स्त्विति । शृङ्गारादिरसविषयो[9] योऽस्य प्रति[10]नियमभाजा वर्णाना व्यञ्जनव्यापार स वृत्तिरुच्यते[11] । सोऽस्य वर्णव्यापारो[12]ऽस्मिन्[13]वर्णरचनात्मके कविव्यापारेऽस्तीत्युपचारेण वर्णरचनावृत्तिरित्याह—तद्वती[14]पुनरित्यादि । तस्यास्त्रैविध्य दर्शयति—सा च परुषेत्यादि । श्रुतिप्रतिकूलता वर्णाना परुषत्वम्[15] । या परुषवर्णारब्धा सा गौडीया रीति । या तु कोमलवर्णारब्धा सा [16]वैदर्भी । मध्यमवर्णारब्धा तु पाञ्चाली । एता रीतयो वामनादिभि[17] काव्यात्मत्वेन[18] सिद्धान्तिता । उपपत्तिपर्यालोचनाया तु काव्यात्मकथा तावदास्ताम् । यावता शब्दालङ्कारेष्वपि यो बहिरङ्गो वृत्त्यनुप्रासात्मा वर्णालङ्कार तद्धर्मत्वात् तच्छेषभूता एता[19] इत्यलम[20]प्रासङ्गिकवैदग्ध्य[21]प्रवचनेन ।

सह्या[22] इति । विषद्र[23]वमुच इति । [24]किरणापेक्षया दुस्सहत्वम् । [25]वाय्वपेक्षया तु गरलकल्पजलकण[26]योग । सरला अनरालपातिन्य[27] । सितासितरुचे[28] उत्तरलतारकत्वात् अनवस्थितवर्णसन्निवेशा साचीकृता अपाङ्गान्निर्गन्तुम् इवेहमानास्सालसा रसानुरागं निवर्तमाना ।

यदुक्त भावप्रकाशे—"[29]आलस्य [30]तदभीष्टार्थात् व्रीडादे[31]र्यन्निवर्तनम्" इति । साकूता[32] भवतु पश्याम इतीव[33] व्याहरन्त्य[34] सरसा ।

रसो रागे विषे वीर्ये[35] तिक्तादौ पारदे[36] द्रवे ।

1 As' alt C. अथवा 2. C. सादृश्यस्य 3 H. इयं भस्य 4. D. विहोऽथा 5 A's alt. C आदीनां 6. A's alt. C. समुदायद्वय- 7. C. 'द्वयपति' 8. D. वृत्ति-स्यति 9. D 'विषयोऽस्य' 10 D. विषम 11 As' alt. C. इष्यते D इत्युच्यते 12. C पारोऽयमस्मि 13 A यस्मिन् 14. A. तद्वतीति । पुनरि C E. तद्वते 15. D पुरुष 16. D. सा तु 17 A's alt वामनमनादि 18. A's alt. C आत्मतया 19. A. एषता C. omits. एता 20 D E. प्रासङ्गि 21. D. E. प्रथनेन H वर्णनेन 22. Except E all have सह्यास्ता 23 D विषय C. द्रुव 24 D. करण 25 A's alt C. वस्यपे 26. C. कण F जल प्रसरण 27. H पातिन. 28. A's alt. रुच 29 C. इन 30 H. यद् 31. C. व्रीडादेय निव 32. F. साकूतां 33. A's alt. C. H. इति व्या 34 C. हरन्त्य रोसा 35. H. विषे 36. C. पारदे

यथा वा—

> आटोपेन पटीयसा यदपि सा वाणी कवेरामुखे
> खेलन्ती प्रथते तथापि कुरुते नो सन्मनोरञ्जनम् ।
> न स्याद्यावदमन्दसुन्दरगुणालङ्कारझङ्कारितः
> सप्रस्यन्दिलसद्रसायनरसासारानुसारी रसः ॥

---

रोषारुणिम्ना[1] विषय विलिपन्त्य मानानुविद्धा. [2]दृष्टश्रुताद्यपराध[3]जन्मा रोषो मानस्तेन सम्मूर्च्छिता ज्वलत्त्वा इत्यर्थः । अत्र केवलव्यञ्जन[4]पौनरुक्त्यलक्षणमन्यथात्वम् । वृत्तिस्तु रोषवर्णनात्परुषा[5] ।

आटोपेनेति । यद्यपि कवेर्वाणी प्रबलेन शब्दाडम्बरेण[6] खेलन्ती प्रारम्भे प्रथते, तथापि[7] सता मनोरञ्जनं न कुरुते[8] अमन्दैः सुन्दरैश्च गुणालङ्कारैः मुखरीकृत[9] सनिष्पन्द[10] विलसद्रसायन[11]रसा[12]सारा[13]नुसारी[14] शृङ्गारादिको रसो यावन्न स्यादित्यत्र केवलवर्ण[15]साम्यञ्चतु[16]ष्वपि पादेष्वलङ्कार[17] । झङ्कारितेत्यादावेकधा[18] समुदायसादृश्य रसायन[19]रसेत्यत्र तु रसेति [20]समुदायद्वयस्य परस्परसादृश्यमित्यनुसन्धेयम् । तथा च "आटोपे[21]"त्यादौ गौडीया "अमन्दसुन्दरे"त्यादौ वैदर्भी, "गुणालङ्कारे"त्यादौ पाञ्चालीया च[22] तत्तदर्थानुसारेण द्रष्टव्या ।

> प्रकृष्टो वर्णविन्यासो[23] रसाद्यनुगतो[24] हि य[25] ।
> सोऽनुप्रासस्स च छेक वृत्त्यु[26]पाधिव[27]शाद्द्विधा ॥
> समुदायद्वय यत्र विविध साम्यमृ[28]च्छति[29] ।
> मच्छेकलालनाप्रौढं[30] छेकानुप्रास ईरित ॥
> व्यञ्जनव्यापृति[31]र्वृत्ति[32] वर्णाना रसगोचरा ।
> तत्सयोगादिय वर्णरचना वृत्तिरिष्यते ॥
> सा वैदर्भ्यादिभेदेन[33] त्रिधा पूर्वनिरूपिता[34] ।
> तयोपलक्षितत्वात्तु वृत्त्यनुप्रास इष्यते[35] ॥

इत्य वर्णालङ्कारो द्विधा वर्णित[36] ॥

---

1. E. अरुणिमा 2 A's alt C. दृष्टश्रुताद्य 3 C. अपराध 4 C व्यञ्जना 5 D परुषा A C.D E.F.I परुषाटोपे 6. H. अलङ्कारेण 7. A's alt. F यद्यपि H. यद्यपि 8 H कुरुते च रावणा (p. 31) 9 A. C कृता 10 D. निष्प—11. A रसारसारसायन C विनमनु सारसारसायन रसधारा 12 All mss. read रस 13 All except F. धारा 14. C. सार 15. A's alt. स व्यञ्जन मा 16 A's alt C साम्यश्च त्रिष्वपि 17 C. अलङ्कार गद्य 18. A's alt. एकदेश C एकदेशस्य D एकधा 19. C रसायना 20 समन्ताय अय 21. A's alt च इत्याटोपेत्यादौ C च घोपेत्या 22. D E. omit च 23 C 'विन्यासो' 24 A. C. अनुगुणः A B. गतस्तु य, 25 D. यं 26. D अनुप्रासनोदि 27 C उपाय 28. D.F इच्छति 29 F. ति ईरित 30. D E. प्रौढे 31 C. व्यापृत्ति 32. A B C. ध्वनि॰ 33 A. भेदात्त्रिधा C भेदात्रिधा 34 A's alt C उदाहृता 35 A C उच्यते 36 D दर्शितो ।

## स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम् ॥६॥

अत्र क्वचिद्भिन्नार्थत्वं क्वचिदनर्थकत्वं क्वचिदेकस्यार्थवत्त्वमपरस्यानर्थकत्वमिति संक्षेपतः प्रकारत्रयम् । यथा—

यो यः पश्यति तन्नेत्रे रुचिरे वनजायते ।
तस्य तस्यान्यनेत्रेषु रुचिरेव न जायते ॥

इदं सार्थकत्वे । एवमन्यज्ज्ञेयम् ।

## शब्दार्थपौनरुक्त्यं प्ररूढं दोषः ॥७॥

प्ररूढग्रहणं वक्ष्यमाणभेदवैलक्षण्यार्थम् । यदाहुः—शब्दार्थयोः

---

अथ शब्दालङ्कारप्रस्तावः ॥ तत्र यमकलक्षणाय सूत्रम् । स्वरव्यञ्जनसमुदायपौनरुक्त्यं यमकम्[1] ॥ स्वरव्यञ्जना[2]त्मकस्य शब्दसमुदायस्य यत्तेनैव रूपेण पुनर्वचन तद्यमनाद्य[3]मकम् । तस्य पदावृत्त्यर्धावृत्तादयो भेदाश्चिरन्तनैरेव बहुधा प्रपञ्चिता. । ते काव्यगडु[4]भूता इति नेह प्रतन्यन्ते[5] । किन्तु [6]सर्वेषामेवैषा भेदानामेत[7]द्वैचित्र्यत्रयम्[8] आवहतीति मभिप्रायेणाह—अत्र क्वचिद्भिन्ना[9]र्थेत्यादि । यम्य[10]मानयो [11]समुदाययोर्द्वयोरपि क्वचिद्भिन्ना[12]र्थता, क्वचिद[13]नर्थकता, क्वचिदेकस्यार्थ[14]वत्त्वमपरस्य अनर्थकत्व[15]मिति क्रोडीकृतसकलविशेषमेतद्भेदत्रयम् । यो य[16] इति । रुचिरे रम्ये [17]वनजायते पद्म[18]दलवत् दीर्घे तस्या [19] नेत्रे यो यः पश्यति, तस्य[20] तस्यान्यनेत्रेषु अभिरतिरेव न जायते । इद[21] द्वयोस्सार्थकत्वे[22] अनर्थकत्वे द्वैरूप्ये[23] यथा—

त्वं रावण ! जगत्पुण्यैर्लङ्कालङ्कारभूरभूः ।
वाल्मीके[24]र्येन ववृधे सारस्सारस्वतस्स्वतः ॥

अत्र "रभूरभूरि"ति अनर्थकता । "लङ्कालङ्कारे[25]" त्यादौ[26]द्वैरूप्यम् ।

इत्थमर्थपौनरुक्त्ये[27] पुनरुक्तवदाभास[28] शब्दपौनरुक्त्ये तु अनुप्रासयमकालङ्कारौ च विवेचितौ । अथोभयपौनरुक्त्ये हेयाश विभक्तु[29] सूत्रम् । शब्दार्थपौनरुक्त्यं प्ररूढं दोषः ॥

प्ररूढग्रहणस्य[30] प्रयोजनमाह—प्ररूढग्रहणमित्यादि । [31]अप्ररूढपौनरुक्त्यं वक्ष्य-

---

1. D. कम् । आवृत्त्या 2. C. व्यञ्जनार्थक 3. C. यमनादि यम 4 C. गूढ 5. D. E. प्रतन्यते 6. D. समेषां 7. A's alt. तदेतद् 8. A. C. D. 'अयं त्रैगुण्यभाव' 9. A भिन्नार्थे 10 A's alt. धर्मान्वयोः C. धर्म्यमानयोः F. गम्यमान 11. A.C. द्वयोरपि समु— 12. A भिन्नार्थकता । भिन्नार्थकतं 13. omitted in. F. 14. C. एकस्यास्यर्थ 15. A's alt. F. H. I. अर्थवत्त्वं 16. F. यं 17. C. च घन 18. A's alt. C. पद्मवत् 19. C. तस्य 20. A.C. omit. तस्य 21. A's alt. C. इति 22. F. कत्वे यथा 23. E. च यथा 24. C. वाल्मीके येन 25. A. इत्यत्र 26. E. [illegible] 27. D. उक्त्यं 28. A. C. E. F. आभासः 29 E. विभक्तुं 30. F, स्य प्ररूढाद्वै 31. A's alt. अत्र दोषः । पौनरुक्त्यस्य वक्ष्य D. प्ररूढं E. अप्ररूढं

पुनर्वचनं पौनरुक्त्यमन्यत्रानुवादात् इति ॥

तात्पर्यभेदवत्तु लाटानुप्रासः ॥८॥

तात्पर्यमन्यपरत्वम्। तदेव भिद्यते यत्र, न तु शब्दार्थस्वरूपम्। यथा—

ताला जाअन्ति गुणा जाला दे सहिअएहि घेप्पन्ति।
रइकिरणाणुग्गहिआइ होंति कमलाइ कमलाइ ॥

"अत्राब्जपत्रनयने! नयने निमील्य" इत्यादौ विभक्त्यादेरपौनरुक्त्येऽपि बहुतरशब्दार्थपौनरुक्त्याल्लाटानुप्रासत्वमेव। "काशाः काशा इवे"-

---

माणो[1] भेदः। तस्य प्ररूढाढ्यलक्षण्य[2]मदोषारमकत्वम्। तदेवादोषारमकत्वमभियुक्तसंवादेन द्रढयति[3]—यदा[4]हुरित्यादि[5]। शब्दस्या[6]र्थस्य च पुनर्वचनमनुवादा[7]दतिरिक्ते विषये[8] दोष इत्यर्थः।

अथोपादेयांशमधिकृत्य सूत्रम्। तात्पर्यभेदवत्तु[9] लाटानुप्रासः। यत्र पौनरुक्त्ये शब्दार्थौ तावेव, तात्पर्यमात्रं त्वन्यत्। सोऽयं लाटो[10]पलालनात् लाटानुप्रासः[11]। तस्मादसार्व[12]जनीनत्वात् [13]ग्राम्यानुप्रास इति[14] केचित्। ताला [15]जाअन्तीति।

तदा जायन्ते गुणाः यदा ते सहृदयैर्गृह्यन्ते।
रविकिरणानुगृहीतानि भवन्ति [16]कमलानि कमलानि ॥

अत्र[17] द्वितीययोर्गुण‡कमलशब्दयोः श्लाघाद्या[18]र्थपरत्वं तात्पर्यभेदः।

ननु[19] यत्र प्रकृतिमात्रं[20] तदर्थश्च पुनरुच्यते, न प्रत्ययतदर्थौ; अत्र कोऽलङ्कार इत्यत[21] आह—[22]अत्राब्ज[23]पत्रेत्यादि[24]। [25]विभक्त्यादेरिति। आद्यो हि नयनशब्दो बहुव्रीहि[26]वर्तित्वात् अन्यपदार्थलिङ्ग[27]वचनविभक्तिकः[28]। द्वितीयस्तु स्वलिङ्गवचनविभक्तिकः। अतो नेह विभक्त्यादेः पुनरुक्तिः। नापि लाटानुप्रासत्वहानिः। कुत इत्यत आह—बहुतरशब्दार्थपौनरुक्त्यादिति। इत्थं च सति पदनिबन्धनतया प्रातिपदिक[29]मात्रनिबन्धनतया च[30] लाटानुप्रासो द्विधा मन्तव्यः।

---

1. A's alt. यो भेदः 2. A's alt. वैलक्षण्यत्वात् 3. D. स्वयति 4. D. यमाहुः 5. A's alt. C. इति। 6. H. शब्दस्य ‿थार्थ- 7. C. अनुवादयति 8. C. विषयो 9. A's alt. D. भेदवत्तु 10. A's alt. C. omit. लाटानुप्रा 11. C. प्रासं 12. A. सार्वजनीनत्वात् 13. A. ग्राम्यानु 14. A's alt. F. इत्यपि 15. A's alt. C. जा अर्न्ती D. ताला जाअन्ति 16. A. विमल—17. E. गुणाम्बदा गुणा जायन्ते इति अध्याहारः। द्वाभ्यां निरूप्यात्। अत्र 18. A. C. श्लाघ्यत्वं A's alt. श्लाघापरत्वात् E. 'आसदत्व मात्र' 19. A's alt. C. 'न च' H. न तु 20 C. मात्रं यत्र 21. A's alt. अत्राह C. इत्याह— 22. A's alt. प्रकृति मात्र अत्र 23. C. अब्जपुत्रे 24. A's alt. पुत्र 25. D. विभादेरिति 26. A's alt. C. वृत्ति 27. C. विभवचन 28. D. विभक्तिके यत्नो 29. पदिकार्थ मिव— 30. A's alt. C. omit. च

‡ In this verse the word कमल alone is expressly repeated, and the word गुण mentioned by Vidyācakravartin as repeated is so only by implication.

स्यादावनन्वयेन सहास्य सङ्कर । अन्योन्यापेक्षशब्दार्थगतत्वेनार्थमात्रगतत्वेन च व्यवस्थितेर्भिन्नविषयत्वात् ।

अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम् ।
अस्मिस्तु लाटानुप्रासे साक्षादेव हि लक्षणम् ॥

तदेवं पौनरुक्त्ये पञ्चालङ्काराः ॥९॥

निगदव्याख्यातमेतत् ।

वर्णाना खड्गाद्याकृतिहेतुत्वे चित्रम् ॥१०॥

---

अन वयाद्विशेषमस्य दर्शयति—काशा काशा इवेत्यादि । अनन्वये[1] ह्येकस्यैवोपमानोपमेयत्वम् । तत्र[2] यद्यपि अर्थपौनरुक्त्य लक्षणम्[3], अथापि शब्दपौनरुक्त्य[4] दोषभयादङ्गीक्रियत एव[5] । '[6]यथोद्देशस्तथैव प्रतिनिर्देश' इति न्यायोल्लङ्घने पर्यायप्रक्रमभेददोषप्रसङ्गात्[7] । लाटानुप्रासे[8] तु शब्दपौनरुक्त्य[9]मपि लक्षणमिति विशेष[10] । तदेतदाह—अन्योन्यापेक्षेत्यादि । परस्परव्यपेक्षिणो शब्दार्थयो पौनरुक्त्य लाटानुप्रास । अनन्वये[11] त्वर्थमात्रपौनरुक्त्यमित्यर्थ । अत्रार्थे[12] सङग्रहश्लोक[13]—अनन्वये तु इत्यादि । [14]औचित्यादुद्देशप्रतिनिर्देशयो ऐकरूप्यसमाश्रयणलक्षणात्[15] ॥

यत्र तावेव शब्दार्थौ तात्पर्यं तु विभिद्यते[16] ।
तत्पौनरुक्त्यमाचार्यैर्लाटानुप्रास इष्यते ॥
दोषापत्तिभयादेव शब्दैक्य स्यादनन्वये ।
अस्मिस्तु लाटानुप्रासे साक्षादेव हि लक्षणम्[17] ॥

अथ पौनरुक्त्यनिबन्धनाना[18]मलङ्काराणा नियमनाय[19] सूत्रम् । तदेव पौनरुक्त्ये [20]पञ्चालङ्कारा । यथैव[21] पौनरुक्त्य व्यपाश्रित्य वशशोऽवतिष्ठन्ते[22] । तथोपमादयोऽपि साधर्म्यादिव्यपाश्रयेण[23] वशशोऽवस्थायिन इत्यर्थ[24]बोधित मन्तव्यम् । तदिद न्यायविदामव[25]गतमवेत्यभिप्रायेणाह—निगदव्याख्यात[26]मिति । [27]निगद[28]शब्दोच्चारण तन्मात्रेण प्रतीतार्थत्वात् व्याख्यातकल्पमित्यर्थ ।

अथ चित्रार्थं सूत्रम् । वर्णानां खड्गाद्याकृतिहेतुत्वे चित्रम् ॥ प्रकृतिमाह—

---

1 D E अनन्वयो 2 A's alt D omit तत्र 3 A's alt लक्षण न ? थापि 4 C पौनरुत्तय 5 A's alt D एव यावत्तथानिर्देश । 6 C तथानिर्देय H यो देश 7 D भङ्गात् 8 C प्रास 9 D उभयलक्षणो 10 D विशेष 11 D E H अनन्वयस्तु 12 A's alt C अर्थे 13 A's alt सङ्ग्राहक D श्लोका 14 A's alt C औप चित्या 15 A's alt लक्षणान्य C लक्षणाद्यत्र यत्र 16 D ते तथापि ( P 34 ) 17 H एव 18 C निबन्धन नाम 19 E नियमनाय 20 A's alt C पञ्च प्रकारा 21 All except E read एव 22 A's alt. E F तिष्ठते 23 A's alt आश्रयणेन H आश्रयतो 24 C इत्येव 25 A's alt E अवदातं E युगत मायेत्यभि 26 A's alt व्याख्यान 27 A निगदन निगद 28 H निगद

पौनरुक्त्यप्रस्तावे स्थानविशेषश्लिष्टवर्णपौनरुक्त्यात्मकचित्रवचनम् । यद्यपि लिप्यक्षराणां खड्गादिसन्निवेशविशिष्टत्वं तथापि श्रोत्राकाशसमवेतवर्णात्मकशब्दाभेदेन तेषां लोके प्रतीतेर्वाचकशब्दालङ्कारोऽयम् । आदिग्रहणाद्यथाव्युत्पत्तिसंभवं पद्मबन्धादिपरिग्रहः । यथा—

भासते प्रतिभासार ! रसा भाता हताविभा ।
भावितात्मा शुभा वादे देवाभा बत ते सभा ॥

एषोऽष्टदलपद्मबन्धः । अथ दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्टाक्षर-

---

पौनरुक्त्य-प्रस्ताव [1]इत्यादि । स्थानविशेषेषु[2] खड्गाद्यवयवविशेषेषु विन्यासक्रमेण [3]श्लिष्टानां[4] वर्णानां[5] यत्पाठे पौनरुक्त्यं तदात्मकस्य खड्गबन्धादिचित्रस्य कथनं पौनरुक्त्यप्रस्तावे [6]सङ्गच्छत इत्यर्थः । ननु कथमयं शब्दालङ्कारः ? लिपिसन्निविष्टानां वर्णानां वाचकत्वाभावाद् इत्यत आह—यद्यपीत्यादि । खड्गादिसन्निवेशो हि लिप्यक्षराणाम् एव न श्रोत्राकाश[7]समवायिनाम् । वाचकत्वं तु श्रोत्राकाशसमवायिनामेव न पुनर्लिपिसन्निवेशिनाम् । इत्थं च[8] सति खड्गादिबन्धगतानां यद्यपि वाचकशब्दालङ्कारता नोपपद्यते, तथापि लौकिकानां लिप्यक्षरेष्वपि वाचकत्वप्रतीतेर्वाचकशब्दालङ्कारत्वमुपचर्यते[9] इति भावः । अतः[10] स्थूलबुद्धिलालनीयत्वात् वाचकशब्दबहिर्भावाच्च नात्र कविभिरादरः कार्य[11] इति मन्तव्यम्[12] । आदिशब्दार्थमाह—आदिग्रहणादि[13]त्यादि । यथाव्युत्पत्ति[14]संभवं, यथा[15] शब्दः प्रत्येकमभिसंबध्नाति[16] । अतो यथाव्युत्पत्ति[17] यथासंभवं च पद्म[18]मुरज[19]गोमूत्रिकादिबन्धानां परिग्रहो[20]ऽभ्यनुज्ञायत[21] इति शेषः[22] ।

भासत इति[23] । प्रतिभया सारभूत[24] सभा ते भासते । बतेत्याश्चर्ये । रसाभाता शृङ्गारादिना [25]समन्तादुपशोभिता । हताविभा[26] निर्णाशितव्यामोहा[27] । भावितात्मा [28]तत्संस्कारैः आत्मानं [29]भावितवती । शुभा वादे[30] तत्त्वबुभुत्सा (सया ?) तु[31] (वा ?) विजिगीषया[32] वा वादमात्रे विदग्धा । अत एव देवाभा [33]सुधर्मासदृशीत्यर्थः । अत्रोद्धारप्रकारमुपदिदिक्षु[34]राह - एषोऽष्टदल इत्यादि[35] । [36]दलानि दिक्षु चत्वारि[37] चत्वारि च

---

1. A's alt. C. इति 2. A's alt. D.E.F.H.I. गञ्जनकपालिका क्षुरिकाकेषु खड्ग 3. C. श्लिष्ट 4. A.C. "नां यच्चियत्या पौन" A's alt. नां यत्पौन 5. H. 'धर्णामायंत्पाठे' 6. H. सङ्घटते 7. C. श्रोत्रार्थाकाश 8. च omitted in A. C. D. F. 9. C. उपचीय्यते 10. A's alt. D. H. अथ 11. A's alt. C. कर्तव्यः 12. D. मन्तव्य 13. A's alt. C. इति 14. C. पत्यसंभवे 15. E. यथया 16. A's alt. C. बध्यते । 17. C. पत्तिः 18. A's alt. C. पद्य 19. D. मुरजबन्धगो 20. A's alt. C. ग्रहइत्यनुज्ञायते 21. A's alt. C. ते । भास 22. D. शेषं । 23. H. इति । अत्राय 24. F. भूतं 25. D. रसेन आसम E. रसेन ■ सम 26. A. हताविहा (मा) निः । F. विभावानाशित 27. D. व्यामोहो C. मोहात्मा 28. A.C. सन् 29. D. भवि 30. A's alt. वादेन 31. Omitted in C. 32. Except A. all read विजिगीषा 33. C. सधर्मा 34. A. दिदिक्षु (दर्दिक्षु) । 35. A.C.F.H.I. दलबन्ध इति 36. F. दलादिषु च 37. C.D.F. वारिच ।

त्वम् । विदिग्दलेषु त्वन्यथा । कर्णिकाक्षरं तु श्लिष्टमेव ।

**उपमानोपमेययोः साधर्म्ये भेदाभेदतुल्यत्वे उपमा ॥११॥**

अर्थालङ्कारप्रकरणमिदम् । उपमानोपमेययोरित्यप्रतीतोपमानोपमेयनिषेधार्थम् । साधर्म्ये त्रयः प्रकाराः । भेदप्राधान्यं व्यतिरेकादिवत् । अभेदप्राधान्यं रूपकादिवत् । द्वयोस्तुल्यं यथास्याम् । यदाहुः—"यत्र किंचित्सा-

---

विदिक्षु, प्रथमाक्षरं कर्णिकायाम् । अथ[1] दलेषु द्वय द्वयमक्षराणां प्राग्दलात् प्रादक्षिण्येन[2] पाठः । दिग्दलेषु प्रवेशनिर्गमौ । अत्रायं निष्कर्षः—

कर्णिकाया लिखेदेकं द्वौ द्वौ दिक्षु विदिक्षु च ।
प्रवेशनिर्गमौ[3]दिक्षु पद्मबन्धो भवेदयम् ॥
आरोप्यलिपिवर्णानां साम्याद्वाचकवर्णता[4]म् ।
खड्गबन्धादिकं चित्रं काव्यालङ्कार इष्यते ॥इति॥

इति श्रीविद्याचक्रवर्तिकृतौ अलंकारसर्वस्वसञ्जीवन्यां[5] शब्दालङ्कारप्रकरणम् ॥

॥ अथार्थालङ्काराः ॥

तत्र सादृश्यविच्छित्तिविशेषे नानालङ्कारबीजभूता[6]मुपमा[7]मादौ लक्षयितुं सूत्रम्[8] । उपमानोमेययोस्साधर्म्ये भेदा[9]भेदतुल्यत्वे[10] उपमा । उपमीयते[11] साधर्म्यं [12]नयतीत्युपमानम् अप्राकरणिकोऽर्थः तच्च नियमेन अधिक[13]गुणमेव भवति गुणाधातृत्वात् । उपमीयते साधर्म्यं नीयते इत्युपमेयं प्राकरणिकोऽर्थः तच्च नियमेना[14]धेयगुणत्वात् न्यूनगुणमेव भवति । तयोर्यस्तुलित[15]भेदाभेदाश्च समानधर्माभिसम्बन्धः, स[16] उपमालङ्कार इति सूत्रार्थः । तदेतद् व्याचिख्यासु[17] प्रकरणविभागा[18]याह—अर्थालङ्कारेति ।

ननु साधर्म्यं नाम[19]तदुपमानोपमेययोरेव भवति । न कार्यकारणादिकयोः । इत्यम[20]पर्यवसान[21]सिद्धयोरनयोः किं शब्दोपादानेनेत्यत आह—उपमानोपमेययो[22]रिती[23]-त्यादि । सिद्धे सत्यारम्भोऽयं, प्रसिद्धयोरेवोपमानोपमेययोरलंकारत्वमिति नियमाय । अतो मेरुसर्षपादौ विवक्षया परिकल्पयितुं शक्योऽपि उपमानोपमेयभावो नालङ्कार-विषयः । अप्रतीतत्वा[24]दित्यनुसन्धेयम् । भेदाभेदेत्यस्य व्यावर्त्यं दर्शयितुं साधर्म्य[25]प्रकारा-न्विविनक्ति साधर्म्ये त्रय इत्यादि । व्यतिरेकवदिति[26] । "तत्र[27] तस्येवेति" वतिः । व्यतिरेकालङ्कारे यथेत्यर्थः । यथास्या[28]मिति । उदाहरिष्यत इति शेषः ।

---

1. D. य द्वयं दलेपुद्वयम 2. C. येन न पाठः 3. C. निर्गमो 4. C. वर्णतः । 5. A. C. D. जीविन्यां 6. A's alt. C. भूतामादौ 7. C. उपमां स 8. F. उपमेत्यादि 9. A. 'भेदाच्छेदे' 10. C. तुल्यत्वं 11. E. उपमिमीते 12. A's alt. नीयत 13. A. गुणकं 14. D. नियमेनाधिकगुणमेव भवति । 15. A. C. E. F. तुल्यित 16. Omitted in D. 17. C. व्याख्यासुः 18. F. विभागार्थं 19. C. नाममेतद् 20. C. अप्यवस्तान 21. D. omits न 22. D. 'मेययोरित्वा' 23. A. C. इतीति (प्रतीतोपमानोपमेयनिषेधार्थमिति) आह—सिद्धे 24. A.C.F.H.I. त्वादनु 25. C. धर्म— 26. H. इत्यादि 27. All mss. read तत्रेवेति 28. A.D.F. स्याद् ।

**मान्यं कश्चिच्च विशेषः स विषयः सदृशतायाः" इति। उपमैव च प्रकारवैचित्र्येणानेकालङ्कारबीजभूतेति प्रथमं निर्दिष्टा। अस्याश्च पूर्णालुप्तात्व-**

---

भेदाभेदतुल्य[1]त्व एवोपमा स्यादिति यदुक्तं तत्प्रामाणिकसंवादेन द्रढयितुमाह—यदाहुरित्यादि। भाष्यकृदा[2]दय इति[3] शेषः। सामान्यं साधर्म्यम्। विशेषो[4] वैधर्म्यम्। सदृशतायाः[5] उपमायाः; साधर्म्यवैधर्म्ययोः तुलया[6] वृत्ता[7]वुपमा[8] स्यादिति यावत्। यदेतदस्या उद्देशे[9] प्राथम्यं तत्र प्रयोजनं दर्शयति—उपमैव चेति। प्रकारवैचित्र्येणेति। तथाहि—मुखं चन्द्र इवेत्युपमा। मुखं मुखमिवेत्यनन्वयः[10]। मुखं चन्द्र इव स[11] तदिवेत्युपमेयोपमा। दृष्ट्वा मुखं चन्द्रमनुस्मरामीति[12] स्मरणम्। मुखमेव चन्द्र इति रूपकम्। मुखचन्द्रेण तापः शाम्यतीति परिणामः[13]। किं चन्द्र आहोस्विन्मुखम्[14] इति सन्देहः। मुखं[15] चन्द्र[16] इति चकोरा नन्दन्तीति भ्रान्तिमान्। चन्द्र[17] एव न मुखम् इति अपह्नुतिः[18]। नूनं[19] चन्द्र इवेत्युत्प्रेक्षा। चन्द्रं पश्येत्यतिशयोक्तिः। अस्यां प्रावृषि मुखं चन्द्रबिम्बञ्च विच्छायमित्येका तुल्ययोगिता। शरदि [20]रम्यमिति[21]त्वन्या। इदं च[22] तच्च[23] रम्यमिति दीपकम्। मुखमेव रम्यं[24] चन्द्र एव हृद्य इति [25]प्रतिवस्तूपमा। [26]भुवि मुखं दिवि चन्द्र[27] इति दृष्टान्तः। मुख[28]दूषणं [29]चन्द्रमसो मलिनीकरणमिति निदर्शना। चन्द्राद[30]धिकं मुखं, मुखादधिक[31]श्चन्द्र इति[32] व्यतिरेकः। चन्द्रेण सह मुखमिति सहोक्तिः। न[33] मुखेन विना चन्द्र[34] स्समीचीन इति विनोक्तिः। कलाभिरामं[35] मुखमिति समासोक्तिः। कलाभिरामौ मुखचन्द्राविति श्लेषः[36]। नमस्ते चन्द्र प्रसन्नोऽसि[37] इत्यप्रस्तुतप्रशंसा। मुखे दोषो[38] न दोषाय[39], नहीन्दो[40] निन्दायै कलङ्करेखेत्यर्थान्तरन्यासः। इत्थं स्वप्रकारवैचित्र्येण [41]सादृश्यविच्छित्तिविशेषात्मना यतो नानालङ्कारनिदानभूता, [42]अतोऽर्थालङ्कारेषु प्रथमं[43] निर्दिष्टेति यावत्।

स्थूलप्रभेदप्रथनभीरुत्वा[44]माविश्चिकीर्षुराह—अस्याश्च पूर्णेत्यादि। पूर्णालुप्तात्वे[45]

---

1. D. त्व यदा 2. C. कृदादिति 3. A's alt. इत्यर्थः। 4. A.C.H. विशेषं F. शेषो तत्र 5. A.H. तयोपमायाः C. तयोस्साधर्म्य 6. A.C.F.H.I. तुलनया 7. C. प्रवृत्ता 8. C. मानस्या 9. A's alt. उद्देश साधर्म्य C. उद्देशे साधर्म्य 10. D. अनन्वया 11. A's alt. C. H. चन्द्रो मुखमिव 12. A's alt. स्मरति 13. H. ग्रामालंकारः, 14. D.E. मुखपंत्र 15. Omitted in D. 16. C. चन्द्र ... कोशा नन्द 17. C. चन्द्रमिव 18. A's alt. अपह्नवः। C. अनुभवः 19. A. नन्दनात् मुखं मुखं चन्द्र C. H. मुखं चन्द्र D. आनं चन्द्र 20. A's alt. C. तथेदं रम्य 21. A's alt. C. इत्यन्या 22. H. omits च 23. D. तन्वरम्यं 24. D. रम्य 25. D. omits प्रति 26. D. omits भु 27. A. C. इयेति। 28. C. मुखं 29. A. C. चन्द्रमलि 30. C. D. अधिक मुखं 31. D. अधिकं 32. A's alt. E.F.H. इति च 33. D. omits न 34. A.C.F. चन्द्र इति। 35. A's alt. D. E. पूर्णं मुखं 36. D. शेषः। 37. C. प्रसीदोऽसि H. प्रसन्नो 38. H. दोषः, 39. D. E. H. I. दोषः, 40. A's alt. C. इन्दो निन्दा निन्दायै इत्य 41. A's alt. साधर्म्य 42. D. omits अतो 43. C. प्रथमनिर्दि 44. A's alt. भीरुत्वं 45. A's alt. C. H. 'लुप्ता चेत्यत्र'।

भेदाद् बहुविधत्वं चिरन्तनैरुक्तम्। तत्रापि साधारणधर्मस्य क्वचिदनुगामितयैकरूप्येण निर्देशः। क्वचिद् वस्तुप्रतिवस्तुभावेन पृथङ्निर्देशः। पृथङ्निर्देशे च संबन्धिभेदमात्रं प्रतिवस्तूपमावत्। बिम्बप्रतिबिम्बभावो वा दृष्टान्तवत्। क्रमेणोदाहरणानि—

---

त्यत्र भापितपुंस्कत्वाभावात् न पुंवद्भावः। संज्ञे हि खलूपमाया एते[1] पूर्णा लुप्ता चेति। तत्रोपमानोपमेयसाधारणधर्म[2]उपमाप्रतिपादकानां चतुर्णामपि[3] शब्दो[4]पादाने पूर्णा। एकस्य द्वयोस्त्रयाणां वा लोपे लुप्ता। अनयोर्भेदप्रभेद[5]वैचित्र्य[6]सहस्रमस्माभिः संप्रदाय[7]प्रकाशिन्यां काव्यप्रकाशबृहट्टी[8]कायां वितत्य[9] दर्शितम्। लघुटीकायां[10] च[11] [12]यथोपयोगमिति ततोऽवधार्यम्। अयं[13] पुनराचार्यैः सर्वस्यैवोपमाप्रपञ्चस्य अन्यैः अनुप[14]पादितचर[15]वैचित्र्यत्रयमुपपिपादयिपुराह—तत्रापि साधारणधर्मस्येत्यादि। अनुगामितया उभयाभिसंबन्धार्हतया। मुखं[16] चन्द्र इव हृद्यमित्येकेनैव रूपेण हृद्य[17]त्वादेस्साधारणधर्मस्य निर्देशः क्रियते इत्येकं वैचित्र्यम्। अथ वस्तुप्रतिवस्तुभावेन पृथङ् निर्देश इति द्वितीयम्। एकोऽर्थो वस्तुत्वेनोपमेयगतः[18] प्रतिवस्तुत्वेन निर्दिश्यत इति यावत्[19]। यदैवं पृथङ्निर्देशः, [20]तदावान्तरभेदोऽस्तीत्याह—पृथङ्निर्देशे[21]चेत्यादिना। सम्बन्धिभेदमात्रमिति। "वलितकन्धरमाननमावृतवृन्त[22]शतपत्रनिभम्" इत्यादौ हि[23] येन सह संबध्नाति साधारणो धर्मः स[24] सम्बन्धी, केवलं[25] भिन्नः[26] एकत्र कन्धरा अपरत्र वृन्तं तद्भे[27]दोपाधिना स्वयमभि[28]न्नोऽपि अभेदो धर्मो[29] भेदेन निर्दिष्टः। इदमेकं वैचित्र्यम्। प्रतिवस्तूपमावदिति। यथा प्रतिवस्तूपमायाम्। [30]अभिन्न[31]धर्मस्य भेदेन निर्देशो[32] न्यायो यस्स[33] इहापि संभवतीति यावत्। यदा पुनरंसार्पित[34]हारोऽयं [35]सनिर्झरो[36]द्रिर इवेत्यादौ [37]साधर्म्य[38] धर्मि[39]द्वारकं, तदा द्वयो[40]रैकात्म्य[41]भावात् न वस्तुप्रतिवस्तुभावः। अपि तु बिम्बप्रतिबिम्बभावनम् इत्याह—बिम्बप्रतिबिम्बभावो वेति। प्रतिबिम्बं प्रतिमा। हारनिर्झरादौ हि बिम्बप्रतिबिम्बनयेन साधर्म्यावगतिः। अत्र नये दृष्टान्ता-

---

1. A. इते 2. C. धर्मोपमा 3. H. अपि उपा 4. A. C. शब्दतोपा A's alt. शब्दे न 5. D. प्रभेदा 6. A's alt. C. वैचित्र्यात् 7. C. प्रकाशाप्रकाशि 8. D. 'दीपिका' 9. C. विधत्त इति द 10. C. 'दीपिकायां 11. A's alt. C. [illegible] 12. A's alt. C. यथायोग 13 H. [illegible] पुन 14. A's alt. अनुत्पादित 15. A's alt. C. D. चरं उप 16. 'मुख चन्द्र' 17. A's alt. D. H. हृद्यता 18. A. C. F. 'अन्योऽर्थस्तूपमानगत इति प्रति' 19. H. 'त् यदा पुनः' 20. E. 'तदवान्त' 21. A's alt. C. निर्देशश्च 22. A's alt. वृन्त 23. H omits हि 24. A. omits स० 25. A's alt. C. केवलो 26. A's alt. C. भिन्न एक 27. C. तद्भाव 28. C. अभितो 29. A's alt. C. धर्मभे 30 A's alt. C, सामान्यस्य धर्म 31. H. अभिन्नस्य 32. A's alt. निर्देशन्या 33. A's alt. E. H. अयं स 34. A's alt. C हारसनिर्धारो 35. A. omits स 36. F. रोगिरिरिति चेत्यादौ 37. D साहधर्म्य 38. C. धर्म्य 39. A. धर्म 40. A's alt. C. एकात्मता न D. E. एका H. एकात्म्य भावेन वस्तु 41. A. E. अभावात्,—

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥

---

लङ्कारं दृष्टान्तयति[1]—दृष्टान्तयदिति । [2]अत्रैतदाकूतम् । या यावती[3] संभ[4]वत्युपमा पूर्णा लुप्ता च[5] सप्रभेदप्रपञ्चा सा[6] सर्वैवास्म[7]दुपदर्शितेन वैचित्र्य[8]त्रयेण त्रिधा भवत इति[9] ।

प्रभामहत्येति । प्रभापेक्षया[10] महतीति कथनात् स्वापेक्षया तन्वीति [11]विवक्ष्यते । तदेतत्प्रभामहत्त्वं[12]दीपशिखापेक्षया देव्याः साधारणो धर्मः । उभे हि[13] खलु एते स्वापेक्षया तनीयस्यौ प्रभापेक्षया तु महत्यौ । एवं संस्कारवत्त्वं वागपेक्षया । तत्र वाचि संस्कारो व्याकृतिः, देव्यां तु निसर्गसिद्धदिव्यानुभाववासनानु[14]वृत्तिः । त्रिमार्गयेत्यत्र तु[15] साधारणधर्मः प्रतीयमानः । न चात्र प्रक्रमभेदः शङ्क्यः । [16]जगत्पावनत्वादेस्साधारण[17]-धर्मस्य उभयत्रा[18]पि सुप्रसिद्धतमस्य शब्दोपादाननिरपेक्षत्वात्[19] । इत्थं च सत्य[20]नुपात्तस्यापि साधारणधर्मस्यानु[21]गामितयैक[22]रूप्येण[23] निर्देश[24] उदाहृतो मन्तव्यः । यद्वा त्रिमार्ग[25]येत्येतदेव तन्त्रेण न्यायेन देवीविशेषण[26]तयापि सङ्गच्छते । तथाहि—त्रिवृत्करणादिवैदिकप्रक्रियानुसारेण[27] वा, [28]त्रैपुरवितान्त्रिकप्रक्रियानुसारेण वा देव्यास्त्रिमार्गत्वं प्रसिद्धमेव । हिमगिरेस्तु दीपत्रिदिव[29]मार्गमनीषिभिस्सह साधारणो[30] धर्मः [31]पूतत्वम् । विभूषितत्वं वा आद्यन्तवाक्यापेक्षया पूर्णोपमा । मध्यमवाक्यापेक्षया[32] लुप्तसाधारणधर्मा । तत्रापि[33] सा पूर्णैव वा[34] । सा[35] च मालारूपेणावस्थानान्मालोपमेत्यादि वैचित्र्यमनुसन्धेयम् ।

अथ वस्तुप्रतिवस्तुभावेनोदाहरति—यान्त्येति । मालतीविलाससाक्षात्कारोत्क्षुभितमन्मथस्य माधवस्ये[36]यमुक्तिः । यान्त्या उपवनात्पुरं प्रति करेणुकया गच्छन्त्या[37]

---

1. Omitted in D. 2. A's alt. अत्रेदं C. अत्रेदं 3. H. यायावती 4. A's alt. सद्भवत्युप C. सद्भवत्युप । 5. A's alt. C. H. च । सा 6. Omitted in D. 7. E. 'मद्दर्शि' 8. A's alt. C. वैचित्र्येण 9. H. ति । अत्रैक 10. C. 'प्रभापेक्षा' 11. D. लक्ष्यते 12. D. महत्त्वं 13. D. ह खल्वेते 14. D. omits. नु 15. Omitted in D. 16. D. जत्पावन 17. D. धारणे 18. D. यत्र प्रत सिद्ध E. 'यंत्र प्रसि' 19. C. पेक्षत्वादिकं च 20. D. E. मप्यार्थस्यानु 21. C. नानुमितेव 22. A's alt. एव 23. A's alt. C. रूपेण 24. Omitted in D. 25. D. मार्गयेत्येत 26. D. 'विशेपत' 27. A's alt. सरणेन C. सरणेव D. E. सरणेन 28. A's alt. ने त्रिपुर C. नेत्रपुर 29. A. C. H. दीप - 30. A. C. साधारण 31. A's alt. C. धर्मःपूत 32. D. E. [illegible] लुप्त 33. F. तत्रविधिपूर्णैव वा । सा 34. C. omits वा 35. A's alt. C. साऽपि च 36 A's alt. C. धवस्योक्तिः 37. A's alt. C. गच्छन्त्यस्यद ।

अत्र वलितत्वावृत्तत्वे संबन्धिभेदाद्भिन्ने। धर्म्यभिप्रायेण तु बिम्बप्रतिबिम्बत्वमेव।

पाण्ड्योऽयमंसार्पितलम्बहारः क्लृप्ताङ्गरागो हरिचन्दनेन।
आभाति बालातपरक्तसानुः सनिर्झरोद्गार इवाद्रिराजः॥

अत्र हाराङ्गरागयोर्निर्झरबालातपौ प्रतिबिम्बत्वेन निर्दिष्टौ।

## एकस्यैवोपमानोपमेयत्वेऽनन्वयः ॥१२॥

वाच्याभिप्रायेण पूर्वरूपावगमः। एकस्य तु विरुद्धधर्मसंसर्गो द्वितीयसब्रह्मचारिनिवृत्त्यर्थः। अत एवानन्वय इति योगोऽप्यत्र संभवति यथा—

---

सहचरीमंक्षापादिव्यपदेशेन वारंवारमप[1]वृत्तशिरोधरा[2], अत एव आवृत्त[3]वृन्तस्य कल[4]-हंसकर्ण[5]कण्डूयनादिना विवलित[6]बन्धनस्य कुशेशयस्य सदृशम् आननम् वहन्त्याः कटाक्षो मे हृदये निखातः। अपाङ्गे[7] निक्षिप्ता चक्षुःप्रभा स कटाक्षः, सः[8] कीलित इव। केन[9] प्रकारेण? गाढं परिचाल्याऽपि उत्कीलयितुं न शक्यते, यथा तथेति यावत्। कीदृक्कटाक्षः? अमृतेन दिग्धः लिप्तः, यतस्तदा जीवातुरभूत्। विषेण च दिग्धः यतस्सम्प्रति दहति। अत्रैक[10] एव [11]धर्मस्सम्बन्धिभेदेन वलितावृत्तशब्दाभ्यां वस्तुप्रतिवस्तुभावेन निर्दिष्टः।

वस्तुप्रतिवस्तुभावोऽयं धर्मापेक्ष एव। बिम्बप्रतिबिम्बभावस्तु धर्म्यपेक्ष इति व्यवस्थार्थ[12]माह—धर्म्य[13]भिप्रायेणेत्यादि। पाण्ड्योऽयमिति। हारनिर्झरादीनां [14]धर्मित्वाद्बिम्बप्रतिबिम्बभावः।

भेदाभेदतुलावृत्तौ साधर्म्यमुपमोच्यते।
धर्मविच्छित्तिवशतः त्रैविध्यमुपयाति सा॥

अनन्वयं सूत्रयति[15]—[16]एकस्यैवोपमानोपमेयत्वे[17] अनन्वयः। ननु[18] उपमेयत्वमुपमानत्वं च कथमेक[19]स्यैव सङ्गच्छत इत्याह[20]—वाच्याभिप्रायेणेत्यादि। पूर्वं[21] रूप[22]मुपमेयत्वं तदनुगमो वाच्याभिप्रायेण यत्तुत्तरपूर्वं[23] रूपमुपमानत्वं तदनुगमो व्यङ्ग्याभिप्रायेणेति यावत्। [24]नन्वेकत्र विरुद्धधर्मोपनिबन्धसम्य.[25] कोऽयं इत्यत आह—एकस्य तु[26]

---

1. A's alt. अप्रवृत्त D. आवृत्त 2. E. धरं— C. धराद् त एव 3. C. आवृत्तस्य 4. A's alt. C. कलभकर्ण 5. D. omits. कर्ण 6. A's alt. विचलित D. विषचक्षुः 7. C. अपाङ्गेन E. अपाङ्ग 8. A's alt. C. omit. स 9. A's alt. C. येनापि 10. A's alt. F. अत्र एक 11. A's alt. C. धर्मः वलि— 12. A's alt. C. स्थानार्थ 13. C. धर्म्यभि F. धर्माभि 14. A. C. F. धर्म 15. C. सूचयति। 16. A's alt. F. एकस्येति। ननु 17. C. त्वेन अन्वयः। 18. A. ननु च उपमानस्य यस्य मुपमानत्वं च। 19. A's alt. C. एकस्यैव D. omits इव, 20. A.E. इत्यत H. omits इति 21. C. 'पूर्वरूप' 22. All read 'रूपकमुप' 23. A.C.H. पूर्वरूप 24. A's alt. C. नन्वत्र 25. A's alt. C. धनलभ्य 26. Omitted in all except C.

युद्धेऽर्जुनोऽर्जुन इव प्रथितप्रतापो भीमोऽपि भीम इव वैरिषु भीमकर्मा ।
न्यग्रोधवर्तिनमयाधिपतिं कुरूणामुत्प्रासनार्थमिव जग्मतुरादरेण ॥

## द्वयोः पर्यायेण तस्मिन्नुपमेयोपमा ॥१३॥

तच्छब्देनोपमानोपमेयत्वप्रत्ययपरामर्शः । पर्यायो यौगपद्याभावः । अत एव त्वत्र वाक्यभेदः । इयं तु धर्मस्य साधारण्ये वस्तुप्रतिवस्तुनिर्देशे च द्विधा ज्ञाप्या यथा—

खमिव जलं जलमिव खं हंसश्चन्द्र इव हंस इव चन्द्रः ।
कुमुदाकारास्तारास्ताराकाराणि कुमुदानि ॥

---

विरुद्धेत्यादि । सब्रह्मचारी सदृशः । एवस्यैवोपमानोपमेयत्व[1]वृत्तिः सदृशान्तरसम्बन्ध-निवृत्त्यर्थमित्यर्थः[2] । यत इत्थं सदृशान्तरस्यानन्वयः अतस्संज्ञैव[3]अन्वर्थेत्याह—अत[4] एवानन्वय इत्यादि । योगः प्रवृत्तिनिमित्तम् । अपि शब्देन सदृशान्तरनिवृत्ति[5]रसमुचीयते[6] । युद्धेऽर्जुन[7] इति । [8]उत्प्रासनमभिप्रायपरिज्ञानम् । अत्र प्रथमार्जुनभीमशब्दौ वाच्यपरौ, चरमौ[9] तु व्यङ्ग्यपरौ ।

विरुद्धधर्मसं[10]सर्गस्तुल्यान्तरनिवृत्तये ।
[11]अतस्तदन्वयाभावात् भवेदयमनन्वयः ॥

अथ तृतीयसब्रह्मचारिनिवृत्तिफला[12]मुपमेयोपमां सूत्रयति—द्वयोः[13] पर्यायेण तस्मिन्नुपमेयोपमा । द्वयोरुपमानोपमेयभावविनिमये सत्युपमेयोपमालङ्कार इत्यर्थः । तदेतद्व्याचष्टे—तच्छब्देनेत्यादि । तच्छब्देनोप[14]मानोपमेयत्व[15]प्रत्ययपरामर्श इति वदता सन्निहितानन्वयप्रत्ययपरामर्शाशङ्का निवार्यते[16] । अनन्वयाद्वैधर्म्यान्तरं दर्शयितुमाह—पर्याय[17] इत्यादि । यौगपद्यमिहैकवाक्यानुप्रवेशः । तदभावाद्भिन्नवाक्यत्वमेवेत्याह—अतएवत्विति ।

अत्रायमाशयः । उपमेयमुद्देश्यम्, उपमानं तु विधेयम् । [18]इत्थं च सत्युपमानोपमेयभावव्यत्ययो वाक्यैकवाक्यतामन्तरेण न संभवति[19] । अनन्वये तु पदैकवाक्यतैवेति । अत्र बिम्बप्रतिबिम्बभावो न संभवति । भिन्नवाक्यत्वेन तन्निबन्धन[20]वैचित्र्यप्रतीतेः[21] । साधर्म्यनिबन्ध[22]नमन्यत्[23] । वैचित्र्य[24]द्वय[25] संभवतीत्याह—इयं तु[26] धर्मस्येत्यादि[27] । साधारण्यमैक्यरूप्येण निर्देशः । वस्तुप्रतिवस्तुभावस्तु प्रतीततरः[28] ।

---

1. D.E. omit त्व 2. A's alt. अर्थम् । यत 3. A's alt. C. 'अनन्वयेऽर्थत्वा' D.E. 'अन्वर्थिके' 4. C. अत्र A. अतः 5. A's alt. D.E.H. वृत्तिरपि खलु 6. C. ते । अत्र H. ते । विरु - H. omits from, युद्धे ... व्यङ्ग्यपरौ - 7. F. इत्येति 8. A.C. F. उत्प्रासनं D.E. उत्प्रास 9. D. परमौ 10. A's alt. C. सम्बन्ध 11. A's alt. यतः D.E. ततः 12. A's alt. परो C. परत्वं H. फलं 13 A's alt. F. द्वयोरिति । 14. D. उपमेय 15. C. omits त्व 16 A's alt. C. निवृत्तये- 17. D. पर्यायेण- 18. H. एवं 19. D. ति । भिन्न 20. A's alt. बन्धनात् D. बन्धना 21. C. प्रतीयते । 22. D. बन्धनो 23. A.D.H. 'अन्यत्त' C. अन्यत्तु 24. E. वैचित्र्यं 25. C. द्वय 26. Omitted in all except D. 27. D. आदिना 28. C.H. चरम् ।

द्वितीया यथा—

सच्छायाम्भोजवदनाः सच्छायवदनाम्बुजाः ।
वाप्योऽङ्गना इवाभान्ति यत्र वाप्य इवाङ्गनाः ॥

सदृशानुभवाद्वस्त्वन्तरस्मृतिः स्मरणम् ॥१४॥

वस्त्वन्तर सदृशमेव । अविनाभावाभावान्नानुमानम् । यथा—

अतिशयितसुरासुरप्रभाव शिशुमवलोक्य तवैव तुल्यरूपम् ।
कुशिकसुतमखद्विषा प्रमाथे धृतधनुष रघुनन्दन स्मरामि ॥

सादृश्य विना तु स्मृतिर्नायमलङ्कार. । यथा—

अत्रानुगोद मृगयानिवृत्तस्तरङ्गवातेन विनीतखेद ।
रहस्त्वदुत्सङ्गनिषण्णमूर्धा स्मरामि वानीरगृहेषु सुप्त. ॥‡

---

त्वमिवेति । अत्र प्रतीयमानस्य नैर्मल्यधर्मस्यानुगामित्वेन साधारण्यम् । सच्छायेति । छाया, शोभा अत्र सच्छायत्व सम्बन्धि[1]भेदाद्भिन्नम् ।

उपमानोपमेयत्व[2]व्यत्ययो[3] न क्रम विना ।
उपमेयोपमा तेन वाक्यभेदैक[4]गोचरा[5] ॥

अथ स्मरण सूत्रयति[6]—सदृशा[7]नुभवा[8]द्वस्त्वन्तरस्मृतिस्स्मरणम् । सदृशानुभवात् सदृशान्तरस्मरण स्मरणालङ्कार । व्याचष्टे—वस्त्वन्तरमिति । सदृश[9] समभिव्याहारा द्वस्त्वन्तरसदृशमेवेति भाव ।

द्विष्ठस्य धर्मस्य एकत्र[10] स्यास्नो प्रतियोग्यपेक्षामन्तरेण [11]अनुपरमादनुमानवैध-[12]र्म्यमाह—अविनाभावे[13]त्यादि । अविनाभावो व्याप्ति । नहि गवादिदर्शने नियमेन गवयादि[14]सदृशान्तर[15]स्मरणमस्ति । तादात्म्यतदुत्पत्त्योरन्यतराभावेना[16]लिङ्गत्वात् । अतिशयितेति । [17]इय योद्धुकाम लवमालोक्य सकौतुकस्य सुतस्य चन्द्रकेतु प्रत्युक्ति[18] । तवैव[19] तुल्यरूपमिति सदृशानुभवो[20]द्घाट[21]नम् । असा[22]दृश्यहेतुका स्मृतिर्न स्मरणालङ्कार

---

1. C कन्ध- 2. H 'भेयर्च' 3. A's alt C H व्यत्ययेन 4. A's alt C. भेदेन 5. A गोचरास्त ममभि 6. D सूचय 7. F सदृशेति । 8. D 'भवस्तु अन्तर' 9. D सदृश अभि' 10. A's alt अनवस्थानात् D अनवस्थेसा E. अवस्था F अन वस्यास्नो 11. C अनुपम 12. D धर्मार्य 13. A.C इति 14. A's alt B C. F गवादि 15. C. अन्तरं 16. H भावात् 17. Omitted in C. 18. A's alt C H उक्ते 19. A's alt C सर्वेव D E.F H.I तर्यैव 20. A C D भाव 21. न सादृश्य 22. F omits सा ।

‡ The normal reading is सुप्त but the variant सुप्ति is also found which, however, seems to have been brought about under the *supposition of a grammatical difficulty in the quite idiomatic usage* स्मरामि वानीरगृहेषु सुप्त । So for as Vidyacakravartin himself is concerned the word सुप्ति *is used in the* course *of his explanation* but

अत्र च कर्तृविशेषणानां स्मर्तव्यदशाभावित्वे स्मर्तृदशाभावित्वमसमीचीनम्। प्रेयोऽलङ्कारस्य तु सादृश्यव्यतिरिक्तनिमित्तोत्थापिता स्मृतिविषयः। यथा "अहो कोपेऽपि कान्तं मुखम्" इति। तत्रापि विभावाद्यापूरितत्वे, न स्वशब्दमात्रप्रतिपाद्यत्वे यथा—"अत्रानुगोदम्" इत्यादि।

---

इत्याह—सादृश्यं विना त्विति[1]। प्रत्युदाहरति—अत्रानुगोदमिति[2]। अत्र हि पूर्वानु-[3]भूतार्थदर्शनादेव स्मृतिः न तु सदृशानुभवात्[4]। प्रसङ्गात्[5] गूढमभवन्मतयोग[6]दोषमु[7]-द्घाट[8]यति—अत्र च कर्तृविशेषणानामित्यादि। मृगया[9]दशाभाविकर्तृ[10]विशेषणानां स्मरामीति[11] स्मरणक्रियाकर्तुर्दाशरथेर्विशेषणानां मृगयानि[12]वृत्त्यादीनां स्मर्तव्यदशाभावित्वेऽनुभूतचरत्वात्। स्मर्तव्यमृगयादशाभावित्वे युक्ते[13] स्मर्तृदशाभावित्व[14] मृगयानिवृत्ति[15] स्मरामीति स्मरणकालभावित्वमसमीचीनम्। नहि मृगयानिवृत्त्यपनीतखेदत्वा[16]दिविशिष्टस्मृतिः[17]। किन्तु मृगयानिवृत्त्यादिकं स्मर्तव्यमुक्तिविशेषण[18]मत इष्टार्थोऽपि[19] न भवतीत्यभवन्मतयोगाख्योऽयं दोषः।

ननु यदि प्रेयोऽलङ्कारो[20] रतिभावात्मक, न तदा स्मृतिः। यदा[21] तु व्यभिचारिभावात्मकस्तदा स्मृतिरूपोऽपि कदाचित्सम्भवति। ततोऽस्य स्मरणालङ्कारस्य किं वैधर्म्यमित्यत आह—प्रेयोऽलङ्कारस्य त्वित्यादि। उदाहृत्य दर्शयति—अहो कोपेऽपि कान्तं मुखमित्यादि[22]। अत्रा[23]भिनिविष्टस्य नायकस्य प्रियानुरागसंस्काराणां संस्कारान्तराभिभाव[24]-कतया भूयो[25]भूयस्स[26]मुद्बुध्यमानाना महिम्नैव स्मृतिः, नहि सदृशानुभवात्। वैधर्म्यान्तर-[27]मुद्भावयति—तत्रापि विभावेत्यादि। विभावानुभावा[28]दिभिः यदा स्मृतिर्व्यज्यते, तदैव हि भावालङ्कारः।

---

1. C. ति। स्मृतिस्मा 2. C. ति। पूर्व 3. A.C.F.H.I.भवार्थ 4. C. भवात्। गूढ 5. D. उपसङ्गात् 6. D. योगमदोषमुद्घाटभाव 7. Except C. all read उद्भावयति E. दोषमत्यु— 8. A's alt C. उद्भास 9. A's alt C. मृगया 10. A.C.H. कर्म 11. A's alt C. स्मरती 12. All Mss. omi नि 13. A's alt C. युक्तं 14. A's alt. C. भावित्वे 15. Except C. all read निवृत्त E. निवृत्त 16. D. त्वादिकं स्मर्तव्य सुस- 17. E. स्मरति 18. A's alt विशेषण मेव अतः। E. षणमेव अतः। 19. C. omits अपि 20. A's alt C. यदा रति। 21. C. यदा स्मृति। 22. D. E. इति। 23. D. E. अत्रात्यभि 24. A's alt C. भावुकः। 25. C. omits भूयो D. भूतो 26. A's alt C. सम्बध्यमाना D. सम्बन्ध्यमाना 27. A's alt D. मप्युद्भा 28. E. भावादीनां।

that does not justify taking it as a variant. For, in his anuvāda of the first pada, he says more than once मृगयानिवृत्ति; and on that score we may not be justified in restoring the reading अत्रानुगोदं मृगयानिवृत्ति. The correct explanation of the nominative usage सुप्तः is given by Mallinātha.

यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि
स्फीतासृग्वसुतिपाटलीकृतपुरोभागः परान्पातयन् ।
तेषां दुस्सहकालदेहदहनप्रोद्भूतनेत्रानल-
ज्वालालीभरभासुरे स्मररिपावस्तं गतं कौतुकम् ॥

इत्यादौ सदृशवस्त्वन्तराभावे अशक्यवस्त्वन्तरकरणात्मा विशेषालङ्कारः। करणस्य क्रियासामान्यात्मनो दर्शनेऽपि संभवात्। मतान्तरे काव्यलिङ्गमेतत्।

---

यैर्दृष्टो[1]ऽसीति । प्रासप्रहारनेत्रयो[2]रसृक्[3]सुत्यनलज्वालयो पर[4]पातनकाल[5]दहनयो.[6] नायकस्म[7]ररिप्वो[8]श्च सादृश्य विवक्ष्यते । अत्र योऽयं सदृशवस्त्वन्तरानुभवो यैर्दृष्टो[9]ऽसीति निर्दिष्ट. । नासौ[10] स्मररिपुस्मरणजननात्स्मरणालङ्कारः कि[11]न्त्व[12]शक्यस्मररिपुदर्शनकौतुका[13]स्तमयरूपार्थान्तरकरणात्मा विशेषालङ्कार.[14] । एतद्दर्शनेन तदपि सिद्धमिति प्रतीतेः । नन्वशक्यवस्त्वन्तरकरण विशेषालङ्कारस्य लक्षण, इह तु करण[15] नोपलभामह इत्यत आह—करण[16]स्येत्यादि । कृञ्भ्व[17]स्त्यर्थाना सर्वधात्वनुयायित्वात् क्रियाया[18]स्सामान्यात्मा करोत्यर्थ[19] दर्शनेऽपि[20] सम[21]वति[22] ।

यदुक्तमस्माभिः प्रयोग[23]दीपिकायाम् ।

"[24]तेऽस्त्यर्था धातवो[25] ज्ञेया य[26] उदासीनकर्तृकाः ।
विकुर्वाणप्रयुञ्जानकर्तृका भूकृञ[27]र्थका." ॥ इति ॥

येषा कर्तार[28] उदासते तेऽ[29]स्त्यर्था । येषा[30] विकुर्वते ते भवत्यर्थाः । येषा तु प्रयुञ्जते ते करोत्यर्था । अतो[31] इह प्रयुञ्जानकर्तृ[32]कत्वात् करोत्यर्थ एवेति सिद्धम् । ननु स्म[33]ररिपुदर्शनकौतुकास्त[34]मये प्रकृतनायकदर्शन हेतुरिति काव्यलिङ्ग किं न स्यादित्यत आह—मतान्तर इत्यादि । अस्मद्दर्शने विशेषालङ्कारः, मता[35]न्तरे काव्यलिङ्ग[36], स्मरण तु सर्वत्र न[37] भवतीति भाव । काव्यलिङ्गत्वाभावे अशक्यकरणात्मा विच्छित्तिविशेषहेतु[38] ।

---

1 A. दृष्टा(दृष्टो)सीति । C. रयोऽस्दृष्टासीति । 2. A's alt नेत्रस्रक C नेत्र स्रक । 3. C. सृत्या 4 A.C.F. 'परि' 5. A's alt काम 6. C. न नाय 7. D. स्मृ से· ऋरिपोश्च 8. C. रिप्वोः D स्मररिपुस्मरण 9. A's alt 'दृष्टो भवसि' 10. C. नासौ स्मरण 11. C. किन्त्व 12. D omits अ 13. A's alt C. 'कौतुकार्यरूपा' 14. D. अलंकारः 15 A's alt C. करणयोरूप 16. D. कारण 17. A. F. कृद्भ्वस्त्य C. कन ' ' ' यर्थ D. कृद्स्त्यर्था E. कृत्वस्त्यर्थ 18 D. क्रियात्मा 19. C. अर्था 20. All except C. read अपि न 21. A's alt संभवात् 22. Except C. all read संभवति इति । 23. A.F. 'गुसदीपि' 24. A's alt स्थेऽस्य 25. C. यावन्तो 26. A's alt C. यदुदा 27. A's alt C. कृदः, F कृत्य 28. Except E. all read कर्ता 29. A.C. ते भवत्य ? 30. C. येषां तु प्रयु 31. A's alt अतोऽत्र अप्रयु- C. अतोऽत्र प्रयु- 32. F. omits कर्तृ 33. A's alt C. पुर 34. A's alt कौतुकात् सम C. 'कौतुकार्थ म'—35 A. F तु काव्य 36. C. लिङ्गस्मर 37. F. न भवात् 38. C. D. E. 'विशेष एव हे' ।

तदेते सादृश्याश्रयेण भेदाभेदतुल्यत्वेनालङ्कारा निर्णीताः । संप्रत्यभेदप्राधान्ये कथ्यन्ते—

**अभेदप्राधान्य आरोप आरोपविषयानपह्नवे रूपकम् ॥१५॥**

अभेदस्य प्राधान्याद्भेदस्य वस्तुतस्सद्भावः । आरोपोऽन्यत्रान्यावापः । तस्य विषयविषय्यवष्टब्धत्वाद्विषयापह्नवेऽपह्नुतिः । अन्यथा तु विषयिणा विषयस्य रूपवतः करणाद्रूपकम् । साधर्म्यं त्वनुगतमेव । यदाहुः—"उपमैव तिरोभूतभेदा रूपकमिष्यते" इति । आरोपादभेदेनाध्यवसायः प्रकृष्यते इति

---

स्मृतिस्सा स्मर्यते यत्र सदृशात्सदृशान्तरम् ।
असादृश्यादवाच्यत्वादितः प्रेयान्विभिद्यते ॥

इत्थं भेदाभेदतुल्यत्वेऽलङ्कारान्वि[1]विच्य अभेदप्राधान्यमधिचिकीर्षुराह—तदेते सादृश्येत्यादि । तत्राप्या[2]रोपमूलालङ्काराणां बीजभूतं रूपकमादौ सूत्रयति—[3]अभेदप्राधान्य[4] आरोप[5] आरोपविषयान[6]पह्नवे रूपकम् । 'मुखमेव चन्द्र[7]' इत्यादौ हि[8] साधर्म्यम[9]भेदप्राधान्यम् । चन्द्रत्वाद्यारो[10]पस्य यो विषयो मुखादिः तस्यानपह्नवश्च[11] रूपकालङ्कार इति सूत्रार्थः । तदेतद्व्याचष्टे—अभेदस्येत्यादि । भेदस्य वस्तुतस्सद्भाव[12] इत्यतिशयोक्तितो वैधर्म्यं[13] दर्शितम् ।

अथारोप[14]शब्दार्थं विवृण्वन् व्युदसनीयविषयविवेचनपुरस्कारेण विषयमस्य विवेचयति—आरोपोऽन्यत्रान्येति[15] । अन्यत्र हि मुखादौ अन्यस्य चन्द्रा[16]देरध्यवसान[17]मारोपः । स च द्विष्ठत्वात् विषयिणा विषयेण चावष्टभ्यते । इत्थं द्वौ शब्दौ[18] सिद्धौ । यथा[19] चन्द्र एव न[20] मुखमिति विषयस्यापह्नवः तदापह्नुत्यलङ्कारः । अन[21]पह्नवे तु रूपकमिति विभाग.[22] ।

लक्ष्यपदं निर्वक्ति—विषयिणा विषयस्य रूपवतः करणा[23]दिति । विषयी विषय स्वेन रूपेण रूपवन्तं करोतीति[24] रूपकमित्यर्थः[25] । उपमातः प्रभृति[26] साधर्म्याधिकारम् अनुस्मारयति—साधर्म्यं त्वित्यादि । तत्रार्थे संवादा[27]याह—उपमैवेत्यादि[28] । तिरोभूतभेदा नत्वपह्नुतभेदा । आरोपमूलस्याध्यवसायमूले[29]भ्य उत्प्रेक्षादिभ्यो निर्देश[30]प्राथम्यं[31] न्याय[32]तोऽवस्थापयति—आरोपादभेदेनेत्यादि । प्रकृष्यते । अतिसादृश्यप्रत्यायनाद्-

---

1. A's alt C. H. विचार्य 2. A's alt C. आरोप्य D. व्यारोप 3. A's alt F. अभेदेत्यादि । 4. A. प्राधान्यं 5 A. आरोप्य D. आरोपस्य यो 6. A. विषयाप 7. C. चन्द्रं 8. H. हि अभेद 9. A's alt भेद 10. C. आरोपकस्य 11. A's alt D.E F.H.I. अपह्नवरू 12. C. भावः 13. A's alt C. वैलक्षण्यं 14. C. आरोपित 15. H. इति हि 16. Except C. all read 'चन्द्रत्वादे'- 17. A.C.F.H. अध्यसनं- E. अध्या- 18. A's alt E. शब्दसिद्धौ 19. H. यथा 20. Omitted in H. 21. A's alt अनह्नुते C. अपह्नवे 22. D. विभागा 23. A's alt C. करणाद्विषयी 24. A's alt C. इत्यर्थ 25. H. अर्थः । तद्भेद 26. A.F. प्रभृति 27. C. संपादा 28. E. इति । 29. C. कूले 30. E. निर्देशे 31. C. प्राधम्यं 32. C. न्याय्यतो ।

पश्चात्तन्मूलालंकारविभागः । इदं च निरवयवं सावयवं परम्परितं चेति प्रथमं त्रिविधम् । आद्यं केवलं मालारूपकं चेति द्विधा । द्वितीयं समस्तवस्तुविषयमेकदेशविवर्ति चेति द्विधैव । तृतीयं तु श्लिष्टाश्लिष्टशब्दनिबन्धनत्वेन द्विविधं सत्प्रत्येकं केवलमालारूपकत्वाच्चतुर्विधम् । तदेवमष्टौ रूपकभेदाः ।

---

सस्य प्रत्या[1]सन्नोपकारी भवतीत्यर्थ[2]। इतिर्हेतौ[3]। यत इत्थमभेदेनाध्यवसायः प्रकृप्यते, अतस्तन्मूलालङ्काराणा विभजन पश्चात्करिष्यत इति शेष । अत्रेद[4]मनुसन्धेयम् । इह[5] यावानलङ्कारवर्गो विवेचयिष्यते, विवेचितचरश्च[6], स सर्व[7]श्चैव (तस्य सर्वस्यैव ?) अत्र रस ( ध्वनि ?) [8]प्रत्यासन्नोपकारिता[9] पुनराराादुपकारिता[10]। तत्र यद्यपि प्रत्यासन्नोपकारिणा[11] प्राधान्य, तथापि तेषा [12]सूक्ष्मतरत्वात् स्थूलालङ्कारपुरस्कारेण व्युत्पादनमिति ।

*तद्भेदा[13]नाह—इदञ्च निरवयवमि[14]त्यादि[15]। परम्परित परम्परायातम्। प्रथम[16]-* ग्रहण [17]प्रभेदान्तरप्रथनोपोद्घात । निरवयवस्य द्वै[18]विध्य दर्शयति—आद्यमित्यादि । केवल सहचर[19]रूपकान्तर[20]रहित[21] मालारूपक नानारूपकसाहचर्यावस्थम् । सावयवस्य द्वैविध्यमाह—द्वितीयं समस्तेत्यादि । वस्तुशब्दोऽत्र पदा[22]र्थवचन । समस्तानि निरवशेषाणि विशेषण[23]विशेष्यात्मकानि वस्तूनि[24] विषयो यस्य तत् समस्तवस्तुविषयम् । यत्पुन विशेषणाशे कश्चिन्न क्रियते विशेष[25]णाशान्तरे विशेष्ये च क्रियते तदेकदेश एव[26] विशिष्य[27]वर्तनादेकदेशविवर्ति । परम्परित तु[28] चतुर्धे[29]त्याह—तृतीयं तु श्लिष्टाश्लिष्टेत्यादि । [30]श्लिष्टशब्दम् अश्लि[31]ष्टशब्द चेति द्वैरूप्यमनुप्रपञ्च प्रतिस्व[32] केवल मालारूप चेति प्रयत इत्यर्थ । भेदचर्चा[33] निगमयति—तदेवमष्टाविति । केवल[34]निरवयव, मालानिरवयव, समस्तवस्तुविषय[35] सावयवम्, एकदेशविवर्ति सावयव, श्लिष्टशब्द[36]केवलपरम्परितं, श्लिष्टशब्द[37]मालापरम्परितम्, अश्लिष्टशब्द[38]केवलपरम्परितम्, अश्लिष्टशब्द[39]मालापरम्परित

---

1 C आसन्नोप 2 A D. E. F. H. I. अर्थः इति । इ 3 A D.F.H इति हे 4. A's alt D अत्रैत E. अत्रैतदनु 5 Except D. all read यो यावा 6. D. रसश्च 7. A's alt. C. D E. सर्वत्र 8. Except C. all read रसं प्रत्युत्तरोत्तरं ■ 9. A's alt कारिता C. उपकार 10 Except C. all read 'कारिता पूर्वपूर्वं तु' D. उपकारिता A's alt उपकारित 11. C कारिणा 12 Except C all read सूक्ष्मसू 13 A's alt C. omit तत् 14 A's alt इति आदि । 15. D. E. आदि निरवयव विशेष्यमात्रमिदं सावयवं विशेष्यविशेषणोभयमिदं । पर 16. Except D. all read प्रथम 17. E. omit प्र E F प्रधानोप 18 C. वैविध्यं D. प्राधान्यं 19. A's alt चरित 20. E. अन्तरे हि तन्माला 21. A's alt रहित 22. D. धर्मार्थ 23 D 'वैशिष्ट्यात्म' 24. Omitted in F 25 H विनेषणान्तरे- 26 Omitted in D E 27. C विवर्तना 28 Omitted in C 29 A's alt चतुर्धा—A. C. D. F. H I चतुर्थे । श्- 30. C. 'शिष्टाशिष्टे' 31. C. शिष्ट 32. A's alt C.H. स्वयं 33. D चर्चा 34. D. केवल 35. C विषये 36. Except C. all read शब्दं D. शब्दं शिष्ट 37. A's alt D. E. शब्द C. शब्दमात्मा 38. A's alt E शब्द 39. A's alt शब्दं ।

अन्ये तु प्रत्येकं वाक्योक्तसमासोक्तादिभेदाः संभवन्ति, तेऽन्यतो द्रष्टव्याः। क्रमेण यथा—

दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि ! नास्मि दूये।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यत्खिद्यते तव पदं ननु सा व्यथा मे॥
पीयूषप्रसृतिर्नवा मखभुजां दात्रं तमोलूनये
स्वर्गङ्गा विमनस्ककोकवदनत्रस्ता मृणालीलता।
द्विर्भावः स्मरकार्मुकस्य किमपि प्राणेश्वरीलागसा-
माशातन्तुरुदञ्चति प्रतिपदि प्रालेयभानोस्तनुः॥
विस्तारशालिनि नभस्तलपत्रपात्रे कुन्दोज्ज्वलप्रभभसञ्चयभूरिभक्तम्
गङ्गातरङ्गघनमाहिषदुग्धदिग्धं जग्धं मया नरपते ! कलिकालकर्ण !॥
आभाति ते क्षितिभृतः क्षणदा प्रभेयं निस्त्रिंशमांसलतमालवनान्तलेखा।
इन्दुर्दिवषो युधि हठेन तवारिकीर्तीरानीय यत्र रमते तरुणः प्रतापः॥
क्षितिभृत इत्यत्र श्लिष्टशब्दपरम्परितम्।

---

चेति। यदा तु विशेषणांश[1]रूपणबलादेव विशेष्ये[2] रूपकमर्थादव[3]गम्यते, तदा समासोक्ति[4] रूपकम्। यद्वा समा[5]सेनोक्तम्। एवमादिभेदाः[6] स्थूलतया न प्रतन्यन्त[7] इति आह—अन्येत्वित्यादि[8]।

दास इति। अस्मीत्यहमर्थे निपातः। अत्र पुलकाङ्कुराणां कण्टक[9]त्वेन निरव[10]यवरूपणं। तत्र[11] रूपकान्तर-साहचर्याभावात् केवलम्।

पीयूषप्रसृति[12]रिति। दात्रं लवित्रं, लूनि[13]र्लवनं। विमनस्कत्वं[14] निशि विरहेण द्विर्भावो द्वि[15]रुदयः एतन्मालानिरवयवम्। विस्तारशालिनीति। पत्र[16]पात्रं पलाशोपरचितममत्रं, भानि[17] ताराः। भक्तम् अन्नं, घनं भृतम्। अत्र ग्राम्यजनोक्तौ समस्तपदार्थविषयत्वात् समस्तवस्तुविषयं सावयव[18] रूपकम्।

आभातीति। क्षितिभृद्राजा स एव क्षितिभृत् शैलः[19]। निस्त्रिंशः खड्गः[20] स एव तमाल[21]वनान्तलेखा[22]। अत्र कीर्तीनां[23] हठहृत[24]महिलात्वमर्थाद् प्रतीयत इति एकदेश विवर्ति[25] सावयवम्। क्षितिभृत इत्यंशे तु संकरः इत्यभिप्रायेणाह—क्षितिभृत इत्यत्रेत्यादि[26]।

---

1. A. C. F. रूपेण 2. C. विशेष्य रूपकत्वादर्थां 3. A's alt आपतति, 4. D. E. उक्तं 5. H. समासोक्तमेव। 6. H. भेदान् 7. A. C. F. H. 'प्रकाश्यन्त' 8. H. आदि—यत्वभेद। 9. C. कण्ठत्वेन 10. D. E. निरवयवं 11. A. D. F. अन्यच्च E. तत्र 12. E. प्रसृतिभिरि 13. C. लभूनिधलवनं 14. A's alt C. F. H. वा निशि 15. C. द्विरुदय 16. A. पत्रं C. पत्रो 17. C. भानितरार्भकत्वं 18. C. सावयव 19. C. omits शैलः 20. D. omits खड्गः 21. D. लतावन 22. D. वनान्तालेखाः 23. C. कीर्ति 24. F. भृत C. संभृत। 25. A. C. F. H. विवर्तिरूपकं साव 26. C. आदि। अत्र।

किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥

अत्र वक्त्रेन्दुरूपणहेतुकं पीयूषस्याधरामृतेन श्लिष्टशब्देन रूपणम् ।

विद्वन्मानसहंस ! वैरिकमलासङ्कोचदीप्तद्युते !
दुर्गामार्गणनीललोहित ! समित्स्वीकारवैश्वानर !
सत्यप्रीतिविधानदक्ष ! विजयप्राग्भावभीम ! प्रभो !
साम्राज्यं वरवीर ! वत्सरशतं वैरिञ्चमुच्चैः क्रियाः ॥

किं पद्मस्ये[1]त्यादि । अत्र न हन्ति किमित्यादौ नञा[2] प्रथमतो हननादिनिषेध किमिति काक्वा[3] निराक्रियते । अतो हन्त्ये[4]वेत्याद्यर्थः सम्पद्यते । अत्र वक्त्रेन्दुरिति रूपणम् यस्येन्दुनिष्ठस्य पीयूषस्य हेतु तद[5]धरामृतेन सह श्लिष्टम् । इतरथा[6] तदपीहास्तीत्युपन्या[7]सः कथं सङ्गच्छते । अत इन्दुरूपणद्वारा भातत्वात् परम्परितं केवलं च । तदेतद्दर्शयितुमाह—*अत्र [8]वक्त्रेन्दुरूप[9]णेत्यादि ।

विद्वन्मानसहंस इति । विदुषां मानसमेव मानसं तत्र हंस[10], वैरिणां कमलाया. लक्ष्म्या. सङ्कोच एव कमलानामसङ्कोचः । तत्र दीप्त[11]द्युते गभस्तिमालिन् । दुर्गाणां नदीशैला[12]दि परिक्षेपवतामावासानां मार्गणमन्वेषणम्[13] । तदभाव एव दुर्गायाः कात्यायिन्या मार्गणं तत्र[14] नीललोहितः । [15]समितः संग्रामाः ता एव समिध[16] एधांसि तत्स्वीकारे वैश्वानर.[17] । सत्ये प्रीतिरेव । सत्या[18] दाक्षायिण्याम् । [19]अप्रीतिस्तद्विधाने । दक्ष·

1 F इति 2 A.C. नासौ A's alt नाञा 3. A's alt C. वाक्यात् 4. Except E all read इत्यर्थः । 5. A's alt C. तदासारा 6. A.F.H. इतरथा 7. A's alt C उपहासः 8. A. Except E all omit वक्त्र 9. Except D. all read रूपेण 10.D. हंसा वै वैकरिणां 11. E. दीप्र 12. C. omits आदि 13. D. omits णं 14. D. तत्रा नील 15 D. स्मितः 16. D समिधाः 17. E. नर 18. C सन्त्या 19. A.C.F.H. omit अ ।

* The N. S edition reads the text as अत्र वक्त्रेण रूपणमहेतुकम् । पीयूषेणाधरामृतस्य श्लिष्टशब्दं रूपणम् । *Evidently the reading* अहेतुक *is a mistake.* But the above second sentence is read as पीयूषस्याधरामृतेन श्लिष्टशब्देन रूपण by both Samudrabandha and Vidyācakravartin Jayaratha (p 47) criticises the latter reading as a scribe's error. But both the readings could be justified. While the former specifically mentions the superimpositions of the non-contextual moon and the nectar on the contextual face and adharāmṛta, the latter refers to their superimpositions in a general manner. Jayaratha wrongly uses the word निरूपणं instead of रूपणं throughout in the explanation of the passage

अत्र त्वमेव हंस इत्यारोपणपूर्वको मानसमेव मानसमित्याद्यारोप इति श्लिष्टशब्दमालापरम्परितम् ।

यामि मनोवाक्कायैः शरणं करुणात्मकं जगन्नाथम् ।
जन्मजरामरणार्णवतरणतरण्डं हराङ्घ्रियुगम् ॥
पर्यङ्को राजलक्ष्म्या हरितमणिमयः पौरुषाब्धेस्तरङ्गो
भग्नप्रत्यर्थिवंशोल्बण-विजयकरिस्त्यान - दानाम्बुपट्टः ।
संग्रामत्रास-ताम्यन्मुरलपतियशोहंस नीलाम्बुवाहः
खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य ॥

अत्र क्ष्मासौविदल्ल इति परम्परितमप्येकदेशविवर्ति । एवमादयोऽपि भेदाः लेशतः सूचिता एव । इदं च वैधर्म्येणापि दृश्यते । यथा—

सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।

---

दक्षप्रजापतिः विजये[1] प्राग्भावोऽग्रे[2]सरता स एव विजयादर्जुनात्प्राग्भाव.[3] पुरोजन्म तत्र भीम ! वत्सरशत[4]मित्यन्तसंयोगे द्वितीया । क्रिया. कुरु[5] । अत्र[6] विदुषा मानसे[7] त्वं हंस इति प्रतीतौ[8] कथमस्य हंसत्वमिति विमर्शो जातो, मानसपदे[9] श्लेषमवगमयति । तथाऽवगमितेन श्लेषेण हंसत्वमेव व्यवतिष्ठत इति श्लिष्टशब्द[10]परंपरितम् । तच्च मालारूपम् । तदिदम[11]भि[12]सन्धायाह—अत्र त्वमेवेत्यादि । समर्थत्वभयावहत्वलक्षणयोरर्थयोराभासनमात्रमेवेति न विरोधः । यद्वा तत्र अंशे श्लेष[13] एवास्तु । दक्षभीमपदयोः श्लेष एव प्रतीतिविश्रान्तः[14] अंशान्तर[15]मिहोदाहरणमिति सर्वमवदातम् ।

यामीति । तरण्ड[16] प्लवः । अत्र[17]तर[18]ण्डत्व[19]रूपणसिद्धिः । जन्मजरामरणानामर्णवत्वरूपणा[20]यत्ते[21]त्यश्लिष्टशब्दरूपणं केवलं[22] परम्परितम् ।

पर्यङ्क इति । पर्यङ्को विष्टरः । वंश.[23]कुलम्, वेणुश्च । स्त्यान[24] घनम्[25] । मुरलो-देशविशेषः । सौविदल्लः कञ्चुकी[26] । इदं स्पष्टमेवाश्लिष्टशब्दमालापरम्परितम् । ननु[27] क्ष्मा[28]सौविदल्ल इत्यत्र भूमेः महिष्यादिरूपणमशाब्दमित्यत आह—अत्र क्ष्मेत्यादि ।

[29]कि भनेकारविषमो[30]दाहरणेन प्रयोजनमित्यत आह—एवमादयोऽपीत्यादि । तथाहि अत्र[31] क्ष्मा[32]सौवत्यादिभेदो निरुदाहरणं सूचितम्[33] । भाभाति[34] क्षितिभृत इत्यत्र

---

1. E. परपरामेव प्रा 2. A's alt अग्रेरस । 3. C. भाव 4. Except E. all read सर्ता 5. Omitted in D. 6. E. अत्र हि 7. C. मानस हंस 8. D. omits प्रती 9. A.C.F.H. पद 10. D. शब्दं 11. D. तमिमं 12. A's alt C. अनु 13. Except E. all read श्लिष्ट 14. D. विश्रान्तोऽशां 15. A's alt D. omit इह 16. A.F.H. तरणिः । C. तर्र D. करयटं 17. A's alt C. omit अत्र 18. A. तरिण (तरणि) C. तराण D. करण्डरूप 19. E. त्व रूपकं पूर्वं 20. C. रूपणायेत्यश्लि 21. A. आयत्तायेति 22. D. केवलं 23. D. वंशो 24. D. स्त्यानो 25. D. घनः 26. A.C.F. कोशकी 27. D. omits ननु 28. A. C. क्षुर A's alt क्ष्मार 29. D. ननु किं 30. A's alt विषमेनोदा 31. A's alt. आदौ D. आर्मो 32. D. क्ष्मोक्या दि 33 A.D. सूचितः 34 D. क्ष्मातेति ।

यैरेवापि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥
अत्र चारोप्यमाणस्य धर्मित्वादाविष्टलिङ्गसङ्ख्यात्वेऽपि क्वचित् स्वतोऽसंभवत्सङ्ख्यायोगस्य विषयसंख्यात्वं प्रत्येकमारोपात् । यथा—
"क्वचिज्जटावल्कलावलम्बिनः कपिला दावाग्नयः" इत्यादौ । न हि कपिलमुनेर्बहुत्वम् ।
भ्रमिमरतिमलसहृदयतां प्रलयं मूर्च्छां तमः शरीरसादम् ।
मरणं च जलदभुजगजं प्रसह्य कुरुते विषं वियोगिनीनाम् ॥

सङ्करः[1] । क्षमासौविदल्ल इत्यत्र[2] परं[3]परितमप्येकदेशविवर्तीत्येव[4]मादयो भेदा इति यावत्[5] । न [6]केवलमिदं परंपरित[7] रूपकम् मन्वयमुखेनैव यावता[8] व्यतिरेकमुखेनापि सभवतीत्याह[9]—इदं चेत्यादि ।

सौजन्येति[10] । सौजन्यरूपस्याम्बुनो[11] मरु[12]स्थली मत्यन्तम्[13] असंभवात् । सुचरित[14]रूपस्य चित्रकर्मणो गगनभित्तिरनधिष्ठानत्वादित्यनुसन्धेयम्[15] । दुराशया[16] दुरभिप्राया दुष्टया लिप्सया च ।

ननु रूपके यस्यारो[17]पस्तस्य धर्मित्वादा[18]विष्टलिङ्गसङ्ख्याकत्वं युक्तम् । तत्राविष्ट-लिङ्गत्व[19] व्याप्तम् माविष्टसङ्ख्यात्वं[20] तु क्वचि[21]द्व्यभिचरति । तत्र का गतिरित्यत[22] माह —अत्र चारोप्य[23]माणस्येत्यादि[24] । सत्यम्, माविष्टलिङ्गसङ्ख्याकत्वं धर्मिणो युक्तं, तत्र लिङ्गान्यथा[25]करणे गति[26]रस्ति काचित् । सङ्ख्यान्यथाकारस्तु[27] प्रत्येक[28]मारोपादुपपद्यते । तदेतदुदाहृत्य हृदयं गमयति—यथा क्वचिदित्यादि । दावाग्निषु प्रत्येकमारोपात् । कपिल[29]-मुनावसत्यपि बहुत्वसङ्ख्योपपत्स्यत इति यावत् ॥

निरवकाशत्वाद्बली श्लेषस्सर्वालङ्कारबाध इति सिद्धान्तयिष्यते । तेन[30] श्लेषेण रूपकबाध इति सोदाहरणमाह—भ्रमिमरतिमित्यादि । भ्रमिः शिरो[31]घूर्णि[32]ररतिरनवस्था । आलस्यम्[33] अभीष्टतानिवृत्तिः । प्रलय इन्द्रियोपरतिः, मूर्च्छा तेषामान्ध्यं तमोऽन्तर्धूमाय[34]-मानता, शरीरसादः अङ्गानामप्रभविष्णुता, मरणं प्रतीतम् । तैरेतैः निमित्तैरष्टभिः विष-

1. D. संकर 2. A's alt D. इति तु 3. D. परिपरि 4. D omits एव 5. A's alt. C. 'सावयवः' 6. A. C. D. F किञ्च 7. D. परंपरित 8. A's alt. य'''ता 9. All Mss read इत्यादि । 10 Omitted in. C. 11. A's alt C. अस्मनो 12. A's alt. मन 13. D. अत्यन्त संभ 14. A's alt. C. सच्चरित 15. C. अनुसन्धेयः । 16. A. C. दुराया दुर A's alt. 'दुराया' 17. D. आरोपा 18. A. धर्म 19. A's alt. C. लिङ्गकत्वं 20. A. संख्यत्वं B. संख्याकं 21. D. अभि 22. C. यत्र 23. A. C. D. omit च 24. D. इतीत्यादि 25. A's alt. 'लिङ्गस्यान्या' D. अन्यथिकर 26. D. गति 27. C. आकारस्तु 28. A's alt. प्रत्येकमाननापद्य C. प्रत्येक मारो पदुप 29D. रूपमुना 30. A. तेन न 31. D. शिरो निमित्तैः 32. D. घूर्णिरन 33. D. स्वं भरति 34. A. 'दूमा' ।

इत्यत्र नियतसङ्ग्धाककार्यविशेषोत्थापितो गरलार्थप्रभावितो विष-शब्दे श्लेष एव। जलदभुजगजमिति रूपकसाधकमिति। पूर्वं सिद्धत्वाभावान्न तन्निबन्धनम्। विषशब्दे श्लिष्टशब्दपरंपरितमिति श्लेष एवात्रेत्याहुः॥

## आरोप्यमाणस्य प्रकृतोपयोगित्वे परिणामः ॥१६॥

आरोप्यमाणं रूपके प्रकृतोपयोगित्वाभावात्प्रकृतोपरञ्जकत्वेनैव केवले-

---

कार्यैरेव गरलरूपोऽर्थ उद्भाव्यत[1] इति नेह विष[2]शब्द[3]श्लेषो रूपकहेतुकः। यथा विद्वन्मानस[4] इत्यादौ[5]। किन्तु श्लेषे[6] पूर्वसिद्धे[7] रूपकहेतुः इति। एवंविधे विषये श्लेष एव[8] न तु रूपकमित्याहुः। न्यायविद[9] इति शेषः[10]।

यत्त्व[11]भेदप्रधानं[12] स्यात्साधर्म्यं[13] तद्द्विधा मतम्।
आरोपाध्यवसानाभ्यामारोपे[14] रूपकं[15] भवेत्॥
वस्तुतो भेदसद्भावाच्छङ्कया[16] [17]नातिशयोक्तिता।
विषयस्यान[18]पह्नुत्या न चैत[19]त्स्यादपह्नुतिः॥
ततो विषयिरूपेण रूपवान्[20] विषयो मतः।
आरोपणेन क्रियते[21] तेनैतद्रूपकं मतम्॥
भेदस्तृतीयो यस्तत्र परंपरितसंज्ञकः[22]।
साधर्म्येणापि[23] तत्सिद्धिर्वैधर्म्येणापि दृश्यते॥
विषय्यारोप्यते येन प्रतिस्वं विषयेषु तत्।
भवेद्विषयसङ्ख्यात्वं सङ्ख्या[24]भेदेऽपि[25] धर्मिणोः[26]॥
रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद्यदि।
तदा रूपकमेव स्यादन्यथा श्लेष इष्यते॥

अथ रूपकात्प्रकृतोप[27]योगलक्षणवैधर्म्यशालिने परिणामालङ्कराय सूत्रम्—आरोप्य[28]माणस्य[29] प्रकृतोपयोगित्वे परिणामः॥ प्रकृतोपयोगित्वं विविच्य दर्शयितु-माह[30]—आरोप्यमाणं[31] रूपकम् इत्यादि। आरोप्यमाणं चन्द्रत्वादि[32]। प्रकृतोपयोगित्वा-भावादिति। प्रकृतं[33] मुखादि, तत्रोपयोगित्वं वाक्यार्थानुप्रवेश[34]पर्यन्तमारोपण[35]विष-

---

1. A. C. F. भाव्यत 2. A's alt. विद 3. A. शब्दे C. शब्दो 4. A. D. हंस इ 5. F. आदि 6. D. श्लेषा 7. A. D. F. सिद्धो 8. A's alt. C. एवनरूप 9. C. नन्या 10. D. शेषा 11. D. भेद 12. D. प्रभेदः 13. D. र्यं भावात् 14. A's alt. C. F. आरोपो 15. A's alt. C. मतम् 16. A. C. F. H. शक्त्या 17. A's alt. C. साति 18. H. यपह्नु 19. A's alt. C. चेत्तत् H. नत्येते स्या 20. C. रूपं वा 21. A's alt. क्रियया 22. C. 'संज्ञि' 23. D. एव 24. A's alt. D. H. संख्याभेदे 25. A's alt. D. H. पिधर्मि 26. H. धर्मिणः 27. D. E. रूपकालंकारात् 28. F. आरोप्येति 29. A's alt. इत्यादि प्र 30. A's alt. C. दर्शयति आरो 31. All except D. आरोप्यमाणो 32. Omitted in D. 33. D. प्रकृत 34. C. प्रवेशः 35. A's alt. C. आरोप्यमाण।

नान्वयं भजते। परिणामे तु प्रकृतात्मतया आरोप्यमाणस्योपयोग इति प्रकृतमारोप्यमाणरूपत्वेन परिणमति।

---

क्षाया स्यात्। तद्धि रूपके नास्ति। 'मुखमेव[1] चन्द्र' इत्येतावतैव रूपकत्वसिद्धिः[2]। तस्मादारोप्यमाण चन्द्रत्वादि[3] मुखादौ प्रकृतार्थे ताद्रूप्यप्रतीत्या[4]धानरूपेण[5] उपरञ्जकत्वेनैव रूपकालङ्कारेऽन्वय भजते। परिणामे त्विति। परिणामालङ्कारे पुनः आरोप्यमाणं न केवलं प्रकृतोपरञ्जक यावता प्रकृतरूपमपह्नुवानं[6] सत्तदात्म[7]त्वेनोपयुज्यते। अत, इह वाक्यानुप्रवेशान्तम्[8] आरोपविवक्षा। सा चाप्रकृतस्य प्रकृतरूपापत्तावेवोपयुज्यते[9]। न पुनः[10] रूपकवत् प्रकृतस्य[11] अप्रकृतरूपापत्तौ। तदेतदाह—प्रकृतमारोप्यमाण[12] रूपत्वेनेत्यादि[13]।

अत्रैतदुपह्वरम्। आरोपस्य द्विष्ठत्वेऽपि प्रकृताप्रकृतयोर्नैकविधा वृत्तिः[14]। विषय[15]विषयित्वेन विवक्षा[16] नियमात्। विषयः खलु[17] आधेय[18]गुण एव भवति। विषयी पुनर्गुणाधारतैव[19] भवति। इत्थं च सति विषयित्वारोपणं विषये ताद्रूप्य[20]प्रतीतिमात्रं[21] चेद्विवक्ष्यते,[22] तदा ताद्रूप्यप्रतीति[23] जनकत्व[24]मात्रमु[25]परञ्जकत्वम्[26] इत्ये[27]तावतैव आरोपणस्य[28] चरिता[29]र्थता[30]। अतस्ताद्रूप्यप्रतीतिमात्र[31]प्रसिद्धयर्थं प्रकृतम्[32](अ)प्रकृत[33] रूपापन्न भवति रूपके। परिणामे तु प्रकृतोपयोगान्तमारोपविवक्षयेति। स्वरूपादप्रच्युतस्यैव प्रकृतस्याप्रकृतरूपो[34]पग्राहित्वलक्षणावस्थान्तरापत्तिरेव। इतरथा रूपकन्यायेन प्रकृतस्य स्वरूपस्थगनेन[35] प्रकृतमेव[36] न प्रतीयेत। का तत्र प्रकृतोपयोगिता? तदभावे च का रूपकस्य[37] विविक्तविषयता? प्रायेणात्र प्राचामाचार्याणाम् अपि व्यामोह[38]कलानुवृत्तिरिति रहस्यमुद्घाटितम्। रूपकपरिणामविषयविवेचनस्यात्र सङ्ग्रहायान्तरश्लोकौ—

विषय्या[39]कारमारोप्य विषयस्थगन[40] यदा।
रूपकत्वं तदा तत्र रञ्जनेन समन्वयः॥

---

1. A. C. F H. *omit* एव 2. H. मिद्धः 3. C. चन्द्र इत्यादि 4. A. C. प्राधीन 5. D. 'रूपेणोपकारेणैवरञ्जक' 6. D. अपह्नवानं 7. F. आत्मकत्वेन 8. D. अन्तर 9. E. उपपद्यते 10. H. यथा 11. D. E. अप्रकृ 12. D. माणस्य 13. E. omits मे। 14. A's alt. C. भक्तिः। 15. D. E. कुतः? वि. 16. A. C. E. विचक्षण H. विवक्षणा 17. C. repeats खल्वाधेय 18. E. आधेयः 19. A's alt. F आधान C. आधाते 20. Except E. all read रूप्ये 21. D. मात्रान्तं 22. A's alt. C. मंलक्ष्यते। 23. C. प्रतीतिः 24. A's alt. C. जनन 25. D. अप 26. A's alt. C. 'रञ्जन' 27. D. E. इति ताव 28. A's alt. आरोप्यमाण 29. A's alt. C. चारितार्थ्यात् 30. H. ता। विषय्या का 31. A's alt. C. मात्रं न प्रकृत सिद्ध्यर्थं 32. A's alt. C. D. E. F. H. I. अप्रकृ. 33. All Mss. omit अ. 34. D. omits पो 35. C. D. omit. न 36. C. omits व 37. D. E. omit स्य 38. A. C. व्याख्यामाह—कानुवृत्तिः। A's alt. व्यामोहनानुवृत्ति F. व्यामोहनामवृत्ति 39. C. विषया 40. H. 'विषयस्य ते यदा'।

आगमानुगमविगमख्यात्यभावात्साङ्ख्यीयपरिणामवैलक्षण्यम् ।

यदा तु विषयो रूपात्स्वस्मादप्रच्युतो[1] भजेत् ।
उपयुक्त्यै[2] पराकारं परिणामस्तदा मतः ॥ इति ॥

नन्वयं लक्षण[3]परिणामः साङ्ख्यैरप्युपवर्णितः । तथाहि—धर्म[4]परिणामो लक्षणपरिणामोऽवस्थापरिणामश्चेति त्रिधा[5] परिणामः साङ्ख्यात.[6] । तत्र लक्षणपरिणामादिकस्य वैधर्म्यमित्यत आह—आगमानुगमेत्यादि । आप्तोक्तिरागमः । अनुगमो व्याप्तिः । व्यावृत्तिर्विगमः[7] । तदभावात्तद्वैलक्षण्यम् । न खल्वयं काव्ये लक्षणपरिणामः[8] आगमरूपेण वा[9] अनुमानरूपेण वा[10] ख्या (त[11] इ) त्यलं प्रसंगेन[12] बहुना ।

तथापि[13] साङ्ख्ययोगादिशास्त्रविषयेण प्रतिज्ञातं खल्वस्माभिः श्रीगुरुप्रसादसमनन्तरं शैशव एव यथा[14]—

"शैवं[15] विष्णुनिबद्धमौपनिषदं साङ्ख्यं सपातञ्जलं[16]
शास्त्रं[17] स्वात्महिताय वेद सकलैस्साकं पुराणादिभिः ॥
भूपानां तु विनोदनाय भरतं[18] नीतिं च वात्स्यायनं
षड्भाषाकवितां च लक्षणवती[19] श्रीचक्रवर्ती[20] कविः" ॥इति॥

स्पर्धया[21] सिसाधयिषु. (पून्)[22] दुस्तार्किकजरद्गवान्[23] प्रत्युपहासपरस्य ममायमन्यः श्लोकः—

साङ्ख्यं वेश्मनि वेश्मनि श्रुतिशिरः[24] वर्त्मासु वर्त्मासु च
द्वारि द्वारि शिवागमाः पथि पथि प्राचां कवीनां गिरः ।
पठ्यन्ते[25] यदमूभिर्जरठतरप्रश्नैर्जरत्तार्किकैः
तत्सर्वं खलु[26] चक्रवर्तिकवितुर्विद्यायशोडिण्डिमः ॥ इति

महाराज[27]श्रीरवप्लालास्थानजुषां विदुषां[28] प्रसादाशिषो हि[29] मय्येताः प्रसन्ते[30] । वास्ताः[31] ?

संस्कृतसार्वभौम.[32], प्राकृत[33] पृथ्वीश्वरः शौरसेनी[34]शिरोमणि[35]र्मागधीमकरध्वजः

1. D. प्रच्युतो 2. A. C. उपयुक्तौ A's alt. E. H. उपयुक्त्य 3. C. विपरि 4. A's alt. C. धर्मि 5. A's alt. यथा 6 H. सङ्ख्यातः । स चायं परिणामः द्विरूपपति व्युत्पादयति (P. 53) आरोप्यमाणः प्रकृते (P. 55) 7. A's alt. आगमः । 8. All except. E. 'परिणाम' 9. A. D. F. H. omit वा 10 A's alt. D. ख्यात्वा 11. All mss. read. ख्यातिरित्य 12. F. प्रासंगिकेन 13. A's alt. C. तत्रादि 14. D. omits यथा 15. D. शैवं 16. A's alt. C. च पा 17. C. शास्त्र 18. D. भरतः 19. C. लक्षणवीं 20. C. वर्तिः 21. स्पर्धयापि साध 22. D. E. साधयितुं 23. C. भवान् 24. D. गिरः 25. A's alt. C. पर्यन्ते विदुषां श्रवोरटरर्द्गीमिः स्मान्तार्किकैः 26. Except E. all read कविचक्र 27. C. महावहा 28. Omitted in D. 29. Omitted in C. 30 A's alt. प्रयान्ते 31. A's alt. व्यासताः 32. D. मः पृथ्वी । 33. A. प्रकृ 34. A. शौरसेन C. ईश्वरः ......न्तसेन 35. E. मणिर्ण माग ।

तस्य च सामानाधिकरण्यवैयधिकरण्याभ्यां द्वैविध्यम् ।

आद्यो यथा—

तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय ।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानस्त्वरितमथ गिरिं चित्रकूटं प्रतस्थे ॥

---

पैशाचीपरमेश्वरो[1]ऽपभ्रंश[2]राजहंसो[3]ऽलङ्कार[4]चक्रवर्ती[5] ध्वनिप्रस्थानपरमाचार्यः[6] महजसर्वज्ञ[7](:) [8]परमयोगीश्वरः[8] शैववैष्णवयोगसाङ्ख्यप्रमुख[9]समस्तस्वात्मविद्यातत्त्व[10] निष्णा[11](तः) श्रुता[12]धिगतसमस्तविद्याकला[13]पोद्धतविद्याविद्वेषिवनदावानल(:)[14] कलियुगस्कन्द[15] (:) अभिनवभट्टाचार्य[16]वैदिकविद्याप्रतिष्ठापनपरमा[17]चार्य (:)[18] काव्यमीमांसाप्रामा[19]करवादि[20]मृगेन्द्र[21] (:) वेश्याभुजङ्ग इत्याद्या महाराजहोसल-राज[22] कुलद्वारि प्रशस्ति[23]शिलाशासन[24]प्रभृतिभिः[25] ययमुपशान्तरभसा.[26] । अत्र तु ग्रन्थे[27] काव्यमीमा[28](मा)निरूपता[29] ममो[30]पयान्तु वत्सलास्सचेतसः ।

प्रकृतमनुसरामः । स चायं[31] परिणामालङ्कारो द्विरूप[32] इति व्युत्पादयति—तस्य सामानाधिकरण्येत्यादि ।

तीर्त्वेति । धुनी सरित् । आत्मना तृतीय इत्यनेन सीतासौमित्रिव्यतिरिक्तपरिजनवि-सर्जनं[33] प्रत्याय्यते । आतरस्तरणपण्यम् । तस्मै[34] नाविकाय गुहाय । व्यामशब्देन तत्परि-[35] माणमुच्यते तदिह बाहुद्वयं[36] लक्षयति । तदग्राह्यस्तनीत्वेन[37] तु[38] कृच्छ्रानुयाने हेतु-रुपन्यस्तः । अत्रा[39]तरस्या[40]प्रकृतस्य न केवलं मैत्री[41]ताद्रूप्यप्रतीतिमात्रं विवक्ष्यते, अपि तु नदीतरण[42]प्रत्युपकरणात्मकं प्रकृतोपयोगित्वमपि । अत.[43] [44]अप्रकृतस्य प्रकृतरूपा[45]-

---

1. E. ईश्वराय 2. A. E. F. अंशिक C. अंशक 3. F. हंसा 4. E. 'आलङ्कारिक-चक्र' 5. I वर्ति, E. वर्तिन् 6. C E. I. आचार्य 7. All mss. read सर्वज्ञ 8. E. ईश्वर 9. C. मुखस्वा 10. E. तत्त्वनित्यानि 11. A. C. निष्णातो D.E.F.H.I. निष्णाता 12. E. श्रुत 13. D. E. I. कलापा 14. All mss. अनल 15. All mss. स्कन्द. 16. A. C. आचार्यः 17. A's alt. C. omit परम 18. All mss. आचार्य 19. D. E. F. G. I. प्रमा 20. D. वादि 21. All mss. इन्द्र 22. A's alt. होयिसल C. होयिसल F. भोसल 23 A. C. E. H. प्रशस्त 24. A's alt. D. शासन प्रतिष्ठापनात् प्र. 25. D. E. प्रभृतिषय 26. A's alt. शान्तभराः 27. C. ग्रन्थ 28. All mss. मीमांस 29. A. निरासा D. E. H. I. निरूपणा 30. A's alt. ममा यायपन् C. ममोऽप्यापन्न 31. E. स आत्मना 32. C. रूपक 33 D. तत्र A's alt. C. व्यज्यते 34. E. अस्मै 35. A's alt. C. प्रमाणं D. परिमाण 36. A's alt. आर्पित यत्र इति C. बाहु मापि इति 37. E. स्तन्येन 38. All except. E. न तु 39. Except. E all तत्र 40. A's alt. आतरस्याप्र E. स्य प्रकृ 41. C. अत्र ताद् 42. Except. E all. read तरण 43. Omitted in A. C. F. K., E. अत्र 44. D. omits अ 45. D. अप्रकृत ।

अत्र सौमित्रिमैत्री प्रकृता आरोप्यमाणसमानाधिकरणभ्रातररूपत्वेन परिणता। भ्रातरस्य मैत्रीरूपतया प्रकृते उपयोगात्। तदत्र यथा समासोक्तावारोप्यमाणं प्रकृतोपयोगि तच्चारोपविषयात्मतया स्थितम्, अत एव तत्र व्यवहारसमारोपः, न तु रूपसमारोपः, एवमिहापि ज्ञेयम्। केवलं तत्र विषयस्यैव प्रयोगः, विषयिणो गम्यमानत्वात्। इह तु द्वयोरप्यभिधानं, तादात्म्यात्तु तयोः परिणामित्वम्।

द्वितीयो यथा—

प्यमानस्य प्रकृतोपयोग इति प्रकृतस्य स्वरूपादप्रच्युते.[1] परिणामत्वम्। तदेतद्दर्शयितुमाह—अत्र सौमित्रिमैत्रीत्यादि[2]। समानाधिकरण[3]ग्रहणं प्रथमप्रकारत्व[4]प्रथनाय। प्रकृतरूपा[5]-प्यमानस्य प्रकृतोपयोग इति परिणामबीजभूत[6] उपयोगित्व[7]मुद्घाटयितुमाह—भ्रातरस्य मैत्रीत्यादि। यत इत्थ सामानाधिकरण्य[8]प्रयोगे परिणामालङ्कारस्य विषयव्यवस्था तस्मात् समासोक्तिसाधर्म्यमस्तीति व्युत्पिपादयिषुरुपक्रमते—तदत्र[9] यथेत्यादिना। विशेषणसाम्यादप्रस्तुतस्य[10] गम्यत्वे [11]समासोक्तिर्वक्ष्यते[12]।

> उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
> यथा समस्तं तिमिरांशुकं तया पुरोऽपि[13] रागाद्गलितं न लक्षितम्[14]॥

अत्रो[15]पोढरागत्वविलोलतार[16]कत्वादि[17]हेतुना नायिकानायकयोः धर्मविशेष-गृहीतः[18]। न लक्षित[19] [मि]ति वाक्यानुप्रवेशान्न विवक्षित इति प्रकृतोपयोगी। स आरोपविषयभूतसन्ध्याराग[20]नक्षत्रादिरूपेणैवास्ते[21]। अनेन प्रकृतस्य स्वरूपाद-प्रच्युतिर्दर्शिता[22]। अतो व्यवहारान्त[23]मारोप.। न तु[24] रूपकन्यायेन रूपसमारोपमात्र-मित्यंशे[25] परिणामसमासोक्त्योः[26] साधर्म्यमवगन्तव्यमित्यत[27] आह—एवमिहापीति। तर्हि भिन्नयोर्मिथो[28] वैलक्षण्यमित्याह[29]—केवलं तत्रेत्यादि। प्रयोगः शब्देनोपादानम्। ननु यदि द्वयोः प्रयोगस्तर्हि परिणामत्वमेव कथमित्यत आह—तादात्म्या[30]त्विति। न खलु तादात्म्यं सति "क्षीरं दधीति" प्रयोगमात्राद् परिणामत्वहानिः।

1. D. च्युतं 2. A's alt. C. मैत्रीमिति 3 D. E. करणप्रथ 4. C. प्रकार परि 5. D. E. रूपोपयोग 6. C. भित्र 7. C. योग 8. A. करणपार्थं C करणे 9 A's alt. तद यथादिना। 10. C. सुगम्य 11. E. हि समा 12. A's alt. C. इष्यते 13. A's alt. C. गागा 14. D. E. लक्षितमिति। 15. E omits अत्र 16. D. E's alt. लोचनत्वादि 17. A's alt. आदयो D. E. F. त्वादिको नायक 18. D E. गृहीतं 19. All mss. लक्षित इ 20. A's alt. C. रागस्वलक्षणादि। 21 A's alt. C. omit एव 22. A's alt C. उक्ता 23. All except E अन्तरसारो 24 A's alt. ननु 25. A. C. इत्यनेन A's alt, E. इत्यंशे 26. All excpet. E. सोक्त्ति 27. E. इत्याह 28 C. मिथो 29. All except. E. इत्यताह 30. A's alt. C. तादात्म्येनेति। F. तादात्म्यमिति।

अथ पवित्रमतामुपेयिवद्भिः सरसैर्वक्रपथाश्रितैर्वचोभिः ।
क्षितिभर्तुरुपायनं चकार प्रथमं तत्परतस्तुरङ्गमाद्यैः ॥

अत्र राजसङ्घट्टने उपायनमुचितम् । तच्चात्र वचोरूपमिति वचसां व्यधिकरणोपायनरूपत्वेन परिणामः ॥

## विषयस्य सन्दिह्यमानत्वे सन्देहः ॥१७॥

अभेदप्राधान्ये आरोप इत्येव । विषयः प्रकृतोऽर्थः, यद्वृत्तित्वेनाप्रकृतोऽर्थः सन्दिह्यते । अप्रकृते सन्देहे प्रकृतोऽपि सन्दिह्यत एव । तेन प्रकृताप्रकृतगतत्वेन कविप्रतिभोत्थापिते सन्देहे सन्देहालङ्कारः । स च त्रिविधः । शुद्धो निश्चयगर्भो निश्चयान्तश्च । शुद्धो यत्र संशय एव पर्यवसानम् यथा—

---

वैधर्म्येणोदाहरति—अथ पवित्र[1]मतामिति । पाको[2] [विक्रितिः[3]] । पवित्रमता[4] प्रयोजनवत् लक्षणप्राचुर्यम् । वक्रः[5] पन्थाः । तदाश्रितैस्तदवलम्बिभिः । तत्परत[6] तदनन्तरम् । अत्र लक्षणयोजनायाह[7]—अत्र राजसङ्घट्टनेत्यादि[8] । उचितग्रहणेन प्रकृतान्व[9] द्योतितम् ।

आरोप्यमाणः प्रकृते यदासावुपयुज्यते ।
परिणामस्तदा तेन[10] रूपकादस्य भिन्नता ॥
रूपमात्रसमारोपाद्रूपके[11] ,रञ्जको ह्यसौ ।
व्यवहारसमारोपादिह[12] स्यात् प्रकृतान्वयः[13] ॥
परिणामसमासोक्त्यो[14]र्ज्ञातव्योऽस्माद्विपर्ययः ।
उपादानानुपादानकृतो भेदस्तयोर्मिथः ॥

विषयस्य सन्दिह्यमानत्वे सन्देहः । सङ्करस्यर्थमधिकारम् अनुस्मारयति—"अभेदप्राधान्य इत्यादि[15]" । ननु विषयत्वे निर्ज्ञाते 'कस्सन्देह इत्याह[16]—विषय[17](:) प्रकृत इत्यादि । निर्ज्ञातमेव[18] मुखादिलक्षण[19] प्रकृतमर्थं[20] भित्ती[21]कृत्य[22] चन्द्रादावप्रकृतेऽर्थे[23] सन्दिह्यमाने सन्देहस्य द्विष्ठत्वात् प्रकृ[24]तोऽर्थोऽपि[25] सन्देहदोलामधिरोहति[26] । इत्थ प्रकृताप्रकृत[27]गतत्वेन य[28] उत्थाप्यते प्रतिभयैव सन्देहः, स सन्देहोऽलङ्कारः न तु स्थाणुपुरुषादाविव स्वरसवाही[29] । तद्विशेषार्थमाह—स च त्रिविध इत्यादि ।

---

1. A. C. F. K. पक्वि 2. A's alt. D. E. पाथेय 3. A. C. निर्वृत्तिः D. ■ F. H. I. निर्वर्तिः । 4 A. पक्वि 5. A. C. F. H. अवक्रः । 6. E. ततः परं 7. A. E. F. H. omit ह 8. A. C. संघम इत्या A's alt. घटनायेत्या 9. E. प्रकृति 10 A. सदा नेरू C. सदा नेकरू 11. H. रूपाके 12. D. रोहा 13. A. C. E. F. H. वयः । अयेद- प्रकृतायेन रूपके प्रकृतस्थितिः । परि 14. C. सोक्त्या 15. H. इति 16. C. इत्य- थाह E. इत्यताह 17. All mss. विषय 18. A's alt. अज्ञात—व: C. H अज्ञातमेव 19. A's alt. लक्षणा 20. H. कृत्वाभि 21. A. H. धर्मिर्मी C. धर्मिब 22. C. कृत्यं 23. C. अप्रकृतार्थे 24. A's alt. प्रकृतेऽर्थे C. प्रकृतार्थेऽपि 25. D omits अपि 26. C. रोहेति भ्रमः । प्र 27. A. C. E. F. कृतान्वेष 28 All except. D यत 29. D. वादी ।

'किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा मञ्जरी
लीला प्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः।
उद्गाढोत्कलिकावतां स्वसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः॥

निश्चयगर्भो यः संशयोपक्रमो निश्चयमध्यः संशयान्तः। यथा—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम्।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति तिरः
समालोक्याजौ त्वां विदधति विकल्पान्प्रतिभटाः॥

निश्चयान्तो यत्र संशयोपक्रमो निश्चये पर्यवसानम्। यथा—

इन्दुः किं क्व कलङ्कः सरसिजमेतत्किमम्बु कुत्र गतम्।
ललितसविलासवचनैर्मुखमिति हरिणाक्षि! निश्चितं परतः॥

क्वचिदारोप्यमाणानां भिन्नाश्रयत्वेऽपि दृश्यते॥ यथा—

---

किं तारुण्येति। उत्कलिका उत्कण्ठा। समय' सम्प्रदाय उपदेशयष्टिरक्षरनिर्देशदण्ड'। शृङ्गारी[1] देवो मन्मथः। अत्र निश्चयानुपादानात् सन्देह' शुद्ध। निश्चय'गर्भं विविच्य[3] दर्शयति—निश्चय इति[4]। संशयान्ते[5]कथनात् मध्ये निश्चयो निश्चयाभासोऽनुसन्धेय[6]॥

अय मार्तण्ड इति[7]। इत' प्राप्त[8]। सर्वा दिशो[9] न[10] प्रसरतीति ऊर्ध्वं[11]ज्वलनैव स्वभाव[12]रूपत्वात्। तिरस्तिर्यक्। अत्रासद्भूय[13] तुरगत्वा[14]दिना मार्तण्डत्वादिसन्देहा[15]पगम एव[16] जायते[17]। तेन[18] पुनर्नायकस्य शृङ्गप्राहिकया रूपनिर्दर्शनमिति[19] निश्चयाभासा[20] एते। अत एव पुनस्तदायो[21]त्थानमिति निश्चयगर्भता।

तृतीय विवेचयति—निश्चयान्त[22] इत्यादि। इन्दु[23] किमिति। परतो[24] निश्चितमिति कथनात् द्वितीया[25]र्धान्ते[26] इत्य[27] सन्दिह्येत्यध्याहार्यम्। क्वचित्पुनर्विषये नरायित[28]त्वेऽपि मारोप्य[29]माणाना धर्माणा[30] विषयान्तरत्वमपि[31] भवतीति माह—क्वचिदि[32]त्यादि।

---

1 C. शृङ्गार 2. A's alt. निलय 3 H विवेचयति। 4 H इति। अय मार्तण्ड इति। 5 A's alt. C. अन्तवताम 6 A. सन्देहः C सन्देहः य' श्र- 7 A's alt C इति प्रा 8 A's alt C. प्राप्तस्य म D प्राप्त 9 A's alt. दिश 10 Omitted in C. 11. H 'उज्ज्वल' 12. E. F. H स्वरूप 13 C. भ्यात तु 14 A's alt तुरगादि 15 A. उपगम D अवगम 16 A इवाव 17 A's alt. C गम्यते। 18. Omitted in D. 19. E. निर्ज्ञानं H. विज्ञानं 20 A's alt C भाम्यते। ष्य 21 A's alt C. सन्देहोत्था 22. C. F. अन्त 23 Omitted in C. 24 A's alt पातो 25. A द्वितीयात्तष्यर्थं C द्वितीया त्वित्यर्थं। 26 A's alt यान्ते D 'द्वितीयाद्यान्ते' 27. A. C. D. E. तेनेम 28 A's alt त्वाल्पेऽपि C त्वाह्येऽपि 29 A's alt. C आरोप्युदार्म्यानां वि '30 Omitted in H. 31 A's alt. अन्तरत्वे 32. A's alt C. इति।

रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु ।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण ॥

अत्रारोपविषयतिमिरे रागादि तर्वादिभिन्नाश्रयत्वेन आरोपितम् । केचिदध्यवसायाश्रयत्वेनेमं सन्देहप्रकारमाहुः । अन्ये तु नुशब्दस्य सम्भावनाद्योतकत्वादुत्प्रेक्षाप्रकारमिमम् आचक्षते ॥

सादृश्याद्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान् ॥१८॥

असम्यग्ज्ञानत्वसाधर्म्यात्सन्देहादनन्तरमस्य लक्षणम् । भ्रान्तिश्चित्तधर्मो विद्यते यस्मिन्भणितिप्रकारे स भ्रान्तिमान् । सादृश्यप्रयुक्ता च भ्रान्तिरस्या विषयः । यथा—

ओष्ठे बिम्बफलाशयालमलकेपूत्पाकजम्बूधिया
कर्णालङ्कृतिभाजि दाडिमफलभ्रान्त्या च शोणे मणौ ।
निष्पत्त्यासकृदुत्पलच्छदधृशामात्तक्लमाना मरौ

रञ्जिता इति । रञ्जिता[1] वर्णान्तरं नीता[2] । संहृतास्संक्षिप्ता । अत्र भिन्नाश्रयतां दर्शयति—अत्रारो[3]पेत्यादि ॥

नन्वत्र सम्भावनापि प्रतीयत इति कथं सन्देहालङ्कार इत्यत[4] आह—केचिदध्यवसायेत्यादि ॥ अध्यवसाय उत्प्रेक्षणम् । उत्प्रेक्षा[5]श्रयोऽयं सन्देह इति केचित् । उत्प्रेक्षैवेत्यन्ये । उभयत्र नु[6]शब्दस्य सन्देहसंभावनाद्योतकत्वमेव हेतुः । वस्तुतस्तु नेह सम्भावनाप्रतीतिः । वितर्कस्यैककोटिपक्षपाताभावात् । अतो[7] डोलायमाननानाकोटिकोऽयं सन्देह एवेति भावः ॥

सन्देहः[8] प्रकृतद्वाराऽप्रकृत संस्पृशेद्यदि ।
प्रतिभो[9]त्थापिता सेयं सन्देहालङ्कृतिर्मता ॥

अथ भ्रान्तिमतः[10]सूत्रम् । सादृश्या[11]द्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान्[12] । सादृश्यहेतुको विपर्ययो भ्रान्ति[13]मानित्यर्थः[14] । सङ्गत्यर्थमाह—असम्यग्ज्ञाने[15]त्यादि ॥ लक्ष्यपदनिर्वृत्ति—भ्रान्तिश्चि[16]त्तेत्यादि । चित्त[17]धर्म[18]मात्रस्यालङ्कारता मा भूदित्या[19]शङ्क्याह—सादृश्यप्रयुक्तेत्यादि ।

ओष्ठे[20] बिम्बेति[21] ॥ शोणो मणि[22]र्माणिक्यम् । निष्पत्त्य[23] आलीय[24] सादृश्या-

1 E रञ्जिता 2 D नीता 3 A's alt C F I. आरोप्ये 4 C. अत्र 5 A's alt C उत्प्रेक्षां सयोजयति । कचित् उ H प्रेक्षैवेति 6 Omitted in C H. 7 C अतो माणि कोटि 8 A's alt C. सन्देहे 9 A's alt. C उत्पादित 10. A's alt C. भ्रान्तिमान् । साद 11 F दृश्यादिति । 12. A. D H. इति । सा 13 A's alt C भ्रान्तिरित्य 14 C भ्रान्तिमांश्चेति स 15 D अज्ञाने 16 A's alt. C. omit चित्त 17 D चित्र 18. E. F. धर्मता 19 A इत्याह 20 C ओष्ठ H ओष्ठ साद 21 C. बिम्ब माणिक्या शोणो 22. D मणिमाणिक्य E. माणिक्यं 23 A C. F. H निष्पाद्य D निवन्य 24. C आल

राजन् ! गुर्जरराजपञ्जरशुकैः सद्यस्तृषा मूर्च्छितम् ॥

गाढमर्मप्रहारादिकृता तु भ्रान्तिर्नास्यालङ्कारस्य विषयः ।

यथा—

दामोदरकराघातचूर्णिताशेषवक्षसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥

सादृश्यहेतुकापि भ्रान्तिर्विच्छित्त्यर्थं कविप्रतिभोत्थापितैव गृह्यते यथोदाहृतम् । न स्वरसोत्थापिता शुक्तिकारजतवत् । एवं स्थाणुर्वा स्यात्पुरुषो वा स्यादिति संशयेऽपि बोद्धव्यम् ।

एकस्यापि निमित्तवशादनेकधा ग्रहणमुल्लेखः ॥१६॥

यत्रैकं वस्त्वनेकधा गृह्यते स रूपबाहुल्योल्लेखनादुल्लेखः । न चेदं निर्निमित्तमुल्लेखमात्रमपि तु नानाविधधर्मयोगित्वाख्यनिमित्तवशादेतत्क्रियते ।

---

दिति यदुक्तं तत्र प्रत्युदाजिहीर्षुराह—गाढमर्मेत्यादि । दामोदरेति[1] । वक्षोरूप[2]-मर्मचूर्णनं[4] नभसः शतचन्द्रत्वेन दर्शने[5] हेतुः ।

सादृश्यहेतुकाऽपि लोकविल[6]क्षणैव भ्रान्तिरलंकारबीजमित्याह—सादृश्यहेतु[7]कापीत्यादि । विच्छित्तिरलौकिकी शोभा । शुक्तिकारजतवत् । शुक्तिकारजते यथेत्यर्थः[8] । अलौकिकत्वन[9]योऽयं[10] सन्देहेऽपि समान इति व्युत्पादयति—एवं स्थाणुरित्यादि ।

"सादृश्योत्[11]थापिता भ्रान्तिर्यत्रा[12]सौ भ्रान्तिमान्मतः ॥"

अथोल्लेखालङ्काराय सूत्रम्—एकस्यापि[13] निमित्तवशादनेकधाग्रहणमुल्लेखः । एकस्यापि[14] वस्तुनो नाना[15]विधधर्मयोग[16]निमित्तवशादनेकधाग्रहे सत्युल्लेखालङ्कारः । तच्च[17] अनेकधात्वं[18] गृहीतृभेदाद्भवति विषयभेदाद्वा भवति । तदेतद् व्याचष्टे—यत्रैकं[19] वस्त्वित्यादि । यत्रोक्तिप्रकारे । गृह्यते ज्ञायते । उल्लेखनं निर्धारणम् । [20]नानाविधधर्माभावे त्वनेकधाग्रहणमात्रेण नोल्लेख इत्याह—न चेद[21]मित्यादि । एतत्क्रियते, उल्लेखन निष्पाद्यत इत्यर्थः ।

ननु नानाविधधर्मयोगमात्रा[22]दनेकधाग्रहणमनुपश्यामः इत्यत आह—तत्र च रुच्य[23]र्थित्वेत्यादि । रुचिरभिरतिः । अर्थित्वं लिप्सा । व्युत्पत्तिः शब्दार्थसङ्केतज्ञानम् ।

---

1. A's alt. इत्यादि 2. C. वक्षो 3. C. रूपत्व E. रूपं 4. A. C. चूर्णनं D. पूर्णनं 5. C. दर्शनं हेतु साद 6. H. विचन्न 7. E. हेतुकेत्यादि 8. H. अर्थसाह 9. A's alt. C. अविषयो 10. C. यः 11. D. दृश्ये भ्रा० 12. D. E. 'यत्र स' 13. F. एकस्यापि इति । एकस्यापि नाना A. C. D. H. omit अपि 14. A's alt. अपि नाना 15. A's alt. H. नाना धर्म 16. D. E. F. योग लक्षण नि 17. C. अनेकधा च 18. A's alt. omits. त्वं H. अनेकधा वा गृ 19. D. एतं 20. D. repeats नाना 21. Except. E. all read चेदिदं 22. A. मात्रान्तानेक D. मात्रानेक 23. A. C. F. H. अर्थं ।

तत्र च रुच्यर्थित्वव्युत्पत्तयो यथायोगं प्रयोजिकाः। तदुक्तम्—

यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते।
आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधिते ॥इति॥

यथा—"यस्तपोवनमिति मुनिभिः कामायतनमिति वेश्याभिः सङ्गीतशालेति लासकैः" इत्यादि श्रीकण्ठाख्यजनपदवर्णने। अत्र ह्येक एव श्रीकण्ठजनपदस्तत्तद्गुणयोगात् तपोवनाद्यनेकरूपतया निरूपितः। रुच्यर्थित्वव्युत्पत्तयश्च प्रायशः समस्ता व्यस्ता वा योजयितुं शक्यन्ते। नन्वेतन्मध्ये "वज्रपञ्जरमिति शरणागतैरसुरविवरमिति वादिकैः" इत्यादौ रूपकालङ्कारयोग इति कथमयमुल्लेखालंकारविषयः ? सत्यम्। अस्ति तावत् "तपोवनम्" इत्यादौ रूपकविविक्तोऽस्य विषयः। यदत्र वस्तुतस्तद्रूपतायाः संभवः, यत्र तु रूपकं व्यवस्थितं, तत्र चेदियमपि भङ्गिः संभाविनी तत्संकरोऽस्तु। नैतावतास्याभावः शक्यते वक्तुम्। ततश्च न दोषः कश्चित्। एवं तर्हि तत्र विषये भ्रान्तिमदलं-

---

यथायोगमिति। [1]योगो योग्यता[2]। तामनतिक्रम्य रुच्यादिषु त्रिषु यथायोगमेकं द्वयं त्रयमेव वा प्रयोजकं भवतीति यावत्। तत्र संवादायाह[3]—तदुक्तम्[4]। यथारुचीत्यादि। रुच्यर्थित्वव्युत्पत्त्यनुसारेण एकस्मिन्नप्यनुसन्धानेन[5] साधिते निर्धारितेऽर्थे आभासः प्रतीतिर्भिद्यते। नानोल्लेखात्मिका जायत इत्यर्थः।

यस्तपोवनमित्यादि[6]। एक एव श्रीकण्ठजनपदः मुन्यादिभिस्तपोवनत्वाद्या[7]-कारेण गृह्यते। तथा चानेकधा ग्रहणे[8] तपोवनत्वादिनानाविधधर्मयोगो निमित्तम्[9]।

जनपदे हि तपोवनत्वादि धर्मा निसर्गत एव सन्ति। इतरथा नोल्लेखः[10]। रूपकत्वप्राप्तेः[11]। लक्षणं योजयति— [12]अत्र ह्येक[13]एवेत्यादि[14]। समस्ता[15] व्यस्ता[16] इति मुन्यादीनां तपोवना[17]दित्वेनोल्लेखे तथाविधा रुच्यादयो हि समस्ततया व्यस्ततया वा संभवन्ति। विषयपरिशुद्ध्यर्थं चोदयति—नन्वेतन्मध्ये इत्यादि। वज्रपञ्जरत्वादेर्हि तपोवनत्वादि[18]-वन्न जनपदधर्मत्वमिति रूपकत्वमेव। परिहरति—सत्यम्, अस्ति तावदित्यादि। न तावदस्य रूपकविविक्तविषयता नास्ति। यत्र स्वशे रूपकं तत्र[19] यद्युल्लेखात्मिका विच्छित्तिर्न सम्भवति तदा नास्त्येव विवादः। अथ संभवति, तदा सङ्कर एव न्याय्यः। न पुनरस्य स्वरूपत एवापलापः शक्यः।

भ्रान्तिमतो विविक्तविषयतामस्य दर्शयितुम् आक्षिपति—एवं तर्हीत्यादि।

---

1. E. क्रियायोगो 2. C. Omits ता 3. H. आह। लक्षणं योजयति। 4. A. E. F. H. I. उक्तमिति। 5. D. omits. ने 6. E. इति 7. A's alt. D. त्वाद्यनेका कारत्वेन E. त्वाद्यनेकाकारत्वेन F. त्वादि धर्मानिस 8. A. C. F. H. I. गृह्यमाणे 9. A. C. D. F. H. I. प्रतिमात्रं 10. C. लेख 11. A's alt. C. प्रमाप्तिः 12. A's alt. C. तत्र 13. A. C. D. F. H. I. एकः 14. H. आदि। नाना धर्मवना- (P. 62.) 15. C. समस्तास्य 16. A's alt. नाप्रेति। 17. D. वनत्वा देनो 18. D. F. वनादि। 19. All mss. read अत्र।

कारोऽस्तु । अतद्रूपस्य तद्रूपताप्रतीतिनिबन्धनत्वात् । नैतत् । अनेकधा ग्रहणाख्यस्यापूर्वस्यातिशयस्याभावात् । तद्धेतुकत्वाच्चास्यालकारस्य सकरप्रवृत्तिस्त्वङ्गीकृतैव । यद्येव अभेदे भेद इत्येवरूपातिशयोक्तिरत्रास्तु । नैष दोष । ग्रहीतृभेदाख्येन विषयविभागेनानेकधात्वोट्टङ्कनात्तस्य च विच्छित्त्यन्तररूपत्वात्सर्वथा नास्यान्तर्भाव शक्यक्रिय इति निश्चय । यथा वा—

> णाराअणोत्ति परिणअवर्हाहि सिरिवल्लहो त्ति तरुणीहि ।
> बालाहि उण कोऊहलेण एअमेअ सच्चविओ ॥

तत्रेति । यो रूपविविक्त तत्र विषय इत्यर्थ । भ्रान्तिमत्त्वशङ्काया बीजमुद्घाटयति—अत[1]द्रूपस्य तद्रूपतेति । यद्यपि जनपदे तपोवनत्वादय सन्त्येव धर्मा । वस्तुतस्तु न तद्रूपा जनपद[2] । तस्मादतद्रूपस्य तद्रूपताप्रतीति[3]निबन्धनेन भ्रान्तिमानस्त्विति[4] यावत्[5] । परिहरति—नैतत् । अनेकधेत्यादि । न ह्यनेकधाग्रहणरूप वैचित्र्य भ्रान्तिमति लक्षणम् । इह तु लक्षणमेव । अतो न भ्रान्तिमात्र[6]मिति यावत् । नन्विह भ्रान्तिमानपि स्वलक्षणोपपन्न इत्यत आह—सङ्करप्रवृत्तिस्त्विति । अतिशयोक्ति[7]विषयतोऽन्यस्य विभक्त[8]विषयतायं शङ्कते—यद्येवमभेदे भेद इत्यादि । वस्तुतो हि तपोवनाद्य[10]वयवापेक्षया न[11] जन[12]पदस्यावयविनो भेदोऽस्ति । इत्य च सत्यभेदे भेद इत्येव[13]रूपातिशयोक्तिर[14]त्रास्तु कि[15]मन्यकल्पनेनेत्याक्षेपनिष्कर्ष[16] । परिहरति—नैष दोष । ग्रहीतृभेद इत्यादि । न ह्यतिशयोक्तौ ग्रहीतृभेदोपयोग । अत्र पुनरुप[17]योग इति । [18]नातिशयोक्तिमात्रमेतत् । न च ग्रहीतृभेद[19]स्याप्रयोजकत्व शङ्क्यमित्याह—तस्य चेत्यादि । यत इत्यमत[20] सर्वथा नास्यान्त[21]र्भाव शक्यक्रिय ।

रूपकासङ्कीर्णतयोदाहरति—णाराअणोत्तीति । 'नारायण इति परिणत वयोभि श्रीवल्लभ इति तरुणीभि । बालाभि पुन कौतुकेन एवमेव दृष्ट ।'

अत्र पुर प्रवासावसरे एव एव कृष्णो[22]जरतीभि साधासाधुप्रदो[23] नारायण इति दृष्ट । तासा रुच्यादस्तथाविधत्वात् । तरुणीभि पुन लक्ष्म्या[24] प्राणवल्लभ इति[25] । बालाभि पुन कौतुकेन एवमेव दृष्ट । एवमेवेति निपातो यत्किञ्चिदित्यर्थे विवक्षित । न चात्र शङ्कनीय कौतुकेनेति प्रयोजनान्तरोपादानाभद् रुच्यादय प्रयोजका इति । कौतुकस्यापि रुच्या[26]दिव्यन्तरेणाभवात् ।

1 D अत 2. D पद तद्रूप 3 A प्रतीति 4 A C D F H I भ्रान्तिति। 5 D यावत्। नन्विह 6 A's alt C मात्रिति। 7 A's alt C. स्यान्य लक्ष्या 8 A's alt. विशेषोऽपि C विशेषेऽपि 9 A's alt C विभक्ति विशेषात्ऽस्यर्थेव विषयता एवं इते यत 10 A C. अवस्था A's alt Omit आदि 11 Except E. all omit न 12 A's alt C नन्वत्र 13 D एव 14 A's alt C उक्तिरत्रास्तु 15 D किम 16. C च । गृहीत्। 17 C उपायायाग 18 A's alt C नन्विति भ्रान्तिमात्रमेवैतत्। 19 D भेदक 20 A's alt मत 21 A C D F H I नान्तर्भा 22 C जाती 23 A's alt. D E प्रदाऽयमादिना 24 D लक्ष्या 25 A C F H I. इति दृष्ट । 26 A. अतिशयान्तरेण C आदिकान्तरेण।

एवं "गुरुर्वचसि पृथुरुरसि अर्जुनो यशसि" इत्यादाववसेयम् । इयांस्तु विशेषः—पूर्वत्र ग्रहीतृभेदेनानेकधात्वोल्लेख., इह तु विषयभेदेन । नन्वयं श्लेषालङ्कारविषय इति कथमलङ्कारान्तरमत्र स्थाप्यते ? सत्यम् । अनेकधात्वनिमित्तं तु विच्छित्त्यन्तरमत्र दृश्यत इति तत्प्रतिभोत्पत्तिहेतुः श्लेषोऽत्र स्यात्, न तु सर्वथा तदभावः । अतश्चालङ्कारान्तरं, यदेवंविधे विषये श्लेषाभावेऽपि विच्छित्तिसंभवः । तस्मादेवमादावुल्लेख एव श्रेयान् । एवमलङ्कारान्तरविच्छित्त्याश्रयेणाप्ययमलङ्कारो निदर्शनीयः ॥

---

एवं ग्रहीतृभेदादुदाहृत्य विषयभेदादुदाहरति—एवं गुरुर्वचसीत्यादि । वचसि विषयभूते गुरु प्रामाणिकत्वात् अनुल्लङ्घ्यो वाचस्पतिश्च । उरसि पृथुः[1] प्रथीयान् पृथुनामा नृपश्च । यशस्यर्जुनोऽवदातो धनञ्जयश्च । इत्यादौ ह्येक एव उपवर्ण्यो नायको वच-प्रमुख[2]विषयभेदादग्र[3]हीतृभेदनैरपेक्ष्येण रुच्यादिवशात् अनेकधा गृह्यत इत्यु[4]ल्लेखालङ्कारत्वम् । प्रकारद्वयस्यावान्तरवैधर्म्यमाह—इयांस्त्वित्यादि । अत्रोल्लेखाभावम् आशं[5]-ङ्कते—नन्वयमित्यादि । श्लेषस्य सर्वालङ्कारबाधकत्वं हि[6] वक्ष्यते[7] । अतो लक्षणोपपन्नम् अलङ्कारान्तरं सति श्लेषे न स्यादिति [8]नात्रोल्लेखो युक्त इत्याक्षेप । परिहरति—सत्यमित्यादि । सत्यम् । उक्तनयेन श्लेषेणोल्लेखो बाध्यते । अथापि स्वरूपेण अ[9]विद्यमानस्य बाधासंभवात् बाध[10] एवोल्लेखसद्भावे लिङ्गम् । अनेकधा ग्रहणरूपविच्छित्तिविशेषवलात् प्रतिभा[11]त्युल्लेख इति यावत् । यत इत्यमतो न तु सर्वथा [12]तद[13]भाव इत्यलङ्कारान्तरमेव । एतदेव साधयितुम् अत्रैवोदाहरणे श्लेषनैरपेक्ष्य दर्शयति—यदेवंविध इत्यादि । अत्र[14] "अनुल्लङ्घ्यो[15] वचसि, प्रथीयान् उरसि, निर्मलो यशसि" इति श्लेषा[16]-भावेऽपि न उल्लेखाभाव[17] । [18]यस्मादित्य तस्मादेवमादौ विषये उल्लेखा[19]लङ्कार एव विशेष[20]विच्छित्तिव[21] इति अलङ्कारान्तरापेक्षया [22]श्रेयान् प्रशस्यतर[23] इत्यर्थं ।

इत्य[24] रूपकाति[25]शयोक्तिश्लेषादिविच्छित्त्याश्रयत्वन्यायेन [26]अलङ्कारान्तरविच्छित्त्याश्रयेणाप्यय सभवति । [27]स तु स्वयमनुसन्धेय । न्यायस्य व्युत्पादितत्वात् इत्यभिप्रायेणाह—एवमलङ्कारा[28]न्तरेत्यादि । निदर्शनीय[29] उदाहरणीय[30] । क्वचित्

---

1 C श्रृयु 2. A's alt. C प्रभृति 3 A. भेदाग्र 4 D omits इति 5 Except. E. all read शङ्क्यते । 6. A's alt. F. विवक्ष्यते 7. A's alt. C. स्यजयते । 8 A's alt. C नोल्लेख 9 C *omits.* अ 10. A. D H. अबाध 11 A's alt. C भासत एवो D E 'भास्येवो' 12 D धानतु 13 E's alt. तदाभा 14 E. हिमतु 15 C. लङ्घ्ये 16 D पापोहे A's alt E F पापोहे 17. A's alt. D E. F. अपोह 18 A's alt. C. तस्मा 19. C. ल्लेखा 20 D. विषय एव वि 21. A. C F H I. कर 22 A's alt. C. प्रेयान् 23 A. C. D, F. H. I. प्रशस्यत 24. A's alt. C एवं 25 A's alt. रूपकादि C रूपका श्लेषा वि 26. A. C. अलङ्कारान्तर विच्छित्त्याश्रयत्व न्यायेन अस 27. A's alt. इति F. सति । 28. A. कारेष्वा 29 C. नीय 30. C. इत्यं च D इत्यम्य ।

विषयापह्नवेऽपह्नुतिः ॥२०॥

वस्त्वन्तरप्रतीतिरित्येव । प्रकान्तानपह्नववैधर्म्यॆणेदमुच्यते । आरोप-

---

*[1]कारकान्तरेति पाठः ।

नानाधर्मबलादेकं[2] यदि नानेव गृह्यते ।
नानारूपसमु[3]ल्लेखात्स उल्लेख इति स्मृतः[4] ॥
यदेकं[5] तद्धि[6] नानेति गृह्यते रूप[7]भेदतः
[8]रुच्यादिवशतो लोके नानात्वं चेद[9]कृत्रिमम् ॥
अतद्रूपस्य ताद्रूप्यात्सह्यसौ भ्रान्तिरिष्यते ।
न चाप्यतिशयोक्तिस्स्यादभेदे भेदरूपि णी[10] ॥
आद्ये नानेकधात्वं स्याज्ज्ञातृभेदो[11] न चान्तिमे ।
विषयज्ञातृभेदाभ्यां विना नोल्लेखसंभवः ॥
यद्यपि श्लेषतो बाधो न तथाप्यस्य निह्नवः ।
अन[12]पेक्ष्या[13]पि यच्छ्लेषं [14]तथैव स्यातुमर्हति ॥

अथापह्नुत्यै सूत्रम् । विषयापह्नवेऽपह्नुतिः[15] ॥ ननु मुखं न भवतीति विषया-पह्नवमात्रे सत्यपि नापह्नुतिरित्य[16]तोऽधिकारं स्मारयति—वस्त्वन्तरप्रतीतिरित्येवेति । अतः प्रकृतनिषेध[17]पुरस्कारेण[18] अप्रकृतसमर्थनमपह्नुतिरित्यर्थः । तथाहि काव्यप्रकाश-कृत्—

"प्रकृतं [19]यन्निषिध्यान्यत् साध्यते सा त्वपह्नुतिः ।"

ननु यदि[20] सादृश्याद्वस्त्वन्तरप्रतीतिरिहापि को विशेषः [21]तह्यंस्य भ्रान्तिमत इत्यत आह—प्रक्रान्तानपह्नवेत्यादि । प्रक्रान्तं प्रकृतम् । तस्य ह्यत्रापह्नवः । भ्रान्तिमत्यनप-ह्नव इति विशेषः । उल्लेखे तु न [22]प्रकृतानपह्नवमात्रं विशेषः किन्तु[23] अनेकधाग्रहणमपि[24]

1. A's alt. C. कारिकान्तरमपि 2. A's alt. C. एव 3. A's alt. C. समुल्लेखादुल्लेख इति सः 4. All mss. स्मृतः इति । 5. D. एवं 6. A. C. F. यद्धि 7. A. C. D. F. H. I. धर्म 8. A's alt. C. भाव्या 9. A's alt. C. भेदकृत्तया 10. A's alt. रूपिणः C. रूपिणि 11. A's alt. C. भेदानियन्त्रणं H. भेदे 12. C. अना 13. A. C. D. F. H. पेक्ष्यैव 14. A's alt. D. E. F. H. तत्रैव 15. Except E. all read निः इति 16. A इत्यन्नाधिका A's alt. अन्यारोपाधि C. अन्यारोपाधि D. F. रित्यर्थः । तथाहि 17. A's alt. C. पेधना प्रकृत समर्थनं 18. A. H. कारेण मम 19. A. E. H. हि नि 20. Omitted in C. 21. D. तस्य 22. A's alt. अप 23. A's alt. C. omit किन्तु 24. A's alt. C. अपीति ।

* The T. S. S. Edition adopts the reading कारकान्तर Samudrabandha says that गुरुवचसि etc is an illustration of उल्लेख having the locatives in वचसि, उरसि etc. The commentator then gives his own illustrations for the other Cases. Jayaratha expressly says that kārakāntara is a wrong reading (p. 62).

प्रस्तावादारोपविषयापह्नुतावारोप्यमाणप्रतीतावपह्नुत्याख्योऽलङ्कारः । तस्य त्रयी बन्धच्छाया अपह्नवपूर्वक आरोपः, आरोपपूर्वकोऽपह्नवः, छलादिशब्दैरसत्यत्वप्रतिपादकैर्वापह्नवनिर्देशः । पूर्वकभेदद्वये वाक्यभेदः । तृतीयभेदे त्वेकवाक्यम् । आद्यो यथा—

> यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते
> तदाचष्टे लोकः शशक इति नो मां प्रति तथा ।
> अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
> कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥

अत्रेन्दवस्य शशस्यापह्नव उपक्षिप्ते शशकप्रतिवस्तुकिणवत इन्दोरारोपो नान्वयघटनां पुष्यतीति न निरवद्यम् । तत्तु यथा—

---

ज्ञेयम्[1] । इदमिति वचन[2] क्रियाविशेषणम् । [3]यत्त्वेवमिदमप[4]ह्नुतिवचन तत्प्र[5]क्रान्ताप[6]पह्नव[7]वैधर्म्येणेत्यर्थः । लक्षण निष्कष्टुमाह—आरोपप्रस्ता[8]वादित्यादि[9] । आरोपप्रस्तावो रूपका[10]दिप्रभृतीति ॥

तत्प्रकारवैचित्र्यायाह—तस्य त्रयीत्यादि । त्रयी त्रिप्रकारेत्यर्थः । बन्धच्छाया प्रथ[11]नवैचित्र्यम्[12] । त्रैविध्य विविनक्ति—अपह्नवपूर्वक इत्यादि । छलादय[13] छलच्छद्मकैतवनिभादय[14] । तैरपि[15] हि[16] नञ[17]र्थ एव अवस्थाप्यते । [18]तर्हि [19]तृतीयभेदे को विच्छित्तिविशेष इत्यत आह—पूर्वक[20]इत्यादि ।

यदेतदिति[21] । नो[22] मा प्रति तथेति प्रकृता[23]पह्नवः उत्तरार्धेऽप्रकृतमायनमिति । यद्यपि अपह्नुतिरेषा तथापि दोषानुविद्धत्वात् उदाहरणाभास इत्यत[24] आह—अत्रेन्दवस्येत्यादि । शशक[25]प्रतिवस्त्विवति । अपह्नोतुमिष्टस्य[26] शशकस्य यः प्रतिवस्तुभूत उल्का[27]पातकिण[28] तस्यैवारोपो न्याय्य । न पुनस्तद्वत इन्दोरतो नान्वय[29] सघटते । इत्य लक्षणोपपन्नोऽपि[30] अलकारो दोषानुविद्ध[31]स्सन् आभासी[32]भवतीति व्युत्पाद्य[33] अन्यमुदाजिहीर्षुराह—तत्तु यथेति ॥

---

1 A C D ध्येयम् । 2. E 'वचन' 3 A यान्यवमिद A's alt H यत्त्वेवमिद C. यद्येत 4 A अपि 5 A's alt. प्रहृता 6. D. F H. अनप 7. H. इति 8 D. प्रस्ताव इति 9 H आदि । मादुरापह्नति (P. 65) 10. A. C. H. रूपक 11. A. C F. H I. प्रबन्ध 12. A's alt. 'कथने' 13 All except E Omit छलादय C. छलादि शब्दै छल 14. A's alt C. निदर्शनादयः 15. D. तैरपि 16 A. C. हीन इत्यर्थ एव 17 D. repeats. नञर्थ E. न अर्थ 18. A's alt. तत्र 19 C. त्रितय 20. A C. पूर्वमित्या D. पूर्वक इ 21 A's alt. इत्यादि । 22. A. C. नो मायेति । A's alt न तस्मा प्रति 23. A's alt. C. प्रकान्ता 24 E. इत्यत 25. F शशाङ्क 26. A. C स्याय प्रति A's alt. D F. स्यय: 27. D. उल्कापातकिन 28 A. F. किरण C. किणि 29 A's alt. C. अन्वयस्य स्यघट 30. C. omits अपि 31. D 'विद्धस्सा भा' 32. C. आभासं 33 A's alt. C. D. पाद्य ।

पूर्णेन्दोः परिपोषकान्तवपुषः स्फारप्रभाभास्वरं
नेदं मण्डलमभ्युदेति गगनाभोगे जिगीषोर्जगत् ।
मारस्योच्छ्रितमातपत्रमधुना पाण्डु प्रदोषश्रिया
मानोन्नद्धजनाभिमानदलनोद्योगैकहेवाकिनः ॥

द्वितीयो यथा—

विलसदमरनारीनेत्रनीलाब्जषण्डान्यधिवसति सदा यः संयमाधःकृतानि ।
न तु रुचिरकलापे वर्तते यो मयूरे वितरतु स कुमारो ब्रह्मचर्यश्रियं वः ॥

तृतीयो यथा—

उद्भ्रान्तोज्झितगेहगूर्जरवधूकम्पाकुलोच्चैःकुच-
प्रेङ्खोलामलहारवल्लिविगलन्मुक्ताफलच्छद्मना ।
सार्धं त्वद्रिपुभिस्त्वदीययशसां शून्ये मरौ धावतां-
भ्रष्टं राजमृगाङ्क ! कुन्दमुकुलस्थूलैः श्रमाम्भःकणैः ॥

अत्र शून्य इत्यस्य स्थाने मन्ये-शब्दप्रयोगे सापह्नवोत्प्रेक्षा स्थापयिष्यते । 'अहं त्विन्दुं मन्ये' इति वाक्यभेदे 'मन्ये' शब्दप्रयोगे नोत्प्रेक्षेति च

---

पूर्णेन्दोरिति । दृष्टश्रुताद्यपराधजन्मा रोषो मानः । तेनोन्नद्धः उत्सिक्तो जनः शृङ्गारी लोकः तस्याभिमानरसा[1]न्त्वाराहिष्णुता । हेवाकः स्वाच्छन्द्यम् । अत्र न मण्डलम् अपि तु आतपत्रमे[2]वेत्यन्वयो घटते [3]अयमपह्नवपूर्वक[4] आरोप[5] ॥

आरोपपूर्वकमुदाहरति—विल[6]सदमरेति ॥ संयमो [7]मनोनिग्रहः । तेनाधःकृतान्याक्रान्तानि । अत्र नेत्रषण्डानि अध्यास्ते । न तु मयूरे वर्तत इत्यारोपपूर्वकता[8] ।

उद्भ्रान्तेति[9] । सार्धं धावतामित्यनेन यशसस्तत्प्रदेशव्याप्तिः समकालमेव सूचिता । मुक्ताफलच्छद्मना । अम्भः[10]कणैर्भ्रष्ट[11]मित्यत्र हि[12] न मुक्ताफलानि, अपि तु अम्भःकणा एवेति प्रतीतिः[13] । इत्य[14]मेवापह्नुतिम् उत्प्रेक्षाङ्गत्वेन प्रतिपिपादयिषुरुपक्षिपति—अत्र शून्य [15]इत्यस्य इत्यादि ॥ "मन्ये मरावि"त्यादि पाठे [16]हि मन्येशब्दमाहात्म्यादुत्प्रेक्षा । छद्म[17]शब्दत[18]स्त्वपह्नुतिः सा चोत्प्रेक्षाङ्गं [19]भविष्यति । इत्थमुत्प्रेक्षाङ्गत्व[20] न केवलं तृतीयभेदस्यैव, यावता पूर्वभेद[21]द्वयस्यापि [22]संभवतीत्याह अहं त्विन्दुमित्यादि ॥ वाक्यभेदग्रहण प्राथमिकभेद[23]द्वयप्रथनाय । इत्थ[24]

---

1. A's alt. C. F. सत्त्वा 2. E. omits. एव 3. A's alt. आद्यः C, आद्याय 4. A. C. D. omit. क. 5. A's alt. आरोप्यः। C. आरोप्य 6. A's alt. विक्रम 7. D. मान 8. A. कृता 9. A's alt. C. भ्राम्येति 10. A. अम्बु C. D. अयः, 11. A. E. F. भ्रष्टं 12. C. ही 13. A's alt. प्रतीति 14 A's alt. E. F. H. I. इमां 15. A. F. इत्यादि A's alt. इत्यास्यन्वादि 16. Omitted. in D. 17. A's alt. C. D. E. F. H. I. छन्न 18. A. C. D. F. H. I. omit. त 19. A's alt. C. D. E. F. H. I. इति भ 20. C. अत्र न 21. A's alt. E. पूर्वक 22. A's alt. C. H. omit सं 23. A's alt. C. 'भेदग्रहणाय' 24. D. इत्थं ।

वक्ष्यते। एतस्मिन्नपि भेदेऽपह्नवारोपयोः पौर्वापर्यविपर्ययभेदद्वयं संभवदपि न पूर्ववच्चित्रतामावहतीति न भेदत्वेन गणितम्। तत्रापह्नवपूर्वक आरोपे समनन्तरमुदाहृतम्। आरोपपूर्वके त्वपह्नवे यथा—

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।
द्वीपाद् द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्यच्छलेन॥

क्वचित्पुनरसत्यत्वं वस्त्वन्तररूपताभिधायिशब्दनिबन्धनम्। यथा—

निरू[1]पाऽप्यपह्नुतिरुत्प्रेक्षाङ्गत्वेन सूचिता। ननु[2] च्छलादिप्रयोगेऽप्यपह्नवारोपपौर्वापर्य-विपर्ययनिबन्धनं वैचित्र्यं किं नोच्यत इत्यत आह—एतस्मिन्नपीति॥

अत्रेद[3]माकूतम्। यद्य[4]पह्नवारोपपौर्वापर्य[5]विपर्यये भेदद्वयं भवत्येव, न तु चमत्कारः कश्चित्। न[6] हि भेदसंभवोऽलङ्कारप्रयन[7]हेतुः। कि[8]न्तु सचमत्कारभेदसंभवः। सचमत्कारता च सति वाक्यभेदे स्यात्, एकवाक्यतायां तु च्छलादिशब्दस्य पौर्वापर्यविप[9]र्ययप्रस[10]ङ्गेऽपि न प्रतीतिभेदः कश्चित्[11]। क्रियाविशेषण[12]त्वेन क्रियापेक्षया प्रतीतौ प्राथम्य[13]नियमात्[14] [15]अत[16]श्छलादिप्रयोगे द्विधा न गणितम्। वैचित्र्याभावमेव सोदाहरणं दर्शयितुमाह—तथा[17]पह्नवेत्यादि। [18]समनन्तरमिहोक्त[19]प्रतियोगिकम् उद्भ्रान्तो[20]ज्झितेत्यत्रेति यावत्।

ज्योत्स्ना भस्मेति। छुरणमुद्धूलनम्[21]। अन्तर्धानं रात्रिपक्षे[22] तिरस्कृतिः विलयः, अन्यत्र स्वहृदयत्व[23]सिद्धिः। मुद्रा[24] भिक्षापिण्डस्तदर्थं कपालं मुद्राकपालम्। परिमल[25] (·) परिमर्दस्तेन तज्जनितं लक्ष्म[26] लक्ष्यते। यथाच्छलादिप्रयोगेण अर्थाक्षेपात्[27] असत्यत्वं, तथा प्रकारान्तरेणापि[28] संभवतीत्याह—क्वचित्पुनरित्यादि। वस्त्वन्तरं प्रकृतापह्नव-स्थम्।

अमुष्मिन्निति। अत्र हि धूमशिखा रोमावलिवपु[29] [30]परिणमतीत्युक्तौ, न रोमा-

1. A's alt. निरूप C. निरूप्य 2. A's alt. C. H. न तु। 3. A. C. H अत्रैतत्प्राकृतं 4 H यद्यपि अ 5 C. पर्यभेद 6. E. न ॥ 7. A. C. H. प्रधान 8. C. तु: सच 9. E. F पर्याय 10. E. F. प्रयोग 11. Omitted in D. 12. A's alt त्वेनु 13. C प्राधान्य 14. A's alt. नियमनात्। 15. D. एत 16 E. तथा 17 D तथा 18 D. सदन 19 A's alt. D. E. F. सरन्वं 20. A's alt. C. उक्तिते H स्तोनते 21. C H. नम्। रात्रि 22. A. C. पक्षे विरतिः स्व A's alt F. पक्षे विलय· तिरस्कृतिः H पक्ष विल 23. H. Omits 'स्व' 24. A's alt. C अभिलापि 25. All mss मल 26 F लक्ष्यते। य 27. A's alt. C. अपेक्षायां स्यादसत्य H अपेक्षा पाद सत्य 28. A's alt C. प्रधानान्त। 29. A. D E. F. H I. वर्ती 30 D परिणम।

अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः ।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ इति ॥

एवमभेदप्राधान्ये आरोपगर्भानलङ्कारांल्लँक्षयित्वा अध्यवसायगर्भांल्लँक्षयति । तत्र—

अध्यवसाये व्यापारप्राधान्ये उत्प्रेक्षा ॥२२॥

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः । स च द्विविधः—

---

वलिरपितु धूम[1]शिखेति प्रतीयते । अनेनैषा प्रतीयमानापि दर्शिता मन्तव्या ॥

प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः ।
नञा[2] च्छलादिशब्दैश्च सा शब्दान्तर[3]तस्त्रिधा ॥
स्याद्भेदाभेदतुलया[4] विच्छित्तिरुपमादिकः ।
रूपकादिस्त्वभेदांशे[5] मुख्ये[6] त्वारोपसंश्रयात् ॥

तामेव[7] सङ्गतिं विशदीकुर्वन् उत्प्रेक्षाप्रस्तावायाह—एवमभेदप्राधान्य इत्यादि । आरोपमूला रूपकादयो अपह्नुत्यन्ताः । अध्यवसायगर्भास्तु[8] उत्प्रेक्षादयः । अत[9]एव टीका—तत्रेति[10] । अध्यवसायगर्भेषु मध्ये[11] इत्यर्थः ।

अथ सूत्रम्—अध्यवसाये व्यापारप्राधान्ये उत्प्रेक्षा ॥ अध्यवसायो निश्चयज्ञानम् । स च लोके द्विरूपः सम्यगात्मा[12] मिथ्यारूपश्च । उभयरूपोऽप्ययं नालङ्कारः । नहि शुक्तिरिति सम्यगध्यवसाये रजतमिति मिथ्याध्यवसाये वा विच्छित्तिः[13] काचित् । उभय[14]विलक्षणस्तु जानतोऽप्येतस्मिन् तदेवेति योऽध्यासरूपस्स इहालङ्कारत्वेन परिगृह्यते । तस्यैव [15]अलौकिकस्य विच्छित्तिरूपत्वात् ।

तस्य च द्वयी गतिः । कदाचिदध्यवसाया[16]त्मनः स्वरूपस्य प्राधान्यं, कदाचिदध्यवसितस्य विषयस्य । इत्थं च सत्यध्यवसाये विषयभूते यदा अध्यवसानस्य प्राधान्यं [17]तदोत्प्रेक्षाऽलङ्कार इति सूत्रार्थः[18] । तदेतदवयवशो व्याचष्टे—विषयनिगरणेनेत्यादि । निगरणं[19]निगलनम् । स्वरूपतोऽपलाप इत्यर्थः । [20]विषयं निगीर्णवतो विषयिणो विषयितादात्म्येन प्रतीतस्स इहाध्यवसायो अभिमत इति[21] यावत् । अनेनालौकिकस्यैवा-[22]

---

1. A's alt. C. शिखेव 2. A's alt. C. नञा 3. A. अन्तरस्त्रि 4 A's alt. तुल्या 5. A's alt. आदिष्वभे C. आदिषु भे 6. A's alt. C. मुख्यैकारोपसंभवात् H. मुख्ये चारो 7. As' alt. D. E. F. H. एनां 8. D. गर्भेषु 9. A's alt. C. अतस्तट्टीका 10. A. D. तत्रति 11. D. E. मध्या 12. A's alt. C. सत्यात्मा 13. C. त्तिः इहालङ्कार 14. E. तदुभय··· 15. C. Omits अ 16. Except F all read वसानात्म 17. A repeats. तदोत्प्रेक्षा A's alt. C. H. तत्र 18. A's alt. C. सूत्रार्थः 19. A. निगरणं 20. A's alt. D. E. येयं वि C. येयं 21. D. विषयाय 22. A. B. C. F. G omit एव ।

साध्यः सिद्धश्च । साध्यो यत्र विषयिणोऽसत्यतया प्रतीतिः। असत्यत्वं च विषयिगतस्य धर्मस्य विषय उपनिबन्धे विषयिसंभवित्वेन च प्रतीतेः । धर्मो गुणक्रियारूपः तस्य संभवासंभवप्रतीतौ संभवाश्रयस्य तत्रापरमार्थतयाऽसत्यत्वं प्रतीयते, इतरस्य तु परमार्थतया सत्यत्वम् । यस्यासत्यत्वं, तस्य सत्यत्वप्रतीतावध्यवसायः साध्यः । अतश्च व्यापारप्राधान्यम् । सिद्धो यत्र विषयिणो वस्तुतोऽसत्यस्यापि सत्यतया प्रतीतिः । सत्यत्वं च पूर्वकस्यासत्यत्व-

---

ध्यवसायस्य अलङ्कारबीजत्वं दर्शितम् । व्यापारप्राधान्यग्रहणस्य व्यावर्त्यमुद्घाटयितुमाह—स च द्विविध इत्यादि[1] । तत्र साध्यस्य[2] स्वरूपमाह—साध्यो यत्रेत्यादि । साध्य- इति [3]यदेक वाक्यमाक्षिप्तेन[4] तच्छब्देनार्थेनाभिसबन्ध. । उत्तरवाक्यगतोऽपि यच्छब्द पूर्व[6]वाक्या[7]च्छब्दोपादाननिरपेक्ष[8] एव तदर्थेन[9] सम्बन्ध[10]मीप्टे । यत्र[11] विषयिणोऽसत्यतया प्रतीति स[12] साध्य[13] इत्यर्थ । अत्रेदमनु[14]सन्धेयम् । मुख मुखत्वेन जानन्नेव[15] यदा[16] नून चन्द्र इति सभावयति तदा विषयी चन्द्रो मुखत्वेनासत्य प्रतिभाति तदाध्यवसाय साध्य [17] ।

ननु साध्य एवास्तु अध्यवसाय सिद्धो वा, [18]अभेदप्रतीतौ कथमसत्यत्व[19] इत्यत आह—असत्यत्व चेत्यादि । विषयिगतस्य चन्द्रादिगतस्य माधुर्यादि धर्मस्य[20] विषये, मुखादावुपनिबन्धे, नून चन्द्र इत्यस्या दशाया विषयिण्येव[21] सभव[22]स्यय विषये तु न सभवतीति प्रतीयमानत्वात्[23] । विषयविषयिणोरभेदस्फुरणेऽपि धर्मस्या[24]सत्यताप्रतीत्या न प्ररोहति । अतो[25]ऽध्यवसानव्यापारस्य साध्यता । ननु को धर्म ? किंप्रमाणा चासौ[26] ? तदाश्रयस्य सत्यत्वासत्यत्व[27]प्रतीतिरित्यत आह—धर्मो गुणक्रियारूप.[28] इत्यादिना । गुणक्रिया[29]रूप इति धर्मस्य साकल्यकथनात् तदुभयमूलतया उत्प्रेक्षासभ[30]वस्सूचित. । अस्य[31] हि धर्मस्य सभवोऽसभवश्च विषय्या[32]श्रयतया सभव [33]असभवस्तु विषया[34]श्रयतया । इत्थ[35] च सति[36] सत्यत्वासत्यत्व[37]प्रतीतिर्ना[38]प्रामाणिका । कुतः ? सभवाश्रयस्य तत्रावस्थाया परमार्थबुद्ध्यनुदयात् असत्यत्व प्रतीयते । यतस्तदितरस्य [39]सत्यत्वमेव

---

1. H. आदि । अत्रेदं 2. D ष्यस्वरू 3. A यदेकं C. यदेक E इयदेव एक F. यदेवैक 4. F आक्षिप्यते 5. D. F. शब्दार्थेन 6. A omits पूर्व 7. C. वाक्य F. वाक्ये 8 C पेक्षया 9 D तदनेन न 10 C. सम्बन्धु 11. A C. यत्र यत्र 12 C. D. F. omit स 13 C. साध्यत 14. H. इदमनु 15. H. अपि 16. F एव चन्द्रं चन्द्र इति 17 E यः इति । 18 A. C. E. H नाभेद 19 A D. F. H असत्यत्व 20 A. धर्ममात्रस्य 21. Except D E. all read विषयिणीव 22. C. भव इत्यर्थ 23 A C D. F नूनं चन्द्र इत्यस्यां दशायां वि 24. A. असत्या अ D. त्यासत्यासत्यत्व H असत्य 25. C. अतोऽध्याप्य 26. C. चाभासौ 27. D omits त्व 28. A C F H चादि 29 A. C. D. H. I. क्रियादि 30. A's alt. C. H, सूचित 31. A C तस्य च 32 A's alt. C. विषयाश्र 33 C. असंभव 34. A's alt. C. विषय्या 35 C. इथं 36. Omitted in D 37. A's alt. C. त्वमप्राक 38. A. C. H. अप्रामाणिकाय 39 A. C. H. असत्य ।

निमित्तस्याभावात् । अतश्चाध्यवसितप्राधान्यम् । तत्र साध्यत्वप्रतीतौ व्यापार-प्राधान्ये अध्यवसायः संभावनमभिमानस्तर्क ऊह उत्प्रेक्षेत्यादिशब्दैरुच्यते । तदेवमप्रकृतगतगुणक्रियाभिसंबन्धादप्रकृतत्वेन प्रकृतस्य संभावनमुत्प्रेक्षा । सा च वाच्या इवादिभिः प्रदर्श्यते । प्रतीयमानायां पुनरिवाद्यप्रयोगः । सा च जातिक्रियागुणद्रव्याणामप्रकृतानामध्यवसेयत्वेन चतुर्धा । प्रकृतस्यैतद्भेद-योगेऽपि न वैचित्र्यमिति न ते गणिताः । प्रत्येकं च भावाभावाभिमानरूपतया द्वैविध्येऽष्टविधत्वम् । भेदाष्टकस्य च प्रत्येकं निमित्तस्य गुणक्रियारूपत्वे षोडश भेदाः । तेषां च प्रत्येकं निमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशत्प्रभेदाः । तेषु च

---

[1]परमार्थत्वात्[2] । चर्चितमयं निष्कर्षयति[3]—यस्यासत्यत्वमित्यादि । अतश्चेति । यत इत्यमध्यवसाय साध्य अत[4] उत्प्रेक्षायामध्यवसाय[5]व्यापारस्यैव प्राधान्यमित्यर्थः ।

अथ सिद्ध विवेचयति—सिद्धो यत्रेत्यादि[6] । सिद्ध इति पूर्ववदेव वाक्यम् । स इति द्योतित[7] योऽस्माभिरित्यत आह यत्र विषयिणो वस्तुत इत्यादि । यदा तु मुखमुद्दिश्य चन्द्रोऽयमिति प्रयोग तदा[8] वस्तुतो[9]ऽसत्योऽपि[10] विषयी सत्यतया प्रतीयते । [11]सत्यत्वप्रतीतेर्हेतुमाह—सत्यत्व चेत्यादि । सभवाश्रयस्य [12]अपरमा-र्थत्व[13]प्रतीतिरसत्यत्व[14]स्य निमित्तम् । यत इत्यमतश्चाध्य[15]वमितस्यार्थस्यैव प्राधान्य, तदाऽतिशयोक्तिर्वक्ष्यते । यदा साध्यत्वप्रतीति तदाध्यवसायस्य पर्यायान्[16] व्युत्पादयति—तत्र साध्यत्वेति । [17]चर्चितलक्षणनिष्कर्षणम्[18]—तदेवमित्यादि ।

तस्यास्सामान्यतस्तावद्द्वैविध्यमाह—सा च वाच्येत्यादि । तत्रापि सामान्याद्वानु-विद्य दर्शयति—सा च जातिक्रियेत्यादि । अध्यवसे[19]यत्वेन सभाव्यत्वेन ।

नन्व[20]प्रकृतग्रहण किम् ? प्रकृतेऽप्येव सभवादित्यत आह—प्रकृतस्यैतदित्यादि । प्रकृत हि लौ[21]किक कविक्लृप्त[22] विच्छित्तिविधुरतया न वैचित्र्याय[23]। भेदचतुष्ट[24]यमपि द्विधा दर्शयति—प्रत्येक च भावाभावेत्यादि । भावरूपा सभावना[25] [26]अभावरूपा[27]चेति । अथ व्यापारभेदा[28]द्भेद । पूर्वं व्यापारवद्भेदात् व्यापारनिमित्तभेदादाह—भेदाष्ट[29]कस्य चेत्यादि । भेदषोडशकमपि निमित्तोपादानानुपादानाभ्या द्विगुणयति—तेषा[30]चेत्यादि । अथ सभा-व्यस्य हेत्वादि[31]रूपतया पुनस्त्रैविध्यमाह—तेषु च प्रत्येकमित्यादि । वा (च्या)[32] निग-

---

1 A. C H अपरम 2 C त्वात्व । 3 F कर्षति 4 D अत्र 5 A C D E H I. साय साध्यस्य व्यापा 6. H त्यादि तत्र तुल्ययोगितार्थ (see below under Tulyayogita) 7. Except A C. all read द्योतित 8 C तद्वस्तु 9 E. सत्यो 10. D omits अपि 11 D सत्यत प्रतीयते हे 12 A F omit अ 13 A's alt. अर्थिका C अर्थत्वाप्र D E अर्थताप्र 14 D omits त्व 15 C. चाध्यवसित मार्थ 16 C. पर्यायान्त्या D पर्याया व्यु 17. E. चर्चित 18 D. E. कर्षति । 19 A's alt धेयत्वेन 20. D अप्रस्तुत 21. A's alt. C. तार्किक 22 A C F H क्लृप्ति 30. A C F H. I. वैचित्र्यायाह । 24 D चतुष्क 25 C भावनात् 26 C omits अ. 27 A C F. रूपा समावनत्यर्थ । अथ 28 A C. F. भेदाभे 29 A अष्टक 30. D. तदेषा 31 A C. F हेतुत्वा 32. A C. H I. वाच्यत्रि D F. वाच्य निग ।

प्रत्येकं हेतुस्वरूपफलोत्प्रेक्षणरूपत्वेन षण्णवतिर्भेदाः । एषा गतिर्वाच्योत्प्रेक्षायाः । तत्रापि द्रव्यस्य प्रायः स्वरूपोत्प्रेक्षणमेवेति हेतुफलोत्प्रेक्षाभेदास्ततः पातनीयाः । प्रतीयमानायाश्च यद्यप्युद्देशत एतावन्तो भेदाः तथापि निमित्तस्यानुपादानं तस्यां न संभवतीति तैर्भेदैर्न्यूनोऽयं प्रकारः । इवाद्यनुपादाने निमित्तस्य चाकीर्तने उत्प्रेक्षणस्य निष्प्रमाणत्वात् । प्रायश्च स्वरूपोत्प्रेक्षात्र न संभवति । तदेवं प्रतीयमानोत्प्रेक्षाया यथासंभवं भेदनिर्देशः । एषा चार्था-

---

मयति[1]—एषा गतिरित्यादि । तत्रापोह्य मत्रायाह्—तत्रापि द्रव्यस्येत्यादि । पात[2]-नीया हाप[3]नीया । प्रतीयमाना विभक्तुमाह्—प्रतीयमानायाश्चेत्यादि । उद्देशत एतावन्त । लक्षणपरीक्षयोस्तु कृतयो कतिचन हीयन्त इति भाव । ये हीयन्ते तान् प्रस्तौति—तथापि निमित्तस्येत्यादि[4] । तैरिति (निमित्ता[5])नुपादानविबन्धनै । अय प्रकार इति प्रतीयमानोत्प्रेक्षाप्रकार इत्यर्थ. । निमित्तानुपादान न सभवतीति यत्प्रतिज्ञात तत्प्रमाणेन द्रढयति—इवाद्यनुपादान इत्यादि । इवा[6]द्यनुपादाननिमित्तकीर्तनयोरन्य[7]तराभावे न किञ्चित्प्रमाणमुत्प्रेक्षणे । अनुपात्तनिमि[8]त्तका हि या वाच्योत्प्रेक्षा[9] तस्याम् इवाद्युपादानबलादेवोत्प्रेक्षणप्रतीति । इह पुनरिवा[10]द्यनुपादानवन्ध्याया[11] प्रतीयमानाया निमित्त[12]-बलादेवेति निमित्तोपादाननियम । स्वरूपोत्प्रेक्षणमपि न सभवतीत्याह्—प्रायश्चे[13]त्यादि । प्रायोग्रहणात् पर्यायोक्तनयेन[14] स्वरूपस्य क्वचित्सभवदप्युत्प्रेक्षण गम्यस्यापि भङ्ग्यन्तराभि[15]धानाय्न निरूपणार्हमिति द्योतितम् । प्रतीयमाना[16] निगमयति—तदेव[17]मिति । यथासभव सभव[18]मनतिक्रम्य ।

तथा हि प्रतीयमानोत्प्रेक्षा तावत् वा[19]च्योत्प्रेक्षाप्रकृतिका । वाच्योत्प्रेक्षा [20]षण्णवतिधोद्दिष्टा । यथा जातिगुणक्रियाद्रव्याणाम् [21]उत्प्रेक्ष्यत्वेन चतस्र उत्प्रेक्षा । जातय [22] प्रतिस्व चतुर्विधातिधा प्रथन्ते । [23]यथा जात्युत्प्रेक्षा तावत् भावा[24]भावाभिमानरूपतया [25]द्विधा । द्विविधा[26]ऽपि गुणनिमित्तिका, क्रियानिमित्तिका च । इत्य[27] चतुर्धा । साचो[28]पात्तनिमित्तानुपात्तनिमित्ता चेत्यष्टधा । अष्टविधाऽपि हेतुस्वरूपफलोत्प्रेक्षा[29]रूपतया त्रिविधा इति चतुर्विंशतिप्रकारा । अनेनैव नयेनान्यदप्युत्प्रेक्षा[30]त्रय प्रत्येक चतुर्विंशतिधा

---

1. A C गमयति— एषा गतिरि 2 D पात नाना: 3 D हापनीया । 4 A. C. F आदि मिमि 5 All mss निपातानु 6 A C इवाद्यनुपादाननिमित्तकीर्तनयोरन्यतरा-भावे F इवाद्यनुपादान 7 D अन्यत्वाभावे हि न 8 Except F all read नि.मत्तिका 9 Except F all read प्रेक्षा इह पुन- 10 A. C. D E. H I उपादान 11 A's alt दानबलादेव 12. C. निमित्त 13 A C चित्तेत्या A's alt. D E. यत्तेत्या 14. A C. न क्वचि 15 A C E F अन्तरतोऽभि 16 A's alt. C मानं 17 A. C D. E तदेतदिति F. तेवेदमित्यादि 18 C समगति 19 C. प्राच्यो 20 D E तु प 21 A C प्रेक्ष्यतया F. प्रेक्षत्वेन 22 C. इति प्रति 23 D यथा 24 D omits भावा 25 Omitted in D 26 A C F द्विधा 27 A C. सा चतु 28 D इत्य चो 29 A C प्रेक्षतया 30. D प्रेक्षाश्रयं ।

**अथापि धर्मविषये श्लिष्टशब्दहेतुका क्वचिद् दृश्यते । क्वचित्पदार्थान्वयवेलायां सादृश्याभिधानादुपक्रान्ताप्युपमा वाक्यार्थतात्पर्यसामर्थ्यादभिमन्तृव्यापारोपारोहक्रमेणोत्प्रेक्षायां पर्यवस्यति । क्वचिच्छलादिशब्दप्रयोगे सापह्नवोत्प्रेक्षा**

मन्तव्यम् । तथा च[1] प्रत्येकं त्रिस्क[2]न्धिका एता हेतुस्वरूपफलोत्प्रेक्षणतया[3] स्कन्धत्रयमपि प्रतिस्वमष्टविधम् । तथा हि उपात्तगुणनिमित्ता[4] भावाभिमानरूपिणी[5] हेतुजात्युत्प्रेक्षा[6] । सैवानुपात्तगुणनिमित्ता । तथोपात्तक्रियानिमित्ता, सैवानुपात्तक्रियानिमित्ता [7]चेति भावाभिमानरूपतया चतुर्धा । एवमभावाभिमानरूपतया चतुर्धेति हेतूत्प्रेक्षास्कन्धो[8]ऽष्टविधः[9] । अनयैव रीत्या स्वरूपोत्प्रेक्षास्कन्धः फलोत्प्रेक्षास्कन्धश्च प्रतिस्वमष्ट[10]विधेति[11] जात्यु[12]-त्प्रेक्षा[13] त्रिस्कन्धतया चतुर्विंशतिधा ।

एवं गुणक्रियाद्रव्योत्प्रेक्षा[14]ऽपि प्रत्येकं चतुर्विंशतिधा विज्ञेया[15] । तत्र द्रव्योत्प्रेक्षायां हेतुफलोत्प्रेक्षापाते[16] षोडशकहानिः[17] । अतः स्थूलदृशा तावद्[18] अशीतिविधा वाच्या[19] । प्रतीयमानायां[20] तु[21] अनुपात्तनिमित्ताया[22] निरवशेषं[23] पाते अष्टचत्वारिंशद्धानिः । उपात्तनिमित्तायां च स्वरूपो[24]त्प्रेक्षा[25]पाते षोडश[26]कहानिः । अतो द्वात्रिंशद्भेदा प्रतीयमाना मन्तव्याः ।

उभयरूपाया[27]मपि अस्य वैचित्र्यान्तरायाह—एषा चेत्यादि । अर्थाश्रया[28]ऽपि अर्थालंकारोऽपीत्यर्थः । धर्मो[29] गुणक्रियात्मको[30] विषयो यस्य सः । श्लिष्टशब्दः कश्चिद्धेतुर्भवत्यस्याः । उत्प्रेक्षा ह्यर्थालङ्कारः । श्लेषः पुनरुभयालङ्कारोऽलङ्कारान्तरबाधकश्च । तथाऽपि धर्मविषये श्लिष्टशब्द[31]हेतुका संभवत्येषा न [32]बाध्यते, न चो[33]भयालङ्कारप्राप्तिरिति यावत् । यथेत्थं श्लेषमुत्प्रेक्षाङ्गं तयोपमा[34]ऽपि अङ्गमस्याः भवतीत्याह—क्व[35]चित्पदार्थान्वयेत्यादि । पदार्थसमन्वयदशायाम् उपम[36]योपक्रमः । तयोप[37]क्रान्ताऽप्युपमा[38] वाक्यार्थतात्पर्यपर्यालोचनमहिम्ना अभिमन्तु[39]स्संभावयितु[40]र्व्या[41]पारो[42]ऽपारोहक्रमेण

1. Omitted in A. C. 2. A's alt. स्कन्दि C. त्रिस्कन्धि 3. E. क्षण-रूपतया 4. D. त्वाति भावा 5. C. रूपण F. रूपिणीहेतु 6 F. प्रेक्षारूपतया स्कन्ध-त्रयमपि । सैव 7. A. C. omit च 8. A. स्कन्धे 9. A C. F. विधा 10. D. भाष्टधेति 11. C. विधत्वेति 12. A's alt. जात्युत्प्रे F. द्वात्प्रे C. तस्योत्प्रेक्षा 13. A. C. E. F. H. I. प्रेक्षास्त्रि. 14. A. प्रेक्षाया C. प्रेक्षा ... प्यपि 15. D. E. ज्ञेयाः 16. A. C. पाते स्थूल D. पाते अतः षोड 17. D. निः तदशीति 18. A. ... षोडशकस्या तथा अ F. द् षोडशकहानिः अदर्शा 19. D. भाव्या 20. D. मानायां तु 21. A. C. F. न अनु 22. A. C. या निपाते 23 D. शेषा 24. All except D read. त्रिरूप 25. E. प्रेक्षणपाते. 26. D omits श 27. D. याऽपि 28. A. C. F. आश्रयोऽपि 29. A. C. धर्मा 30. A. D. F. आत्मका 31. C. शब्दहेतु 32. A. C. E. F. H. I. न च 33. A. C. F. न कुम 34. D. उपमाऽपि 35. D. तस्मिन्पद् 36. A. C. उपमया A's alt. उपमाया F. उपमोप 37. A's alt. क्रमान्ता C. क्रमाक्रा 38. D. उपमाम 39. D. मन्त 40. D. भावयितुं 41. C. D. व्यापारोहक्रमे 42. A. रपारोह

भवति । अतश्चोक्तवक्ष्यमाणप्रकारवैचित्र्येणानन्त्यमस्याः । सांप्रतं त्वियं दिङ्मात्रेणोदाह्रियते । तत्र जात्युत्प्रेक्षा यथा—

स वः पायादिन्दुर्नवबिसलताकोटिकुटिलः
स्मरारेर्यो मूर्ध्नि ज्वलनकपिशे भाति निहितः ।
स्रवन्मन्दाकिन्याः प्रतिदिवससिक्तेन पयसा
कपालेनोन्मुक्तः स्फटिकधवलेनाङ्कुर इव ॥

अत्राङ्कुरशब्दस्य जातिशब्दत्वाज्जातिरुत्प्रेक्ष्यते ।

क्रियोत्प्रेक्षा यथा—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः ।

अत्र लेपनवर्षणक्रिये तमोनभोगतत्वेनोत्प्रेक्ष्येते । उत्तरे त्वध

---

सभावनव्यापारस्य प्रतीतिविश्रा[1]न्त्यन्त उपर्युपरि प्रसर[2]परिपाटया उत्प्रेक्षाया पर्यवस्यति । अथ अपह्नुतिप्रस्तावः[3] । उत्प्रेक्षाङ्गत्वेन[4] यदपह्नुति[5] प्रतिज्ञाता, तस्या अयमवसर इत्यभिप्रायेणाह—क्वचिच्छलादि[7] इत्यादि । इत्थ [6]ये प्रकाराः उक्ता., ये च[8] वक्ष्यन्ते तेषा वैचित्र्यादस्या इयत्तैव नास्तीत्याह—अतश्चोक्तवक्ष्यमाणेत्यादि ।

ननु यद्यानन्त्य कथमुदाहरणतो दर्शयिष्यते[9] इत्यत आह—साम्प्रतं[10]मित्यादि । दिङ्मात्रेणेत्यादि । यथा दिङ्मात्रेणोदाहृता अपि न्यायत[11]स्साकल्येन ज्ञातु[12]शक्यते[13], तथेति यावत् । उद्देशक्रममाविश्चिकीर्पुराह—तत्र जात्युत्प्रेक्षा यथेति ।

स वः पायादिति । कुटिलत्वलक्षणो गुणो निमित्तम् । अङ्कुरशब्दो जातिवचनः । अत उपात्तगुणनिमि[14]त्तिका भावाभिमानरूपिणी जात्युत्प्रेक्षेयम् । तत्र यद्यपि स्वरूपमुत्प्रेक्ष्यते न तु हेतु[15]फले, अथाप्युद्देशक्रमविरोधात्सोऽशो नोदा[16]जिही[17]र्षित । एव[18]मुदाहरणेषूदाहर्तव्या [19]विशेषाश्च स्वयमनुसन्धेया. । क्रमस्याविवक्षणात्[20] नास्माभि प्रतिस्व प्रतन्यन्ते[21] । अत्र जात्युत्प्रेक्षात्व विविच्य दर्शयति—अत्राङ्कुरेत्यादि[22] ।

अथ क्रियोत्प्रेक्षा—लिम्पतीवेत्यादि । क्रियोत्प्रेक्षात्वं विवेचयति—अत्र लेपनेत्यादि । न च मन्तव्य [23]वर्षणस्य नभ कर्तृ[24]कत्वात् न तमोगतत्व[25]मिति । नभसोऽपि तमसा[26]ऽधिष्ठितस्यैव वर्षणकर्तृ[27]कत्वसभवादनेन परम्परायातामा अपि सम्भावनाया

---

1. D. श्रान्तमुप 2. A's alt. F. प्रतिभाप E प्रसरण । 3. A. C. प्रस्तावासुखे D. E. प्रस्ताव 4. D. omits न । 5. D. अपह्नुति 6. Except E all read छलादित्या 7. D. प्रिये 8. D. omits च 9. D. यिष्येत 10. D. प्रतमित्या 11. D. न्यायता: 12. D. न शक्य 13 C. शक्यन्ते 14. A. C. E. निमित्त 15. D. हेतुफ 16. A's alt. C. नोज्जिही । 17. F. र्षितः C. र्षितम् । 18. A's alt C भाव 19. A. C. F. हि शेषा 20. D. अविवक्षया 21. A C. F. प्रतन्यते । 22. D इत्यादि ।· क्रियोत्प्रेक्षात्वं 23. D वर्षण 24. A. C F. omit क 25. A's alt. C omit त्व 26. A. C. तमोऽधि D तमसोऽधि 27. A's alt. omits क ।

"असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता" ॥ इत्यत्रोपमैव, नोत्प्रेक्षा । गुणोत्प्रेक्षा यथा—

संषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥

अत्र दुःखं गुणः । द्रव्योत्प्रेक्षा यथा—

पातालमेतन्नयनोत्सवेन विलोक्य शून्यं मृगलाञ्छनेन ।
इहाङ्गनाभिः स्वमुखच्छलेन कृताम्बरे चन्द्रमयीव सृष्टिः ॥

अत्र चन्द्रस्यैकत्वाद् द्रव्यत्वम् । एतानि भावाभिमाने उदाहरणानि । अभावाभिमाने यथा—

कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ ॥

---

उत्प्रेक्षात्वं द्योतितम्[1] । ननूक्तरार्थानुदाहरणे को हेतुरित्यत आह—उत्तरैरित्यादि । उपमैव नोत्प्रेक्षेति । अत्रेत[2]दुपह्वरम्—उपमानाशश्चेल्लोकतः सिद्धस्तदोप[3]मैव द्वयोस्सिद्धत्वादिवशब्दः साधर्म्यद्योतकः । [4]यदा तु कविकल्पितः तदोत्प्रेक्षैव । उपमानस्य [5]लोकतो[6]ऽसंभवादिवशब्दः संभावनां द्योतयति यतः । अत्रावान्तरश्लोकौ—

यदा[7]ऽयमुप[8]मानांशो लोकतस्सिद्धि[9]मृच्छति ।
तदोपमैव येनेव[10]शब्दः साधर्म्यसूचकः[11] ॥
यदा पुनरयं लोकादसिद्धः[12] कविकल्पितः[13] ।
तदोत्प्रेक्षैव येनेवशब्दस्संभावनापरः[14] ॥ इति ॥

अथ गुणो[15]त्प्रेक्षा—संषा[16]स्थलीति[17] । इयं [18]प्रतिष्ठमानस्य दाशरथेः सीता प्रत्युक्ति[19] । गुणोत्प्रेक्षा[20]त्वं दर्शयति[21]—दुःखं[22] गुण इति ।

अथ द्रव्योत्प्रेक्षा—पातालमेतदिति । द्रव्यत्वं दर्शयति—चन्द्रस्येत्यादि । उदाहरणचतुष्केऽपि अनुगतं विशेषम् उद्घाटयति—एतानि[23] भावाभिमान इत्यादि ।

अथाभावाभिमाने—कपोलफलकाविति । कष्टं[24] कृच्छ्रात् । तथाविधाविति । स्वानुभवैकसमधिगम्यो रमणीया[25]तिशयो द्योत्यते । क्षामतागमनं नैसर्गिकम् । परस्पर[26]दर्शनाभावो हेतुत्वेनोत्प्रेक्ष्यते[27] । [28]अत एवाभावाभिमानरूपता । तदेतद्दर्शयति—अत्राप-

---

1 D द्योतितः 2. D अत्रेति । तदु 3 C. तदेव उप 4 D. F. यतः य 5. D. लोकतोऽसं 6. E. तत्संभा 7. F. यदासावुप 8 D यदुप 9. D सिद्द 10. D. एनैव 11. D. सूचकं 12. D. सिद्ध 13 D. कल्पितं 14. D. परं 15. D उत्तोत्प्रे 16 A. C. एषा 17. F. repeats इति 18. A's alt. C D. E. प्रतिप्रतिष्ठ 19. D. उक्ति 20 A. F. प्रेक्षां सन्दर्श 21. D. दर्शयति । एते भावा 22 A. C. दुःख 23. A C. F. एते 24. D कथं 25. D. रमणीतानि 26. D परा 27. प्रेक्ष्यन्ते 28. All except E omit अ ।

अत्रापश्यन्ताविति क्रियाया अभावाभिमानः । एवं जात्यादावप्यूह्यम् । गुणस्य निमित्तत्वं यथा—"नवबिसलताकोटिकुटिलः" इत्यत्रोदाहृते कुटिलत्वस्य । क्रियाया यथा—"ईदृक्षां क्षामतां गतौ" इत्यत्र क्षामतागमनस्य । एते निमित्तोपादानस्योदाहरणे । अनुपादाने "लिम्पतीव तमोऽङ्गानि" इत्याद्युदाहरणम् । हेतूत्प्रेक्षा यथा—"विश्लेषदुःखादिव बद्धमौनम्" इत्यादौ । स्वरूपोत्प्रेक्षा यथा—

कुबेरजुष्टां दिशमुष्णरश्मौ गन्तुं प्रवृत्ते समयं विलङ्घ्य ।

---

श्यन्ता[1]वितीत्यादि[2] । न्या[3]यस्य सुज्ञानत्वात् । स्थालीपुलाकन्यायेनोदाहरणमात्रमिति न व्युत्क्रमदोष शङ्क[4]नीय । क्रमा[5]पेक्षया तु जात्या[6]द्युत्प्रेक्षापुरस्कारेणोदाह[7]र्तव्यम् । [8]तदेतदभिसन्धायाह—एवं जात्यादा[9]वप्यूह्यमिति । इत्थं जात्यादि[10]चतुष्कम् [11]अभावाभिमानरूपतयोदाहृतम् ।

अथ भेदाष्टकस्य गुणक्रियानिमित्ततोदाहर्तव्या । तत्र गुणनिमित्तकत्वेनोदाजिहीर्षुराह—नवबिसलतेत्यादि । तद्विवेचित[12]चरम्[13] । एवं गुणनिमित्तकस्य क्रियाद्युत्प्रेक्षाद्वये स्फुटतरत्वादुदाहरणनिरपेक्ष[14]मि[15]त्यभिसन्धाय क्रियानिमित्त[16]कत्वेनोदाहरति—[17]ईदृक्षामित्यादि[18] । क्षामता[19]गमनलक्षणक्रिया[20]ह्यदर्शनोत्प्रेक्षाया निमित्तम्[21] । इयता षोडशकमुदाहृतं मन्तव्यम् । अथ निमित्तोपादानानुपादानाभ्यां षोडशकस्य यद्द्वैविध्यं प्रतिज्ञातं तत्र निमित्तोपादानस्य समनन्तरो[22]दाहरणान्येवोदाहरणत्वेन दर्शयति—एते निमित्तेत्यादि । कुटिलत्व[23]क्षामतागमन[24]योरुपादानादनुपादानमप्युदाहृतेष्वेव दर्शयति लिम्पतीवेत्यादि । अत्र[25]लेपनादित्वेन सम्भावने व्या[26]पनादि निमित्तं नोपात्तम् । इयता द्वात्रिंशद्भेदा उदाहृता ।

अथ द्वात्रिंशद्धेतु[27]फलस्वरूपात्मकतया त्रिधोदाहर्तव्या । तत्र हेतुरूप[28]तयोदाहरति—विश्लेषदुःखादित्यादि । अत्र दुःखगुणो हेतुत्वेनोत्प्रेक्षित[29] । द्रव्य जातिक्रिये हेतुत्वेनावगन्तव्ये । [30]द्रव्योत्प्रेक्षाया [31]तदभावात् तन्निबन्धनम् अपृथक् पातनीयम् । अथ स्वरूपतयोदाहरति—कुबेरजुष्टामित्यादि । [32]जुष्टा सेविताम्[33] । कुबेरजुष्टा दि[34]गुदीची,

---

1 C स्तावित्यादि 2 D E. श्यादिना 3 E. नाय 4 D य कनीय 5. D क्रमा 6 All except E जात्युत्प्रे 7. A. C. F. हर्तव्य, 8 A. C यदे 9. A C वादावूह्य D. आदावप्यू 10. D. आदि तद्विवेचित 11. Except F. all omit अ । 12 D चर 13 E. इति । ए 14 D पेक्षत्व मि 15. E. omits इति 16 All except D omit क 17. A ईदृक्षा 18. D त्यादि । ईदृक्षि 19 A's alt. C गमन 20 A. त्रियास्य 21 C. त्तये ना 22. Except E all read. रोदाहरणत्वेन द 23. D omits त्व 24 A's alt. C. गमनादानादनु 25. A's alt. C. व्यपना 26. A's alt. C. लेपनादि 27. A हेतु [त]—त्व (स्व) रूप फलात्म C. हेतुं पफल 28. D तदोदा 29 D प्रेक्षितं 30 D. तद्दव्यो E. अत्र 31. A C. तदभावात A's alt. D. F. तदन्तर्भावात् 32. D E. जुष्टा 33. D. E. सेविता । 34 A. C. F omit दिक ।

दिग्दक्षिणा गन्धवहं मुखेन व्यलीकनिःश्वासमिवोत्ससर्ज ॥

फलोत्प्रेक्षा यथा—

चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति व्यपाटयन्द्रष्टुमिवाक्षराणि ॥

एवं वाच्योत्प्रेक्षाया उदाहरणदिग्दत्ता । प्रतीयमानोत्प्रेक्षा यथा—

महिलासहस्सभरिए तुह हिअए सुहअ ! सा अमाअन्ती ।
दिअहं अणण्णअम्मा अङ्गं तणुअंपि तणुएइ ॥ इति ।

'अमा अन्ती' इत्यत्रावर्तमानेवेति तनूकरणहेतुत्वेनोत्प्रेक्षितम् । एवं भेदान्तरेष्वपि ज्ञेयम् । श्लिष्टशब्दहेतुका यथा—

---

सा प्रतिनायिकात्वेनानुसन्धीयते । समय एक[1]दर्तुविशेषः । अन्यदा[2]स्वनन्यत्र गमनलक्षणः सङ्केतः । दक्षिणस्यां दिशि[3] नायिकात्वमनुसन्धीयते । व्यलीकम् अपराध[4] । अत्र[5] निश्वासस्य स्वरूपमेवोत्प्रेक्ष्यं, न तु हेतुः फलं वा । इत्थं गुणोत्प्रेक्षादित्रये स्वरूपात्मकत्वं ज्ञेयम् ।

अथ फलोत्प्रेक्षा—चोलस्येत्यादि । अत्र दर्शनक्रिया[6] विपाटनफलत्वेनोत्प्रेक्ष्यते । इत्थं जातिगुणयोरपि फलत्वमनुसन्धेयम् । द्रव्योत्प्रेक्षा[7]यां हेतुफलासम्भवात् तन्निबन्धन षोडशकं पातनीयम् । इत्य[8]मशीतिविधाऽपि वाच्योत्प्रेक्षा साकल्येनो[9]दाहृतकल्पैव[10] । तदेतन्निगमयन्नाह—एवं वाच्योत्प्रेक्षाया[11] इत्यादि[12] ।

अथ प्रतीयमाना परिपाट्योदाह्रियते—महिलासह[13]स्सेत्या[14]दिना ।

महिलासहस्रभरिते[15] तव[16]हृदये[17]सुभग ! सा अमान्ती ।
[18]दिव[19]समनन्यकर्मा[20] अङ्ग[21] तन्वपि[22] तनयति[23] ॥

दिवसमित्य[24]त्यन्तसंयोगे द्वितीया । प्रतीयमानामुत्प्रेक्षामुद्घाटयति—अमा (अ[25]) न्तीत्यत्रेत्यादिना । न्याय[26]स्य [27]सु[28]ज्ञानत्वाद् विस्तर[29]भीरु[30]राह—एवं भेदान्तरेष्वपि । अर्थाश्रयाऽपि धर्मविषये श्लिष्ट[31]शब्दहेतुका संभवतीति योद्दिष्टा तामुदाहरति—

---

1. C. एकः दर्त्तु D. दृत्तु E. दृत्व 2. A. C. F. अन्यत्र 3. C. दिशिः, 4. C. रागं 5. D. E. हि 6. D. क्रियापि पाट A. C. F. या हि पाट 7. D. प्रेक्षाया 8. A. C. F. मान्नूनं वा वाच्यो D. अशीति वाच्यो 9. C. नोत्प्रेक्षादा 10. A. C. F. कल्पा भवति। 11. All except E omit या 12. Omitted in D. E. 13 महस्से 14. D. इत्यादि। 15. A. भरितेति च हृ 16. Omitted in C. 17. C. तं सु A's alt. हृदयेन्त 18. A's alt. दिस्यमन 19. C. दिवमव न्यकर्मा 20. D. कर्म 21. C. अङ्ग 22. Omitted in A's alt. C. 23.. A's alt. हान C. हन 24 D. omits इति। 25. All mss. omit अ. 26. C. न्याय्यस्य 27. D. E. इह 28. C. संज्ञानत्वा वि 29. D. विस्तार 30. A. C. भीरुत्वादुक्तं 31. D श्लिष्टहेतु।

अनन्यसामान्यतया प्रसिद्धस्त्यागीति गीतो जगतीतले य ।
अभूदहपूर्विकया गतानामतीव भूमि स्मरमार्गणानाम् ॥

अत्र धर्मविषये मार्गणशब्द श्लिष्ट । उपमोपक्रमोत्प्रेक्षा यथा—

कस्तूरीतिलकन्ति भालफलके, देव्या मुखाम्भोरुहे
रोलम्बन्ति, तमालबालमुकुलोत्तसन्ति मौलावपि ।
या कर्णे विकचोत्पलन्ति, कुचयोरङ्के च कालागुरु-
स्थासन्ति पथयन्तु तास्तव शिव श्रीकण्ठकण्ठत्विष ॥

अत्र यद्यपि "सर्वप्रातिपदिकेभ्य क्विबित्येके" इत्युपमानात् क्विबिधावामुखे उपमा प्रतीति, तथाप्युपमानस्य प्रकृते सभवौचित्यात्सभावनोत्थाने उत्प्रेक्षाया पर्यवसानम् । यथा वा विरहवर्णने "केयूरायितमङ्गदं" इत्यादौ ।

---

श्लिष्टशब्देत्यादि[1] । अनन्येति । प्रसिद्ध[2]स्त्यागीति [3]गानप्रकार । मार्गणाश्शरा याचकाश्च । लक्ष्ययोजनायाह—अत्र धर्म[4]विषय इति । मार्गणविपर्यीभावो धर्म सभावनाश एव प्रतीतिवि[5]श्रान्ते श्लेषो[6] नोत्प्रेक्षाबाधक[7] । कस्तूरीति । रोलम्बा[8] भृङ्गा । अङ्क[9] पयन्त[10] । स्थासक[11]अर्चिका[12] । उपमोपक्रमतामुपपादयति—अत्र[13] यद्यपीत्यादि । सर्वप्रातिपदिकेभ्य उपमानार्थे[14] क्विप् इत्येके आचार्या इति सूत्रार्थ[15] । अत्र क्विपो माहात्म्या[16]दुपमाप्रतीतावपि[17] सभावनाया पर्यवस्यतीति । कण्ठस्त्विषा तिलकादिरूपत्वनियमासिद्ध तिलकादिरूपतापि[18] कदाचित्स्यादुपमानांशे सभावनाप्राणत्वमेव नतु वास्तवत्वम् । अत उत्प्रेक्षाया पर्यवसानम् । तदिदमभिसन्धायाह—तथाप्युपमानस्येत्यादि[19] । उपमानस्य तिलकादे प्रकृते कण्ठत्विड्रूपे[20] सभवौचित्यात् सभावनमात्रस्योचितत्वात् । सभावनस्योत्थाने उत्प्रेक्षणस्योदयात्[21] । अथोपमायकप्रत्ययान्तरप्रयोगेऽपि उपमोपक्रमत्व[22] दर्शयितुमाह—यथा वेत्यादि[23] ।

केयूरायितमित्यत्रापि हि[24] क्यङो[25] माहात्म्यादुपमा प्रतीतिरङ्गदादे[26] । केयूरादिवदाचरणे[27] नियमाभावात् तथात्वसभावनायाम् उत्प्रेक्षैव पर्यवस्यति । अथोपमानांशस्य वस्तुतोऽसिद्धस्य कविकल्पनामात्रत्वे सर्वत्रोपमा (प्रतिपादक[28])शब्दमाहात्म्यादामुखप्रतीतावप्युत्प्रेक्षात्वेन पर्यवस्यतीत्यभिसन्धायाह—एषा [29]चेत्यादि । अप्रपञ्चने हेतुमाह—इह त्विति ।

---

1 A C D F H I आदि । अ 2 D सिद्धस्या 3 A F ति गीति गान 4 A C F धर्नुवि 5 C श्रन्त । 6 D श्लेषा 7 A C साधक, 8 A C रोलम्बो 9 D अक 10 D पर्युत । 11 C स्थामच्च E omits क 12 C. चर्चाका 13 Omitted in A C F 14 E F अर्थेभ्य 15 E अर्था । 16 A F माहात्म्य 17 A C प्रतीतावपि 18 A C omit अपि 19 F इति 20 A. C F रूप 21 D E. उदये 22 C क्रम द 23 C चेत्यादि D त्वेत्या 24 C पि कर्म हि हात्म्य D एक्यन्दो 25 A क्यन्दो 26 A C अङ्गादे A's alt F अङ्गलीयकादे 27 A C आभरणे । 28 All mss read प्रातिपदिक 29 A F एष

एषा च समस्तोपमाप्रतिपादकविषयेऽपि हर्षचरितवार्तिके साहित्यमीमांसायां च तेषु तेषु प्रदेशेषूदाहृता इह तु ग्रन्थविस्तरभयान्न प्रपञ्चिता। सापह्नवोत्प्रेक्षा यथा—

> गतासु तीरं तिमिघट्टनेन ससम्भ्रमं पौरविलासिनीषु।
> यत्रोल्लसत्फेनततिच्छलेन मुक्ताट्टहासेव विभाति सिप्रा॥

अत्रेवशब्दमाहात्म्यात्सम्भावनं छलशब्दप्रयोगाच्चापह्नवोऽवगम्यते। एवं छद्मादिशब्दप्रयोगेऽपि ज्ञेयम्। "अपर इव पाकशासनः" इत्यादावपरशब्दाप्रयोगे तूपमैवेयम्। तत्प्रयोगे तु प्रकृतस्य राज्ञः पाकशासनत्वप्रतीतावध्यवसायसम्भवादिवशब्देन च तस्य साध्यत्वप्रतीतेरुत्प्रेक्षैवेयम्। इव शब्दाप्रयोगे सिद्धत्वादध्यवसायस्यातिशयोक्तिः। इवापरशब्दयोरप्रयोगे तु रूपकम्। तदेवं प्रकारवैचित्र्येणावस्थितायामुत्प्रेक्षायां हेतूत्प्रेक्षायां यस्य प्रकृतसम्बन्धिनो

गतासु तीरमिति। [1]ससम्भ्रमा[2] गतिः फेनोल्लासहेतुः। अत्रेवशब्दादट्टहासस्य सम्भाव्यता। यत्तु व्यक्तिविवेककृदीदृशि विषये मन्यते—"इवादिशब्दैरेव प्रकृता[3]र्थस्यासत्त्वप्रतीतेश्छलादिशब्दाः पुनरुक्ताः" इति तत्[4] मन्दम्। न खल्वीदृशि विषये छलादिशब्दा[5]प्रयोगेऽपि प्रकृतार्थस्यासत्यता गम्यते। अपि तु उत्प्रेक्षां[6] प्रति हेतुभाव एव। यथा अत्रैव[7] 'फेनपरम्पराभि'रिति पाठे। अतस्सापह्नव[8]त्वलक्षणमुत्प्रेक्षावैचित्र्यं[9] छलादिप्रयोगैकशरणम्[10]। तदेतदभिसन्धायाह—अत्रेवशब्देत्यादि।

अथोत्प्रेक्षाया एव प्रपञ्चनार्थं तत्तदलङ्कारबीजभूत[11]तत्तत्पदावापोद्वा[12]पाभ्याम् अलङ्कारवैचित्र्यमाविर्भवतीति व्युत्पादयति—अपर इवेत्यादिना। अपरशब्दाप्रयोगे[13]ऽपि पाकशासनः सिद्धतया प्रतीयत इत्युपमैव। तत्प्रयोगे तु प्रकृतो राजैव अपरपाकशासनत्वेनाध्यवसीयते। इवशब्दाच्चाध्यवसानस्य साध्यतेत्युत्प्रेक्षैव। इव[14]शब्दापोहे त्वपरपाकशासनत्वं सिद्धतया प्रतीयत इत्यतिशयोक्तिः। इवापरशब्दयो द्वयो[15]रप्यपोहे रूपकभेदप्राधान्यप्रतीतेः। इत्थं[16] नानावैचित्र्यनिर्भरायामस्यां कुत्रचिदंशे[17] नियमेन वाच्यता, कुत्र[18]चित्तु[19] कामचार इति व्युत्पिपादयिषुर्हेतूत्प्रेक्षां तावद् व्युत्पादयति—तदेवंप्रकारे त्यादिना। प्रकृतसम्बन्धिन उपमेयसम्बन्धिनः। यस्य धर्मस्य हेतुरुत्प्रेक्ष्यते, स धर्मोऽत्र [20]-सादृश्यवशाद् अभेदोपचारणवशात् अभिन्न उत्प्रेक्षानिमित्तमा[21]श्रीयते [22]नियमेन [23]वाच्यो

1 A's alt C D E F H I ससम्भ्र 2 D E भ्रम 3 A C F कृतस्य 4 Omitted in D 5 E F शब्दस्याप्र 6 C D प्रेक्षायां 7 A F तत्रैव 8 A C ह्नच्छल पक्षमुखे 9 A C F चित्र्यात् 10 C 'शरणा' 11 A's alt C. तत्त्व भावा वापा 12. D उत्तारमल 13 D इति E हि 14 Omitted in A C. F 15 A C. omit द्वयो 16 A C F इत्थं वैचि 17 A C. F चिद्भेदा 18 A's alt क्वचित् 19 All except E omit तु 20 D. वासवया 21 C श्रायते 22 D E. ते उपमानधर्मेण सहभेद त्यागेनैव उत्प्रेक्षाहेतुतया आश्रीयते। नियमेन 23 D E. H I चवाच्यो

धर्मस्य हेतुरुत्प्रेक्ष्यते, स धर्मोऽध्यवसायवशादभिन्न उत्प्रेक्षायां निमित्तत्वेनाश्रीयते। स च वाच्य एव नियमेन भवति। अन्यथा कं प्रति हेतुः स्यात्। यथा—"अपश्यन्त्याविवान्योन्यम्" इत्यादौ। अत्र कपोलयोः प्रकृतयोः संबन्धित्वेनोपात्तस्य क्षामतागमनस्य हेतुरदर्शनमुत्प्रेक्षितम्। हेतुफलं च क्षामतागमनं तत्र निमित्तम्। एवं "अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम्"। इत्यत्र नूपुरगतस्य मौनित्वस्य यो हेतुर्दुःखित्वं तदुत्प्रेक्षणे मौनित्वमेव निमित्तं ज्ञेयम्। एवं सर्वत्र।

स्वरूपोत्प्रेक्षायां यत्र धर्मी धर्मान्तरगतत्वेनोत्प्रेक्ष्यते तत्रापि निमित्त-

भवति। अस्योपमानधर्मेण सहाभेदाश्रयणं वाच्यत्वं चेति[1] नियमद्वयमनुसन्धेयम्। यदैवं न स्यात् तदोत्प्रेक्षमाणो हेतुरभित्तिकमेव चित्रं स्यादित्याह[2]—अन्यथा कं प्रतीति। तामिमा[3]व्यवस्थामुदाहरणतो हृदय[4]गमयति—यथा अपश्यन्त्या[5]वित्यादिना। अत्र कपोलौ प्रकृतौ तत्सम्बन्धी धर्मः क्षामता[6]तद्धेतुत्वेन दर्शनमुत्प्रेक्षितम्। तदुत्प्रेक्षणे च न केवला कपोलक्षामता निमित्तम्, अपि तु लोके परस्पर[7]मदृष्टोर्या क्षामता[8] तदभिन्नत्वेनाध्यवसिता सैव चोत्प्रेक्षिता [9]दर्शनलक्षणस्य हेतोः फलम्। तदिदमभिसन्धायाह—अत्र कपोलयोरित्यादि। तत्र[10] भिन्नयिति फलदशायाम् अभेदेनाध्यवसीयत[11] इत्यर्थः। अदर्शन प्रत्य[12]प्रकृतैव हि क्षामता फलं, तत्र निमित्तं हेतूत्प्रेक्षणे प्रयोजकम्[13]। परस्परमदृ[14]ष्टोर्यत्क्षामतागमनं तेन सहाभेदेनाध्यवसितमित्यर्थः। इयमभावाभिमान[15]रूपक्रियानिमित्ता हेतूत्प्रेक्षा। एवं भावाभिमानरूपलक्षणहेतूत्प्रेक्षायामपि न्यायस्समान[16] इत्याह—एवम्[17]अदृश्यतेत्यादिना। अत्रापि हि नूपुरगतमौनित्वस्य हेतुत्वेन दुःखमुत्प्रेक्षितम्। तदुत्प्रेक्षणे च लौकिकदुःखमौनित्वाभेदेनाध्यवसित[18] नूपुरमौनित्वमेव निमित्तं [19]तु चोत्प्रेक्षणफलं च। इयं प्रक्रिया सर्वत्रैव हेतूत्प्रेक्षायामेव रूपेत्याह—एवं सर्वत्रेति।

अथ स्वरूपोत्प्रेक्षाया[20] क्वचिद्धर्मी धर्मान्तरगतत्वेनाध्यवसीयते। क्वचित्तु[21] धर्म एव धर्मान्तरगतत्वेन। तत्रोभयत्रापि निमित्तादः कदाचिद्वाच्यो भवति। कदाचित्तु नेति[22] विशेषयितुमारभते—स्वरूपोत्प्रेक्षायां यत्र धर्मीत्यादिना। स यः पायादित्यादि। यत्रेन्दु[23]-पलाशपलाशकुसुमयोः साधर्म्यस्यासिद्धत्वात्। कुटिलत्व[24]लक्षणस्य[25] शब्देनोपादानम्,[26]

1. D. E चेति। 2 F इत्यत 3 C अवस्था 4 A's alc C अङ्गीकरोति D E गमयिकरोति 5. E आविवे 6. C तद्धे D 7. C. D. E. F. H. I अदृष्टो 8 D क्षम 9. A. C. तस्य ल 10. D. E विभिन्न 11 E ते किन्तु उपमान धर्मान्तादिभिन्न इ 12. A C. F दृष्टेः एव क्षाम D दृष्टे ते भिक्षाम 13 A. F योजनं C योजन पां D कम्। इयमभावा 14 D. E. H. I ष्टो C अदृष्टपुष्टा 15. E मानमत्र 16. A. C D F स्म 17. A. C मेवादृश्या 18 D मित 19. C तुल्य 20 C. प्रेक्षायाः F प्रेक्षायां यत्र धर्मी 21. A. C omit तु 22. D E तु गम्यमानेति। 23 D यत्रेन्दु 24. E repeats लक्ष 25 E लक्षणस्य 26. A C दाने।

भूतो धर्मः क्वचिन्निर्दिश्यते। यथा—"स वः पायादिन्दुः" इत्यादौ। अत्र कुटिलत्वं निर्दिष्टमेव। "वेलेव रागसागरस्य" इत्यादौ तु संक्षोभकारित्वादि गम्यमानम्। यत्र च धर्म एव धर्मिगतत्वेनोत्प्रेक्ष्यते तत्रापि निमित्तस्योपादानानुपादानाभ्यां द्वैविध्यम्। उपादाने यथा—

> प्राप्याभिषेकमेतस्मिन्प्रतितिष्ठासति द्विपाम्।
> चकम्पे *लोप्यमानाज्ञा भयविह्वलितेव भूः॥

अत्र भूगतत्वेन भयविह्वलितत्वाख्यधर्मोत्प्रेक्षायां कम्पादिनिमित्तमुपात्तम्। अनुपादाने यथा—"लिम्पतीव तमोऽङ्गानि" इत्यादि। अत्र तमोगतत्वेन लेपनक्रियाकर्तृत्वोत्प्रेक्षायां व्यापनादिनिमित्तं गम्यमानम्। व्यापनादौ तूत्प्रेक्षाविषये निमित्तमन्यदन्वेष्यं स्यात्। न च विषयस्य गम्यमानत्वं युक्तम्। तस्योत्प्रेक्षिताधारत्वेन प्रस्तुतस्याभिधातुमुचितत्वात्। तस्माद्यथोक्तमेव साधु।

---

"वेलेव रागसागरस्ये" त्यत्र तु संक्षोभकारितायाः प्रसिद्धत्वादनुपादानम्। अथ धर्मस्य धर्मिगतत्वेनाध्यवसाने निमित्तोपादानानुपादाने दर्शयति—यत्र च[1]धर्म एवेत्यादि। प्राप्याभिषेकमिति। द्विपां भूरिति समन्वयः। अत्र धर्मिणि धर्म[2]संभावन, निमित्तोपादानञ्च विवेचयति—अत्र भूगतत्वेनेत्यादि। लिम्पतीवेति। निमित्तानु[3]पादानं विवेचयति—अत्र तमोगतेत्यादि। ननु धर्मे धर्मो[4]त्प्रेक्षणवैचित्र्याय व्यापने लेपनमुत्प्रेक्ष्यतामित्यत आह[5]—व्यापनादौ त्विति। निमित्तमन्यदन्वेष्यं स्यादिति। यथा लेपनोत्प्रेक्षणे व्यापनं निमित्तत्वेन[6] गम्यते, न हि तथा व्यापनोत्प्रेक्षणे निमित्तमन्यदवगम्यते। अतोऽनवगतस्य[7] कल्पनमवगतस्य परित्याग इति दोषद्वयमापतेदिति भावः। दोषान्तरमप्युद्भावयति—न च विषयस्येति। यदि व्यापनमेव उत्प्रेक्षण[8]विषय, न हि तस्य गम्यमानता युक्ता। तत्र हेतुः—तस्योत्प्रेक्षिताधारत्वेनेति। *उत्प्रेक्षितम् उत्प्रेक्षिणं, तदाधारत्वेनाभिधातु*[9], प्रस्तुतस्याभिधातुमेवोचितत्वात्। अतो लेपनमेवोत्प्रेक्ष्यमिति निगमयति—तस्माद्यथोक्तमेवेति।

---

1. Omitted in E. 2. A. C. D. F. H: I स्मारोपं 3 A's alt C, D. त्तोपादानं 4. F धर्मसंभावन 5 A. repeats ननु.... ...अत आह 6. A F. त्वेऽनु गम्य 7. C D गतस्य परित्याग 8. C. प्रेक्षा D प्रेक्ष 9. C धानं।

* The reading लोप्यमानाज्ञा adopted here is according to the T. S. S. edition, though unwarranted by the Sañjīvanī. The N.S. edition reads लोप्यमानाम्नाः which conveys no sense in the context. Appayya Dīkṣita quotes the same verse in his Citramīmāṃsā (p. 92) with the reading लोप्यमानार्थं। The manuscript of the Sarvasva in Telugu (D. 12797) in the Government Oriental manuscripts library, Madras has लोप्यमानायां while that in Malayalam in the Adyar Library (68530) has लोप्यमानाज्ञा.

फलोत्प्रेक्षाया यदेव तस्य कारणं तदेव निमित्तम् । तस्यानुपादाने कस्य तत्फलत्वेनोक्त स्यात् । तस्मात्तत्र निमित्तस्योपादानमेव न प्रकारान्तरम् । यथा—

रथस्थिताना परिवर्तनाय पुरातनानामिव वाहनानाम् ।
उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥

अत्र परिवर्तनस्य फलस्योत्तरदिग्गमन कारणमेव निमित्तमुपात्तम् । तदसावुत्प्रेक्षाया· कक्ष्याविभागः प्रचुरस्थितोऽपि लक्ष्ये दुरवधारत्वादिह न प्रपञ्चित. । अस्याश्चेवादिशब्दवन्मन्येशब्दोऽपि प्रतिपादक. । किन्तूत्प्रेक्षा-

अथ फलोत्प्रेक्षाया[1] निमित्ता[2]नुपादानम् असमवमित्यारभते—फलोत्प्रेक्षायामित्यादि । तस्य फलस्य [3]यदेव लोकस्थित्या कारण, तदेवोत्प्रेक्षणनिमित्तम् । तच्चेन्नो[4] पादीयेत, तदेवोत्प्रेक्ष्यमाण फल कस्य [5]फलतयोक्त स्यात् । अत फलोत्प्रेक्षाया निमित्तो-पादान[6] नियम एव । तदिदमुदाहृत्य दर्शयति—रथस्थितानामिति । अत्रोत्तरदिशस्तुरगो[7]त्पत्तिभूमित्वात् तद्गमन[8] पुरातनतुरङ्गपरिव[9]र्तने हेतु । तदेवोत्प्रेक्षणनिमित्तम् । तदनुपादाने परिवर्तमान उत्प्रेक्ष्यमाण कस्य फल स्यात् । तदिदमभिप्रेत्याह—अत्र परिवर्तनस्येत्यादि[10] । अनेना[11]द्योतितविषयत्वेन दृष्टेषु प्रभेदेषु पुन केषाचित् पातो[12] दर्शित । तथाहि—उपात्तनिमित्ता[13] ये षोडशभेदास्तेषा प्रतिस्व हेतुस्वरूप[14]फलोत्प्रेक्षणरूपत्वे अष्टचत्वारिंशत् । द्रव्ये[15]हेतुफलोत्प्रेक्षा[16]पातेऽष्टु[17]वहानिरिति चत्वारिंशत् । अनुपात्तनिमित्तत्वे तु षोडश[18]के हेतुफलरूपताभावात् स्वरूपोत्प्रे[19]क्षैकरूपतैवेति[20] षोडशैव । [21]अत तत्पट्पञ्चाशदेव प्रभेदा । यदित्थमियमुत्प्रेक्षा प्रतिसूक्ष्मेक्षिकया प्रपञ्चिता । तत्र-हेतुमाह—तदसावित्यादि । कक्ष्याविभागो जातिगुणादि[22]रूपतया स्थित[23] । प्रचुर-स्थितोऽपि[24] अनाकुलन्याय[25]तया प्रभूतवृत्तिरपि । लक्ष्ये[26] दु रव[27]धारत्वात् उत्तान[28]-धिया[29] लक्ष्ययोजनान्तम[30]शक्या[31]धिगमत्वात् (न) प्रपञ्चित[32] इत्यर्थ. ।

अथ मन्येप्रमुखस्य शब्दस्य सभावनाद्योतकत्वेऽपि तत्प्रयोग[33]मात्रणोत्प्रेक्षा-भ्रमो[34] न कार्य इति व्युत्पादयति—अस्या[35]श्चेत्यादि । उत्प्रेक्षासामर्थ्यमाय इति ।

1 D 'प्रेक्षया' 2. A C D F. H I 'र्नोपादा' 3 C omits य 4 A C उपदी 5 A's alt C फलस्य तयोक्त 6 A C D F H I अनियम 7 D E गोत्तमोत्प 8 D omits तत् 9 D F वर्तनस्येत्यादि । 10 A C इति 11 A's alt C अद्यादि 12 A C F पाठभेदो 13 D निमित्तो 14 C स्वरूप 15 D द्रव्य 16 A's alt प्रेक्षाय 17 A C omit अष्टक 18 D षोडशक 19 A F प्रेक्षा रूपतै D प्रेक्षक 20 D इतीति 21 A omits अत 22. D गुणरूप 23 D स्थितं 24 F अपि योगमात्रेण 25 A's alt C. न्यायतया 26 A C अत 27 C इन्दुरवधारणाख्या 28. A उक्त 29 C नाधिको 30 Except D all mss अन्तरास्या 31 A's alt C शक्या विगम 32. A प्रपञ्चिता न is wanted but is missing from all mss 33 E omits म 34 D भ्रमापमान कार्य 35 A. C F अस्यां चे

सामग्र्यभावे मन्येशब्दप्रयोगो वितर्कमेव प्रतिपादयति। यथोदाहृतं प्राक्—"अहं त्विन्दुं मन्ये" इत्यादि।

एवमध्यवसायस्य साध्यतायामुत्प्रेक्षां निर्णीय सिद्धत्वेऽतिशयोक्तिं लक्षयति—

अध्यवसितप्राधान्ये त्वतिशयोक्तिः ॥२२॥

अध्यवसाये त्रयं भवति—स्वरूपं विषयो विषयी च। विषयस्य हि

---

अप्रकृतगतगुणक्रियाभि[1]सम्बन्धात् अप्रकृतत्वेन प्रकृत[2]सम्भावनमुत्प्रेक्षासामग्री। तदभावे[3] वितर्को नूनमित्यभ्यूहमात्रम्। तदिदमनुस्मारयति—'यथोदाहृत प्रागित्यादि।

अत्र सङ्ग्रहश्लोका —

गुणक्रिया[5]भिसम्बन्धात्प्रकृते[6]ऽप्रकृतात्मना ।<br>
सम्भावन स्यादुत्प्रेक्षा [7]वाच्येवार्थं परान्यथा ॥<br>
जातिक्रियागुणद्रव्योत्प्रेक्षणा सा चतुर्विधा ।<br>
भावाभावाभिमानत्वे[8] जात्यादेस्साष्टधा पुन ॥<br>
गुणक्रियानिमित्तत्वे ज्ञेया षोडशधा[9] तथा ।<br>
द्वात्रिंशच्च निमित्तस्योपादानादन्यथा स्थिते ॥<br>
हेतौ स्वरूपे चोत्प्रेक्ष्ये फले[10] षण्णवति पुन ।<br>
द्रव्यहेतुफलात्मत्वासम्भवात्तद्भिदा[11]च्युति [12] ॥<br>
तथा प्रतीय[13]मानाया निमित्तस्यानुपग्रह [14] ।<br>
नापि स्वरूप तैर्भेदै तस्मा[15]न्न्यूना भवेदियम् ॥<br>
क्वचिच्छ्लेषेण धर्मांश[16]गतेर्नैषा न[17] [18]बाध्यते ।<br>
उपमोपक्रमाऽप्येषा भवेत्सापह्नवाऽपि च ॥

अथोत्प्रेक्षां निगमयन् अतिशयोक्तिं सङ्गतिपुरस्कारेण प्रस्तौति—एवमध्यवसायस्येति। सिद्धत्व इति। अध्यवसितस्य विषयिण प्राधान्ये अध्यवसायस्य सिद्धत्वम्। अथ सूत्रम्—अध्यवसितप्राधान्ये[19] त्वतिशयोक्ति। उत्प्रेक्षाऽतिशयोक्त्यो विषय[20] विभ-[21]क्तुमाह—अध्यवसाये त्रयमित्यादि। [22]स्वरूपमध्यवसान[23] व्यापारात्मकम्। विषय[24] प्रकृतोऽर्थ [25] विषयी[26] त्वप्रकृत[27]। तत्राध्यवसायस्वरूपम् उत्प्रेक्षाप्रस्तावे विवेचितम्।

---

1. C क्रियाभिरभि 2. D कृतस्य 3. A C F भावेऽपि तर्को 4. A's alt C तथा 5. D क्रियादि 6. C प्रकृते प्रकृ 7. A वाच्योवान्यं C D वाच्यवार्थ. 8. D मानत्वात् 9. A षोडशाया 10. A C ज्ञेया 11. A C E F H I द्विधा 12. D च्युतिं 13. E मानाया F मानत्वात् 14. F ग्रहात् 15. A C F तस्या 16. All *except* E *read* 'धर्मांशगते' 17. All *except* D न च 18. 'बोध्य' 19. A C न्येऽति 20. D विषय. 21. F भङ्क्तु 22. A F. विषयिण स्वरू 23. Except D. all read अवसायात्मक 24. D विषय 25. D अर्थ 26. C विषयि 27. C कृता.

विषयिणाऽन्तर्नीतत्वेऽध्यवसायस्य स्वरूपोत्थानम्। तत्र साध्यत्वे स्वरूपप्राधान्यम्। सिद्धत्वे अध्यवसितप्राधान्यम्। विषयप्राधान्यमध्यवसायेनैव सम्भवति। अध्यवसितप्राधान्ये चातिशयोक्तिः। तस्याश्च पञ्च प्रकाराः—भेदेऽभेदः, अभेदे भेदः, सम्बन्धेऽसम्बन्धः, असम्बन्धे सम्बन्धः, कार्यकारणपौर्वापर्यविध्वंसश्च। तत्र भेदेऽभेदो यथा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम्।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम्॥

अत्र मुखादीनां कमलाद्यैर्भेदेऽभेदः। अभेदे भेदो यथा—

अण्णं लडहत्तणअं अण्णावि अ कावि वत्तणच्छाआ।
सामा सामण्णपआवइणो रेहच्चिअ ण होइ॥

अत्र लडहत्वादीनामभेदेऽप्यन्यत्वेन भेदः। यथा वा—

णाराअणो त्ति परिणअवआहिँ सिरिवल्लहो त्ति तरुणीहिं।
बालाहि उण कोदूहलेण एमे अ सच्चविओ॥

---

प्रतीतिर्वैशद्याय स्मारयति—विषयस्य हीत्यादि। अन्तर्नीतत्वे निगीर्णत्वे। तत्रोत्प्रेक्षाविषयं विभजति—साध्यत्वे[1] स्वरूपप्राधान्यमिति। अतिशयोक्ति[2]विषयं विभजति—सिद्धत्वे अध्यवसितप्राधान्यमिति। अध्यवसितो गुणीकृताध्यवसानो विषयी। विषयस्तु प्राधान्यं नार्हतीत्याह—विषयप्राधान्यमिति। नैव सम्भवतीति विषयस्य। विषयिणा[3] निगीर्णस्वरूपप्रतीति[4]रेव तिरोधीयते। प्राधान्यसम्भवः कुत इति भावः। अतिशयोक्तिलक्षणं निगमयति—अध्यवसितप्राधान्ये चेति। तद्भेदानुद्दिशति—तस्या[5]श्चेत्यादि।

क्रमेणोदाहरणानि कमलमनम्भसीति। अत्र मुखनयन[6]गात्र[7]लक्षणान्विषयान् निगीर्य कमलकुवलयकनकलतालक्षणा[8] विषयिणः तद[9]भेदेनाध्यवसिताः। भेदेऽभेद[10] विवृणोति—अत्र मुखादीनामित्यादि। अण्ण[11] लडहेति।

अन्यत्सौन्दर्यमन्यापि च कापि वर्तनच्छाया।
श्यामा सामान्यप्रजापते रेखैव न भवति॥

लडहत्व[12] प्रौढत्वम्। अभेदे भेदं दर्शयति—अत्र लडहेत्यादि। अत्रा[13]भेदे भेदो[14] धर्मनिष्ठ[15] एकविषयो दर्शितः। धर्मिनिष्ठतया विभिन्नविषयतया च दर्शयितुमाह—यथा[16]वेति। णाराअणोत्तीति[17]।

"नारायण इति परिणतवयोभिः श्रीवल्लभ इति तरुणीभिः।
बालाभिः पुनः कौतुकेन एवमेव दृष्टः॥"

---

1 C. रेऽस्य रूप 2. E. उत्कर्षि 3 A C. F विषयिणो 4 D ति इति भेदानुरिणति दर्शयते प्रा 5 A C. F स्य ण्विष्या 6 A C मोचन 7. Except D all read म देहयेण 8 C. लक्ष्म 9 A C तदभेदे 10 D omits भि 11. A's alt C. अन्य 12. A's alt C D र्व धर्मे 13 A C F अत्र 14. A. C. F अभेदो 15 A's alt C मित्यत्र विं 16. F. चेति। 17 A. C दर्शयति।

अत्राभिन्नस्यापि विषयविभागेन भेदेनोपनिबन्धः । संबन्धेऽसंबन्धो यथा—

लावण्यद्रविणव्ययो न गणितः क्लेशो महान्स्वीकृतः
स्वच्छन्दं चरतो जनस्य हृदये चिन्ताज्वरो निर्मितः ।
एषापि स्वगुणानुरूपरमणाभावाद्वराकी हता
कोऽर्थश्चेतसि वेधसा विनिहितस्तन्व्यास्तनुं तन्वता ॥

अत्र लावण्यद्रविणस्य व्ययसंबन्धेऽप्यसंबन्धस्त-वीलावण्यप्रकर्ष-प्रतिपादनार्थं निबद्धः । यथा वा—

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यावृत्तकौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥

अत्र पुराणप्रजापतिनिर्माणसंबन्धेऽप्यसंबन्ध उक्तः । असंबन्धे सबन्धो यथा—

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्यास्ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥

---

इत्यत्र परिणतवयस्काना[1] श्रीवल्लभत्वा[2]भेदेऽपि नारायण इति (भे[3])देन दृष्ट[4]स्तथैवाभिरुचे[5] । तरुणीना नारायणत्वाभेदेऽपि श्रीवल्लभ इत्येव, तथैवाथित्वात् । बालाना तु य[6]त्किञ्चिदिति भूतन[7] वस्तु द्रष्टव्यमित्येव[8], तथा व्युत्पत्ते । यद्वा प्रत्येक समस्ता रुच्यर्थित्वव्युत्पत्त[9]यो भेद[10]दृष्टौ निमित्त प्रपञ्चितम् [11]उल्लेखप्रस्तावे । तदिदमभि-सन्धायाह—अत्राभिन्नस्यापीति । अभिन्नस्य[12] धर्मिण इति शेष । विषयविभागेन । परिणतवयस्कादि[13] (ना) । लावण्येत्यत्र सम्बन्धेऽसम्बन्ध [14] । अत्रैक[15]निर्मातृ[16] निष्ठतया धर्मसम्बन्धेऽसम्बन्ध । अथ[17] भिन्ननिर्मातृनिष्ठतयाऽपि दर्शयितुमाह—यथा वेति । अस्या-स्सर्गेति । शृङ्गारैकरस इति प्रत्येकमभिसबध्यते[18] । पुष्पं प्रवालेति । अत्र पुष्प-प्रवालादिकयो साक्षादसम्बन्धेऽपि[19] यदीति समावनया सम्बन्धः । पुष्पकाले प्रवाल-त्वा[20]पगमात् । न च मन्तव्य सभावनाया व्यापारप्राधान्यात्[21] अत्रोत्प्रेक्षैवेयमिति ।

---

1 D. कायाना 2 C. त्वाद्भेदे 3 All mss अभेदेन 4. C दृष्टं 5 A's alt C रुचि 6 All except. E य. कश्चिदिति । 7. D नूत द्रष्ट 8. Except E all read इत्येतावद्य 9. D omits त्त 10. A C योचित द 11. All mss भेद उद्दे 12. D. omits स्य 13 All mss. आदिरूप लाव । 14 F. [illegible] अवभिन्न 15 D omits क 16 C निर्मात 17 D अभि 18 E. ते पुराणो मुनिर्नरसख । पुष्प 19. D. बन्धो 20 C अव 21. D. धान्यादिद अभि E. धान्यादुत्प्रे ।

अत्र संभावनया संबन्धः । यथा वा—

> दाहोऽम्भः प्रसृतिपचः प्रचयवान्बाष्पः प्रणालोचितः
> श्वासाः प्रेङ्खितदीप्रदीपकलिकाः पाण्डिम्नि मग्नं वपुः ।
> किं चान्यत्कथयामि रात्रिमखिलां त्वन्मार्गवातायने
> हस्तच्छत्रनिरुद्धचन्द्रमहसस्तस्याः स्थितिर्वर्तते ॥

अत्र दाहादीनामम्भः प्रसृत्याद्यैरसंबंन्धेऽपि संबन्धः सिद्धत्वेनोक्तः । कार्यकारणपौर्वापर्यविध्वसः पौर्वापर्यविपर्ययात्तुल्यकालत्वाद्वा । पौर्वापर्यविपर्ययो यथा—

> हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
> चरमं रमणीवल्लभ ! लोचनविषयं त्वया भजता ॥

तुल्यकालत्वं यथा—

> अविरलविलोलजलदः कुटजार्जुननीपसुरभिवनवातः ।
> अयमायातः कालो हन्त ! मृताः पथिकगेहिन्यः ॥

एषु पञ्चसु भेदेषु भेदेऽभेदादिकथनं लोकातिक्रान्तगोचरम् । अत्र

---

ततोऽनुकुर्यादिति समन्वयवाक्ये अध्यवसितप्राधान्यात् । अत उत्प्रेक्षा[1]नुगृहीतेयमतिशयोक्ति । तदिदमभिसन्धायाह—अत्र संभावनया संबन्ध इति । अथोत्प्रेक्षाग्रहणमन्तरेणापि असंबन्धे संबन्धमुदाहरति—दाहोऽम्भः प्रसृतिमिति[2] । अत्र दाह[3]बाष्पश्वासवपुषामम्भःप्रसृति[4]पच[5]त्वप्रणा[6]लोचितत्वदीपकलिकाप्रेङ्खोलनपाण्डिममज्जनेषु संबन्धाभावेऽपि सिद्धत्वेनोक्ति । तदेतदाह—अत्र दाहादीनामित्यादि ।

कार्यकारणपौर्वापर्यविध्वसे द्वैविध्यमाह—कार्यकारणेत्यादि । विपर्ययः कार्यस्य पूर्वकालभाविता । हृदयमिति[7] । अत्र हृदयस्य दयिताधि[8]ष्ठानं कुसुमचाप[9]बाणा[10]धिष्ठानस्य कारणम्[11] । कारणञ्च नियतपूर्वकालभावि । तदिहान्यथोपन्यस्तमिति पौर्वापर्यविपर्ययः । अविरलेति[12] । नीपः कदम्बः । प्रावृडयन[13] पथिकगेहिनीमृतिकारणम् । अत्र[14]त्वायातो[15] मृता इति निष्ठाभ्यां तयोस्समकालता ।

ननु भेदेऽभेदादिकथ[16]नमसङ्गतम् इत्यत आह—एषु[17] पञ्चस्विति[18] । लोकातिक्रान्तगोचरं *लोकातिशा[19]यित्वलक्षणं गोचरं[20]यस्येत्यर्थः । अतो भेदेऽभेदरूपो[21] मुख्यार्थो[22]* न विवक्षित इति यावत् ।

---

1. A. F. omit अनु 2 A C. मति 3. C दाहं 4. A. C F. प्रसृतीं 5. A C. F. पच 6 A प्रणालयो C प्राणाल्यो 7. C हृदयति 8. C. निष्ठा 9. D. चाप 10 A. C E. F. H I बाणास्याधि 11. Omitted in C. 12. A's alt C. तु 13 E. प्रायान 14 A C. अत्रायातो 15. D repeats यातो 16. A C. F. कथम 17. All except C read एष 18. D स्थिति 19 Except E all read यय 20. Except C all यती 21. A C रूपा 22. C अर्था ।

चातिशयाख्यं यत्फलं प्रयोजकत्वान्निमित्तं तत्राभेदाध्यवसायः। तथा हि—"कमलमनम्भसि" इत्यादौ वदनादीनां वास्तवं सौन्दर्यं कविसमर्पितेन सौन्दर्येणाभेदेनाध्यवसितं भेदेऽभेदवचनस्य निमित्तम्। तत्र च सिद्धोऽध्यवसाय इत्यध्यवसितप्राधान्यम्। न तु वदनादीनां कमलादिभिरभेदाध्यवसायो योजनीयः। अभेदे भेद इत्यादिप्रकारेष्वव्याप्तेः। तत्र हि "अण्ण लडहत्तणअ" इत्यादौ सातिशयं लडहत्वं निमित्तभूतमभेदेनाध्यवसितम्। एवमन्यत्रापि ज्ञेयम्। तदभिप्रायेणैवाध्यवसितप्राधान्यम्।

प्रकारपञ्चकमध्यात्कार्यकारणभावेन यः प्रकारः स कार्यकारणता-

ननु[1]भेदेऽभेदाध्यवसायो लक्षणमतिशयोक्तेः। तदभेदे भेद इत्यादावव्यापक[2]मित्यत आह—अत्र चाति[3]शयाख्यमित्यादिना। यदिह भेदे[4]ऽभेदादिरूपाया अतिशयोक्ते[5]र्निमित्तभूतं प्रयोजकमतिशयाख्यं फलं तत्राभेदाध्यवसायो, न तु फलिनो[6]। तदिदमुपदर्शयति—तथा हीत्यादि। वदनादीनां[7] यद्वस्तुवृत्त[8]सिद्धं[9] सौन्दर्यं तत्कवि[10]समर्पितेन[11] कमलादिसौन्दर्येण सहाभेदेनाध्यवसितं [12] सद्भेदेऽभेदादिवचनस्य निमित्तं कमलमुखादिकयोरभेदाध्यवसायो योजयितुं शक्यः। तथा[13]सति अव्याप्तिदोषः स्यादित्यत आह—अभेदे भेद इत्यादि[14]। [15]आदिशब्दात्[16] सम्बन्धेऽसम्बन्धपरिग्रहः। प्रकारेष्विति। बहुवचनं तदवान्तर[17]भेद[18]परम्। अभेदे[19] वास्तवे यदा[20] भेदकथनं न[21]हि तदा फलिनोरभेदाध्यवसायः। फलं तु[22] तत्राप्यभेदेनैवाध्यवसीयत इत्यत[23] आह—अण्ण लडहत्तणअ इत्यादा[24]विति। अण्णं लडहत्तणअमित्यादौ हि यत् वस्तु[25]तस्सिद्धं लडहत्वं यच्चान्यत्वेन कविसमर्पितं सातिशयं[26] न खलु तयोर्भेदः कश्चित्। किन्तु सामान्यप्रजापतिनिर्माणकविसमर्पितनिर्माणयोरेव फलिनोर्भेदः। अथ न्यायस्सम्बन्धे[27]ऽसम्बन्ध इत्यत्रापि सम इत्याह—एवमन्यत्रेति। तत्रापि खलु 'लावण्यद्रविणे' त्यादौ वेधसो लावण्यद्रविणसम्बन्धेऽप्यसम्बन्धः केवलं न पुनस्तत्त्या[28] नैसर्गिकलावण्यकविसमर्पितवधसस्सम्बन्धिलावण्ययोरसम्बन्धः। एवमस्या सर्वविधा विषयत्रापि ज्ञेयम्[29]। नियमतो लक्षणभूतमध्यवसितप्राधान्य[30] फलाभिप्रायेणैवेत्याह—तदभिप्रायेणैवेत्यादि। अथ कार्यकारण[31]लक्षण[32]प्रकारे पुनर्विवेचयिष्यमाणे पौनरुक्त्यशङ्कां शमयितुमाह—प्रकारपञ्चकेत्यादि।

---

1 A C भेदाध्य 2 A पक इ 3 E omits च 4 A अभेदेष्वभे 5 C उक्ति 6 A C F फलिन 7 A, C वदन य 8 D वृत्ति 9 A omits सिद्ध C मिद्ध 10 A's alt कपि 11 D E अर्पित 12 D omits सत् 13 D E तथात्वे स 14 D दि इति। 15 A आदि शब्देन आ 16 All except D शब्दपरिग्रहात् 17 A C F तत्सम वास्त 18 D omits भेद 19 D अभेद 20 A's alt यदतिचक C यदि कथ ण्त र्दविव्वित्रोरभेदा 21 A, F omit न हि A's alt omits न 22 A C F omit तु 23 E F इत्याह 24 A C D F H I आदौ हि 25 A C वस्तुवृत्तसि 26 A C शयश्च 27 A C धेऽप्यसम्बन्ध केवल न 28 D E तस्या 29 Omitted in A, C 30 D धान्या 31 E ण भावलक्ष 32 All except D लक्षणे।

अथालंकारप्रस्तावे प्रपञ्चार्थं लक्षयिष्यते ।

एवमध्यवसायाश्रयेणालङ्कारद्वयमुक्त्वा गम्यमानौपम्याश्रया अलङ्कारा इदानीमुच्यन्ते । तत्रापि पदार्थवाक्यार्थगतत्वेन तेषां द्वैविध्ये पदार्थगतमलङ्कारद्वयमुच्यते—

**औपम्यस्य गम्यत्वे पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा समानधर्माभिसंबन्धे तुल्ययोगिता ॥२३॥**

इवाद्यप्रयोगे औपम्यस्य गम्यत्वम् । तत्र प्राकरणिकानामप्राकरणिकानां चार्थानां समानगुणक्रियाभिसंबन्धे अन्वितार्था तुल्ययोगिता । यथा—

> सज्जातपत्रप्रकराञ्चितानि समुद्वहन्ति स्फुटपाटलत्वम् ।
> विकस्वराण्यर्ककरप्रभावाद्दिनानि पद्मानि च वृद्धिमीयुः ॥

---

कार्य[1]ताश्रयत्वात् तत्रापि सङ्गति[2] प्रपञ्चार्थत्वात् नानर्थक्य[3]मिति सर्वम[4]वदातम् ।

> अभेदाध्यवसाया[5] हि फलेऽतिशय[6]नामनि ।
> न पुन फलिनोस्तत्राभेदे भेदो न सिध्यति ॥

अथाध्यवसायमूलम[7]लङ्कारद्वय निगमयन्[8] धर्मान्तरमधिचिकीर्षुराह—एवमध्यवसायाश्रयेणे[9]त्यादि । गम्यमानौपम्याश्रयेष्वपि[10] यन्न्यायात्प्राधान्यमर्हति तद्द्वयमधिकरोति—तत्रापि पदार्थेत्यादिना ।

तत्र तुल्ययोगितायां[11] सूत्रम् । औपम्यस्य[12] गम्यत्वे [13]पदार्थगतत्वेन प्रस्तुतानामप्रस्तुतानां वा[14] समानधर्माभिसम्बन्धे[15] तुल्ययोगिता ।

औपम्यस्य गम्यत्वे पदार्थगतत्वेनेत्यधिकारद्वयम्, अन्यत्तु लक्षणं व्याचष्टे—इवाद्यप्रयोग इत्यादि । प्राकरणिकानामप्राकरणिकानां चेति विषयद्वयम् । गुण[16]क्रिया इति धर्मद्वयम् । अत[17]श्चातुर्विध्यमनुसन्धेयम् । प्राकरणिकेषु गुणाभिसम्बन्ध, क्रियाभिसम्बन्धश्च । अप्राकरणिकेषु तथेति । समान[18]गुण[19]क्रियासम्बन्धो हि तुल्ययोगि (ता[20]) । तामिमा निरुक्तिमाविष्करोति—अन्वितार्थेति । अन्वितार्था अन्वर्था[21] । सञ्जेति[22] । दिनानि[23] सञ्जाना[24]मातपत्राणां प्रक[25]रैरञ्चितानि[26] । पद्मानि तु सञ्जातानां[27] गुणा[28]-

1. D त्वाश्च 2 C. गता 3. C श्च 4 A's alt C अपवाद 5 A C F शेऽप्यपि क 6 A C शयनमिति A's alt शयितामिति 7 D omits मूल 8 Omitted in A. C D 9 D श्रयण 10 All except E. अप्यर्थ न्या 11 A's alt तिघेय 12 F पर्यन्त्यादि 13 H पदार्थ 14 Omitted in A C. F 15 A सम्बन्ध 16 C F गुण 17 A's alt अथ C. अथातु 18. A C. F H I omit समान 19 F गुणाभिसं 20 All mss. omit ता 21 C. अन्वार्था 22 A सपत्नि । 23 D भिद्गानि 24 A's alt मनानां 25 A C. D H प्रकारै 26 H तानि च 27. Omitted in E 28 A D मना ।

अत्र ऋतुवर्णनस्य प्रक्रान्तत्वाद्दिनाना पद्माना च प्रकृतत्वम् । वृद्धिगमन क्रिया । एव गुणोऽपि ।

योगपट्टो जटाजाल तारवो त्वङ्मृगाजिनम् ।
उचितानि तवाङ्गस्य यद्यमूनि तदुच्यताम् ॥

अत्रोचितत्व गुण । अप्राकरणिकाना यथा—

धावत्त्वदश्वपृतनापतित मुखेऽस्य
निर्भिन्ननीलनलिनच्छदकोमलाङ्ग्या ।
भग्नस्य गूर्जरनृपस्य रज कयापि
तन्व्या तवासिलतया च यश प्रमृष्टम् ॥

अत्र गूर्जरनृप प्रति नायिकासिलतयोरप्राकरणिकत्वम् । प्रमार्जन क्रिया । गुणो यथा—

त्वदङ्गमार्दव द्रष्टु कस्य चित्ते न भासते ।
मालतीशशभृल्लेखाकदलीना कठोरता ॥

अत्र कठोरत्व गुण । एवमेषा चतुर्विधा व्याख्याता ॥

---

ताना पद्मानाम् । [1]पाटनेत्येकत्र मरण, अन्यत्र तु[2] पुष्पम् । प्राकरणिकार्थविषयता[3] क्रियाभिसबन्ध च दर्शयति—अत्र[4] ऋतुवर्णनेत्यादि । ऋतुर्ग्रीष्म[5] । प्राकरणिकेषु[6] गुणाभिसन्धायाह—एव गुणोऽपीति । योगपट्ट इति । अत्र तप प्रस्तावाद्योगपट्टादीना प्रकृत[7]त्वम् । उचितत्व[8] गुणस्वभावाभिमानरूपतयाभिसबध्यत, यद्यु[9]चितानि तदुच्यता मित्याक्षेपात् । अनेन गुणक्रिययोर्भावा[10]भावाभिमानरूप[11] वैचित्र्यमप्या[12]सूत्रितम् ।

धाव[13]त्त्वदश्वेति । अश्व[14]पृतनायास्सकाशात् [15]गूर्जरनृपस्य भग्नस्य[16] मुखे पतित रज[17] । कयाऽपि सानुकम्पया[18] तन्व्या प्रमृष्टम् । यश[19]स्तु तवा[20]सिलतया । अप्राकर[21]णिकविषय क्रियाभिसबध दर्शयति—अत्र गूर्जर[22] [23]प्रतीत्यादि[24] । [25]गूर्जरापेक्षया[26]हि[27] कयाऽपीति निर्देशात् तन्व्या[28] अप्राकरणिकत्वम् । असिलतायास्तु वर्ण्यनायकविषयतया । त्वदङ्गेति । त्वदङ्गमार्दव पश्यत मवस्यैव चित्ते[29] माल[30]त्यादीना कठोरताऽवभासत

---

1 F श्वापा 2 Omitted in D E 3 C ता 4 A C त्र वर्णने ऋतुस्वरस प्राक 5 F H शरत् 6 A C H णिकी गु 7 A C H अप्र 8 A C उचित D तस्तु ग 9 D यदुचि 10 A C H चाभिमा 11 D रूपा 12 C अस्
13 A अथवा कचित् भेदश्चेति C अर्थ वाक्यचिद् भेदश्चेति । अथवा केचित् भेदश्चेति 14 A C H अस्पष्टतायास्स 15 A घूर्जर 16 C. भगस्य D अनप्र 17 C F H रजकया 18. A C H. पतया 19 A यथश H इतस्तु 20 A's alt C तयाऽपि क्षतया । अ 21 D करिक 22. A. घूर्ज 23 H omits प्रति 24 F आदिना 25 E घू 26 C क्षयाऽपि 27 Omitted in F 28 A's alt दन्वेया C कन्वेया 29 Omitted in A C H 30 A लतादी ।

प्रस्तुताप्रस्तुतयोर्व्यस्तत्वे तुल्ययोगिता प्रतिपाद्य समस्तत्वे दीपकमुच्यते—

## प्रस्तुतानाप्रस्तुतानां च दीपकम् ॥२४॥

औपम्यस्य गम्यत्व इत्याद्यनुवर्तते । प्राकरणिकाप्राकरणिकवर्गस्य मध्यादेकत्र निर्दिष्टस्समानो धर्म प्रसङ्गेनान्यत्रोपकाराद्दीपनाख्याद्दीपसादृश्येन दीपकाख्यालङ्कारोत्थापक । तत्रेवाद्यप्रयोगादुपमानोपमेयभावो गम्यमान । स च वास्तव एव । पूर्वत्र शुद्धप्राकरणिकत्वे शुद्धाप्राकरणिकत्वे वा वैवक्षिक । प्राकरणिकत्वाप्राकरणिकत्वप्रभावितत्वादुपमानोपमेयभावस्य । अनेकस्यैकक्रियाभिसबन्धादौचित्यात्पदार्थगतत्वोक्ति । वस्तुतस्तु वाक्यार्थत्वे ऽभिम-

---

इत्यथ । अत्र माल[1]त्यादिषु अप्राकरणिकेषु कठोरत्वगुणाभिसबन्ध । तुल्ययोगिता[2] निगमयति—एवमेवेति[3] ।

> प्रकृतेष्वथवान्येषु ज्ञातव्या तुल्ययोगिता ।
> गुणक्रियाऽभिसम्बन्धात् समानादन्विता[4]र्थिका ॥

अथ सङ्गतिपुरस्कारेण दीपक प्रस्तौति—प्रस्तुता[5]प्रस्तुतयो इत्यादि । अथ सूत्रम्—प्रस्तुता[6]प्रस्तुतानां तु दीपकम् । समानधर्माभिसबन्ध इत्य[7]नुपज्यते । अधिकार मनुस्मारयन् व्याचष्टे—औपम्यस्येत्यादिना । इह प्राकरणिका अप्राकरणिकाश्चो-पादीयन्ते । तेष्वे[8]कतरत्रोपात्तस्साधारणो धर्मोऽन्यत्रापकरोति[9] । अतो दीपनरूपादुप कारात् दीपसदृशोऽयमिति कृत्वा दीपक[10]मिदम् ।

तदिदमुक्तम्—प्राकरणिकाप्राकरणिकेत्यादिना । औपम्यस्य[11] गम्यत्व प्राग्व देवेत्याह—तत्रेवाद्य[12]प्रयोगादित्यादि । यश्चात्रोपमानोपमेयभाव स तुल्ययोगितातो विलक्षण इत्या[13]ह—स चेत्या[14]दि । वास्तव [15] प्राकरणिकाप्राकरणिकनिम्नत्वात् । पूर्वत्र तुल्ययोगितायाम् । वैवक्षिक [16] विवक्षया कृत [17] । वैवक्षिक[18]त्वे हेतु —शुद्ध[19]प्राकरणि केत्यादि । शुद्धप्राकरणिकत्वे हि उपमानत्व वा[20]स्तवम् । शुद्धा[21]प्राकरणिकत्वे तूपमेयत्वम् । तदिद विशदीकरोति—प्राकरणिकत्वे[22]त्यादिना । ननु[23] प्रतित्व क्रियासम्बन्धे कथ पदार्थगत इत्यत आह—अनेक[24]स्यैकक्रियेत्यादि[25] । सम्ब[26]ध्यमान[27]धर्मस्यैकत्वा

---

1 A C H माल्यादि 2 D ता 3 H एवेति 4 A अर्थका C आर्थिका E अथिता H अर्थता 5 A C H प्रकृताप्रकृत 6 F स्तुतेति । समा 7 C इत्यत्रानु E इत्याद्यनु [illegible] A C एकत्रो 9 A C H करोतीति । 10 E कालंकार 11 D म्यगम्य 12 A's alt अन्य 13 D इत्यत आह 14 F यादि शुद्ध 15 A F H वशा 16 A C F H कादि 17 A C F H क्षयवै 18 A C F H कर्तव 19 All except E शुद्ध 20 D अवा 21 C F द्धशा 22 D E केत्या 23 Omitted in C 24 A's alt C मनेकस्य [illegible] अहेतुकस्य 25 A's alt येति आदि 26 A s alt बन्ध्य 27 F H मानस्य ।

ध्यान्तवाक्यगतत्वेन धर्मस्य वृत्तावादिमध्यान्तदीपकाख्यास्त्रयोऽस्य भेदाः। क्रमेणोदाहरणम्—

रेहइ मिहिरेण णहं रसेण कव्वं सरेण जोव्वणअम्।
अमएण धुणीधवओ तुम ए णरणाह भुवणमिणं॥

यथा वा—

सञ्चारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम्।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः॥
विसमअओ च्चिअ काणवि काणवि बोलेइ अमअणिम्माओ।
काणवि विसामअमओ काणवि अविसामअमओ कालो॥

त्पदार्थत्वोपचरण[1]मित्यर्थः। अतो[2] वाक्यार्थगतत्वे[3] वास्तवे त्रैविध्यमुपपद्यत इत्या[4]ह—वस्तुतस्त्वित्यादि। रेहइ इति[5]।

राजते मिहिरेण नभो रसेन काव्यं स्मरेण यौवनम्।
अमृतेन धु[6]नीधव[7]स्त्वया नरनाथ भुवन[8]मिदम्॥

धुनी[9] सरिद्धवः[10] पतिः, सागर इत्यर्थः। इदं क्रियायाः आदिवाक्यगतत्वादादिदीप[11]कम्।

संचारेति। निलयो [12]गृहम्[13] अस्तमयश्च। पल्लवरागो माणिक्यविशेषः योगारूढराग:[14](?)¶। इदमप्यादिदीपकम्[15]। क्रियायाः प्रथम[16]पदत्वम[17]तन्त्रमिति द्योतयितुम्—(*यथा वेति)। (‡विसमअओ) इति। एतन्मध्यदीपकम्। (बोले[18]इ) इति मध्ये[19] वाक्ये क्रिया[20]विनिवेशात्। किवणाणेति।

1. D. चार 2. A's alt. अधो C. अय 3. C त्रे नरनाथ 4. H. इत्यत आह 5. Omitted in D. 6. E. धुनी सुधी ध 7. D. I. धवलस्त्व 8. C. भुवनार्दा 9. C. धनी 10. A. द्रवश्च C. द्रश्च D. E. I धवल इह पतिः 11. H कं घोग्रह: 12. A. C. ति। लंयो 13. A. C ग्रहं D. गृह: 14. A. C. H. I यागधरा इ 15. C. दीपक 16. A. C. H. ममुपात्त त्वादत 17. A's alt. अतीन्द्र C. अतीन्द्रं 18. All mss. चक्रेन्दुप्विति 19. All except E मध्य 20. A. D. F. H. क्रियानि।

¶ This perhaps is a mistake of the copyist for योगरूढ which fits in the context.

* All the mss. give wrong readings.—A. C. H. read as यत इति while D. E. F. have व्याघात इति। The reading यथा वेति is restored here since the verse संचारपूतानि etc. is an alternate illustration for the first variety of Dipaka.

‡ The pratika of the illustrative verse विसमअओ has strayed *after* एतन्मध्यदीपकम् and is *found corrupt in* all mss. as विट्टिपना (given in A. D. E. F. H. I.) and विपयतां (in C) Usually our author gives the chāyā of the prākrit verses which too is missing etc.

किवणाण धणं णाग्राण फणमणी केसराइ सीहाणं।
कुलवालिग्राण ग्र थणा कुत्तो छेप्पंति ग्रमुग्राणं॥

एवमेकक्रियं दीपकं निर्णीतम्। ग्रत्र च यथानेककारकगतत्वेनैकक्रिया-दीपकं तथानेकक्रियागतत्वेनैककारकमपि दीपकम्। यथा—

साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम्।
न कुतूहलि कस्य मनश्चरितं च महात्मनां श्रोतुम्॥

ग्रत्रोपकरणाद्यनेकक्रियाकर्तृत्वेन कुतूहलविशिष्टं मनो निर्दिष्टम्। छायान्तरेण तु मालादीपकं प्रस्तावान्तरे लक्षयिष्यते।

वाक्यार्थगतत्वेन सामान्यस्य वाक्यद्वये पृथङ्निर्देशे प्रतिवस्तू-पमा ॥२७॥

पदार्थारब्धो वाक्यार्थ इति पदार्थालङ्कारानन्तरं वाक्यार्थगतालङ्कार-प्रस्तावः। तत्र सामान्यधर्मस्येवाद्युपादाने सकृन्निर्देशे उपमा। वस्तुप्रतिवस्तु-

---

*कृपणानां धनं नागानां फणामणिः केसराणि सिंहानाम्।*
कुलपालिकानां च स्तनौ कुतस्स्पृश्यन्तेऽमृतानाम्[1]॥

जीविताग्र (जीविता न ?) स्पृश्यन्ते इत्यर्थः। क्रियादीपकत्रयं निगमयति—एव-मेकेति। ग्रनयैव[2]नीत्या कारकदीपकं उदाहर्तुमाह—ग्रत्र च यथेत्यादि[3]। साधूनामिति। कारकदीपकत्वं विवृणोति ग्रत्रोपकरणा[4]दिति। मालादीपकं तु प्रस्तावान्तरे भवि-ष्यतीत्याह—छायान्तरेण त्विति[4]।

दीपकं वास्त[5]वौपम्यं प्रकृताप्रकृताश्रयम्।
ग्रादिमध्यान्तवाक्येषु क्रियाकारकभेदतः॥

ग्रथ वाक्यार्थगतत्वेन प्रतिवस्तूपमां सूत्रयति—वाक्यार्थ[6]गतत्वेन सामान्यस्य वाक्यद्वये पृथङ्नि[7]र्देशे प्रतिवस्तूपमा॥ सङ्गतिमाह—पदार्थार[8]ब्धेति। इह मालालङ्कार ग्रङ्गाभिपनेतु विषयं विभजति—तत्र सामान्यधर्म[9]स्येत्यादि। इत्या(इवा ?)दिकमुपादाय सामान्यधर्मस्य सकृन्निर्देश उपमा[10]यामेवो[11]दाहृत[12] 'ग्रभामहत्या निशयेव दीप' इति। इवादिकमुपादाय वस्तुप्रतिवस्तुभावेनासकृन्निर्देशोऽपि सैव 'यान्त्या मुहुर्वलितकन्धर-माननं तदावृत्त[13]वृन्तशतपत्त्रनिभ'मिति। इवादिकमनुपादाय यथा सकृन्निर्देशात्तदा प्रस्तुताप्रस्तुतानां समस्तत्वे दीपकं, तदेव व्यस्तत्वे[14] तुल्ययोगिता। तदुभयमपि सम-नन्तरमेव दर्शितम्।

---

1. A. C. H न्ते इत्यर्थः। 2. A. C. F. H एव च 3 A. C इत्यादि। 4 A C. F. H इति। अथ वाक्या 5. D वस्तुवद्वाक्यं 6. F. अर्थेति। संगति 7. D निः 8. A. C. H अर्थान्तरम्ये 9. A. C. H omit धर्म 10. E. उपमा 11. E. यथोदा 12. A. C हृतः। 13. A. वृत्त C. वृत्तं 14. D. तु तुल्य।

भावेनासकृन्निर्देशेऽपि सैव । इवाद्यनुपादाने सकृन्निर्देशे दीपकतुल्ययोगिते । असकृन्निर्देशे तु शुद्धसामान्यरूपत्वं विम्बप्रतिविम्बभावो वा । आद्यः प्रकारः प्रतिवस्तूपमा, वस्तुशब्दस्य वाक्यार्थवाचित्वे प्रतिवाक्यार्थमुपमा साम्यमित्यन्वर्थाश्रयणात् । केवलं काव्यसमयात्पर्यायान्तरेण पृथङ्निर्देशः । द्वितीयप्रकाराश्रयेण दृष्टान्तो वक्ष्यते । तदेवमौपम्याश्रयेणैव प्रतिवस्तूपमा । यथा—

चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि ।
आवन्त्य एव निपुणाः सुदृशो रतकर्मणि ॥

अत्र चतुरत्वं साधारणो धर्म उपमानवाक्ये, उपमेयवाक्ये तु निपुणपदेन निर्दिष्टः । न केवलमियं साधर्म्येण, यावद्वैधर्म्येणापि । यथात्रैवोत्तरस्थाने—

विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि ।

इति पाठे ।

---

असकृन्निर्देशे[1]तु द्वयी गतिः—शुद्धसामान्यरूपत्व, विम्वप्रतिविम्बो वा । शुद्धसामान्य[2]त्वं नाम सम्बन्धिभेदमात्रा[3]द्धर्मस्य पृथङ्निर्देशः । तथा[4] इवाद्यनुपादाने प्रतिवस्तूपमा । प्रतिवस्तूपमा[5]निर्वक्ति—वस्तुशब्दस्येत्यादि । वस्तुशब्द इह वाक्यार्थपरः । उपमा तु साम्यम् । प्रतिवाक्यार्थं भवतीत्यन्वर्थाश्रयणा[6] ।

ननु यदि धर्मस्यासकृन्निर्देशरूपं शुद्धसामान्यरूपत्वं तदा किं पर्यायान्तरेणे[7]त्यत आह—केवलं काव्येत्यादि । उद्देशप्रतिनिर्देशभावाभावे यदा तस्यैव पुनरुपादानं, तदा पर्यायान्तरा[8]भावे [9]अनवीकृतदोषः स्यात् । अतः पर्यायान्तरेण पृथङ्निर्देशः[10] इति काव्यसमयः । सोऽयं प्रतिवस्तूपमाविषयः । अथ धर्म्यपेक्षो[11] विम्वप्रतिविम्बभावो यदा, तदा दृष्टान्तो वक्ष्यत[12] इत्याह—द्वितीयप्रकारेत्यादि । सादृश्या[13]धिकारमनुस्मारयति—तदेवमौपम्येत्यादि । चकोर्य[14]इति । आवन्त्यः अवन्तीप्रभवाः ।

धर्मस्य[15] शुद्धसामान्यरूपता पर्याया[16]न्तरत्वं च दर्शयति—अत्र चतुरत्व[17]मित्यादि । विच्छित्त्यन्तरमाह—न केवलमित्यादि । लाघवाय प्रागुदाहरणमेव [18]वैधर्म्येण दर्शयति—विनावन्तीरि[19]ति ।

असकृद्धर्मनिर्देशादिवादेरनुपग्रहात्[20] ।
प्रतिवस्तूपमा ज्ञेया प्रतिवाक्यार्थसाम्यतः ॥

---

1. D. श 2. A. H रूपत्वं 3. F. omits मात्र 4. D. तदेवाद्य 5. D. निर्वृत्ति 6. C. E णात् D णामनु 7. C. अत्राह D. ग्रर्थत 8. D. न्तर 9. A. आन 10. D. E निर्देश इ 11. C. पेक्षा 12. F. वक्ष्यन्त 13. A. C. F. H. I त्यपमधि 14 D. E कोर्य पूर्वेति 15. A's alt. C स्येह 16. C. रूपत्वं 17. A. C. D. H. I त्वामि 18. A. C. F. H. I साध 19. A. F. H इत्यादि 20. B. D. E. म ।

## तस्यापि बिम्बप्रतिबिम्बतया निर्देशे दृष्टान्तः ॥२६॥

तस्यापि, न केवलमुपमानोपमेययोः । तच्छब्देन सामान्यधर्मः प्रत्यवमृष्टः । अयमपि साधर्म्यवैधर्म्याभ्यां द्विविधः ।

आद्यो यथा—

अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः ।
दैवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ॥

अत्र यद्यपि ज्ञानाख्य एको धर्मो निर्दिष्टस्तथापि नैतन्निबन्धनमौपम्यं विवक्षितम् । यन्निबन्धनं च विवक्षितं तत्राब्धिलङ्घनादायस्यैव दिव्यवागुपसनादिना प्रतिबिम्बनम् ।

द्वितीयो यथा—

कृतश्च गर्वाभिमुखं मनस्त्वया
किमन्यदेवं निहताश्च नो द्विषः ।
तमांसि तिष्ठन्ति हि तावदंशुमा-
न्न यावदायात्युदयाद्रिमौलिताम् ॥

---

अथ दृष्टान्त मुत्र[1]यति—तस्यापि[2] बिम्बप्रतिबिम्बतया निर्देशे दृष्टान्तः । व्याचष्टे—तस्यापि न[3] केवलमित्यादि । प्रतिवस्तूपमान्यायेन[4] द्वैविध्यमाह[5]—अयमपीति । अब्धिर्लङ्घित इति । गुरुकुलक्लिष्ट. नित्योपासनेन तदेकशरणीभूत । अत्र[6] बहूना वानरभटै [7]मन्थाचलेन सह[8] धर्म्यपेक्षो बिम्बप्रतिबिम्बभावः । दिव्यवागुपासनस्य अब्धिलङ्घनेन[9] गुरुक्लिष्टत्वस्या[10] पातालनिमग्नत्वेन च धर्मा[11]पेक्ष । ननु जानाति जानीत इति [12]ज्ञानस्य पृथङ्निर्देशात् कथमिद दृष्टान्तोदाहरणमित्यत आह—अत्र यद्यपीत्यादि । नैतन्निबन्धनमिति । न हि ज्ञाननिबन्धन [13]औपम्य विवक्षित, [14]ज्ञानस्योपचारात् । यत्र [illegible] विवक्षा[15] तत्र न[16] किञ्चि[17]न्न्यूनमित्यत[18] आह—यन्निबन्धनं चे[19]त्यादि । इद साधर्म्ये[20] । कृतश्चेति[21] । त्वया मनसि गर्वाभिमुखे कृते तत्क्षणमेव द्विषो निहता इत्यर्थ. । द्वौ चकारौ

---

1. A. F सूच [illegible] F अपि इति । व्या 3. Omitted in all except E. H. 4 C. न्यायो न 5 F ध्यं दर्शयति । अ 6. A. C. H अथ 7. All except D. मुरारिकवेः म 8 A C साधर्म्यां 9 न omitted in A C. F. H. 10. E स्यत्वापाता 11. D धर्म्यपे 12 D. E इति च 13 A C. F. H अनौप 14. A. C. F. H यत्रत्र ज्ञा E अचले ज्ञा 15 A's alt. C ज्ञाते कि 16. Omitted in A's alt. C. D. 17 E किञ्चन 18 E. इत्याह 19 F चेति । Omitted in D. 20. All except F read धर्म्ये 21 E इत्यादि ।

अत्र निहतत्वादेः स्थानादिना वैधर्म्येण प्रतिबिम्बनम् ।

**संभवताऽसंभवता वा वस्तुसंबन्धेन गम्यमानं प्रतिबिम्बकरणं निदर्शना ॥२७॥**

प्रतिबिम्बप्रस्तावेनास्या लक्षणम् । तत्र क्वचित्संभवन्नेव वस्तुसंबन्धः स्वसामर्थ्याद्बिम्बप्रतिबिम्बभावं कल्पयति । क्वचित्पुनरन्वयबाधादसंभवता वस्तुसंबन्धेन प्रतिबिम्बनमाक्षिप्यते। तत्र संभवद्वस्तुसंबन्धा यथा—

चूडामणिपदे धत्ते यो देवं रविमागतम् ।
सतां कार्यातिथेयीति बोधयन्गृहमेधिनः ॥

अत्र बोधयन्धत्त इति णिचस्तत्समर्थाचरणे प्रयोगात्संभवति वस्तुसंबन्ध. । असंभवद्वस्तुसंबन्धा यथा—

अव्यात्स वो यस्य निसर्गवक्रः
स्पृशत्यधिज्यस्मरचापलीलाम् ।
जटापिनद्धोरगराजरत्न-
मरीचिलीढोभयकोटिरिन्दुः ॥

---

क्रिययोरेक[1]रूपकालतामाहतुर्यत । वैधर्म्येण प्रतिबिम्बन[2] निद[3]र्शयति—अत्र निहितत्वादेरित्यादि । निहतस्य गर्वाभिमुखीकरण[4] च अन्वयमुखेन उक्तम् । तम स्थान उदयाद्रि[5]मौलिरव च व्यतिरेकमुखेन । न[6] यावदित्युपन्यासात् । अतो वैधर्म्येण प्रतिबिम्बनम् ।

बिम्बानुबिम्बन्यायेन निर्देशे[7] धर्मधर्मिणो[8] ।
दृष्टान्तालंकृतिर्ज्ञेया भिन्नवाक्यार्थसंश्रया ॥

निदर्शना सूत्र[9]यति—समवताऽसभवता वा[10] वस्तुसम्बन्धेन गम्यमानं प्रतिबिम्बकरण निदर्शना। सङ्गतिमाह—प्रतिबिम्बेति[11] । व्याचष्टे—तत्र क्वचिदित्यादि । वस्तुसम्बन्धो वाक्यार्थसम्बन्ध । इयमिय[12] द्विधा—सम्भवद्वस्तुसम्बन्धा, असम्भवद्वस्तुसम्बन्धा चेति—चूडामणीति। यो गिरिरागत अभ्यागत रवि सता[13] आतिथेयी अतिथिसत्कृति कार्येति[14] बोधयन्[15] धत्ते[16] । योजयति—अत्र [17]बोधयन्धत्त इति। बो[18]धनसमर्थस्य आचारो गिरौ प्रयुक्त[19] तस्याचेतनत्वेऽपि कारीषोऽग्निरध्यापयतीतिवत् गिरि गृहमेधिनो बोधनक्रियासमर्थान् करोतीति तत्सामर्थ्याचरणे णिच प्रयोगात् सम्भवति वस्तुसम्बन्ध ।

अ[20]व्यात्स इति । स शिवोऽव्यादित्यर्थ[21] । [22]यस्येन्दु स्मरचापलीला स्पृशति।

---

1 A's alt C. एपुकान्तामा H एक्का ताभा 2 A C नम् । बिम्बानु 3 D निर्देशयति E निर्दर्शयति 4 H ण व्यति 5 E अद्रि 6 Omitted in all except E 7. A. C F H I देशो 8 E धर्मिणो 9. D सूच 10 Omitted in A C F H 11. D वति 12 D. E. H I चेय 13 D साता 14 A's alt बोद्गन्धस्त इति 15 D omits य 16 A C D. F. H I त्ते । अत्र 17. A. C H चोद 18 A C. H चोद 19. A C. D F I प्रयुक्त इति सम्भवति 20 D व्यामव 21. H अर्थः । यभवद्वस्तु (P 96) 22 A C F. H अस्य D यत्र ।

अत्र च स्मरचापसंबन्धिन्या लीलाया वस्त्वन्तरभूतेनेन्दुना स्पर्शनमसंभवल्लीलासदृशीं लीलामवगमयतीत्यदूरविप्रकर्षात्प्रतिबिम्बकल्पनमुक्तम् । एषापि पदार्थवाक्यार्थवृत्तिभेदाद्द्विधा । पदार्थवृत्तिः समनन्तरमुदाहृता । वाक्यार्थवृत्तिर्यथा—

त्वत्पादनखरत्नानां यदलक्तकमार्जनम् ।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥

केचित्तु दृष्टान्तालंकारोऽयमित्याहुस्तदसत् । निरपेक्षयोर्वाक्यार्थयोर्हि बिम्बप्रतिबिम्बभावे दृष्टान्तः । यत्र तु प्रकृतवाक्यार्थे वाक्यार्थान्तरमध्यारोप्यते सामानाधिकरण्येन तत्र संबन्धानुपपत्तिमूला निदर्शनैव युक्ता, न दृष्टान्तः । एवं च—

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥

---

पमान्य[1]सम्बन्धिन्या लीलाया अन्येन स्पर्शासंभवात् इयमसंभवद्वस्तुसम्बन्धा । ननु तर्हि असङ्गतिरेव स्यादित्यत आह—लीलासदृशीं लीलामित्यादि । लक्षणा[2]श्रयणाद[3]दूरविप्रकर्षम् । वैचित्र्यान्तरायाह—एषापी[4]त्यादि । समनन्तरोदाहृतायामेक क्रिया[5]भिसम्बन्धात् पदार्थवृत्तिता[6] । त्वत्पादेति । नखरत्नाना निसर्गशोणत्वात् अलक्त(क[7])मार्जनं विधो पाण्डुरीकरण[8]वत् अप्रयोजकमित्यर्थ । इयमसम्भवद्वस्तुसम्बन्धा वाक्यार्थ[9]वृत्ति । मार्जनमेव पाण्डुरीकरणं न[10] भवति[11] यत[12] अत्र येषा दृष्टान्तधी,[13] ते मन्दा इत्याह—केचिदित्यादि । वाक्यार्थनैरपेक्ष्ये[14] दृष्टान्त । सापेक्षत्वे तु निदर्शनेत्याह—यत्र तु प्रकृत इत्यादि । सामानाधिकरण्ये[15]नाध्यारोप्यत इति वाक्यैकताश्रयणेन एकक्रिया[16]न्वयात् प्रकृतान्त.पातित्व[17] नीयत इत्यर्थ । तत्र[18] वाक्ये प्रकृताप्रकृतवाक्ययो सम्बन्धानुपपत्तिमूला[19] निदर्शन[20]वेत्यर्थ । यत्राप्यनतिस्फुट[21] सापेक्षत्व दृष्टान्तधीर्माभूदिति उदाहरणेन दर्शयति—एवं च[22] शुद्धान्तेत्यादि । आश्रमवासिनो जनस्य शुद्धान्तदुर्लभ वपु[23]र्यदीति[24] यच्छब्द[25] उत्तरवाक्य तर्हि दूरीकृता इति तच्छब्द[26]मुत्थापयति इति[27] वाक्यार्थयो[28] सापेक्ष-

---

1 D. अनुम 2. A C F. H लक्षणा समाश्रय D. क्षणाद 3. A. F. H णाद् 4 A C H षेत्या 5 A C. D. H क्रियाम 6 A. C. H त्तित्वापादं 7. All mss omit क 8 D रणं भवति । इदं म 9. All except E वाक्य वृ 10. A म्मवति । 11. E ति । अत्र 12 A C F. H यतः एषा 13. A's alt धीतः मापिस्था C. धीते माविस्था D धी· करणपे 14 E. क्ष्यह दृष्टा 15. A's alt C करणं वं नाध्या नारोप्यत 16 E या समन्व 17 D पातत्वं 18. A C. F. H तत्र तु वा 19. C मूले 20. A's alt नैरपेक्ष्य 21. F स्फुटं च 22. Omitted in A C. H. 23 D omits वपुः 24 इति omitted in A. C. F. H 25. A's alt. C यच्छब्द 26 A.C. H तच्छब्दम् 27. Omitted in C D. 28. A. H अर्थः । माषे C अर्थमाषे ।

इत्यत्र दृष्टान्तबुद्धिर्न कार्या । उक्तन्यायेन निदर्शनाप्राप्तेः । इयं च सामान्येनैवोपमानवृत्तस्योपमेयेऽसंभवात्प्रतिपादिता पूर्वैः । वस्तुतस्तूपमेयवृत्तस्योपमानेऽसंभवादपि संभवति । उभयत्रापि संबन्धविघटनस्य विद्यमानत्वात् । तद्यथा—

वियोगे गौडनारीणां यो गण्डतलपाण्डिमा ।
अलक्ष्यत स खर्जूरीमञ्जरीगर्भरेणुषु ॥

अत्र गण्डतलं प्रकृतम् । तद्धर्मस्य पाण्डिम्नः खर्जूरीरेणुष्वसंभवादौपम्यप्रतीतिः । एष च प्रकारः शृङ्खलान्यायेनापि संभवति । यथा—

मुण्डसिरे बोरफलं बोरोवरि बोरअं थिरं धरसि ।
बिग्गुच्छाअइ अप्पा णालिअछेआ छलिज्जन्ति ॥

---

त्वान्निदर्शनैव इयम् । तदेतदाह—उक्त[1]न्यायेनेति । अथ वैचित्र्या[2]न्तरायाह—इयं च सामान्येनैवेत्यादि । सामान्येन[3] वाक्यार्थयोरसम्बन्धात् प्रतिपादनं वैचित्र्यान्त[4]रोपोद्घातः[5] । [6]वैचित्र्यान्तरं विवेचयति—उप[7]मेयवृत्तस्येत्यादि । शुद्धान्तदुर्लभमित्यादौ हि[8] उपमेय[9]-वृत्तेऽध्या[10]रोपितस्य उपमानवृत्तस्यासम्भवः । अयं तद्विपर्ययोऽपि—वियोग[11] इति[12] । वियोगेन[13] निमित्तेन[14] [15]पाण्डरीभूताना नारीणा गण्डतले[16]यः[17] पाण्डिमा स[18]खर्जूरी[19]मञ्जरी[20]-गर्भरेणु[21]ष्वलक्ष्यतेत्यत्र उपमेयवृत्त[22]स्य गण्ड[23]पाण्डिम्नो मञ्जरीगर्भरेणुरूप[24]उपमानवृत्तेर्लक्ष्यत्वासभवात् उपमा प्रतीयते । तदेतदाह— अत्र गण्डतलमि[25]त्यादि । अस्यैव च प्रकारस्य वैचित्र्यान्तरायाह—एष चेति । एष प्रकार उपमेयवृत्तस्य उपमानवृत्ते[26]ऽन्वयासभवलक्षणम् । मुण्डसिरेति ।

मुण्डशिरसि बदरफलं बदरो[27]परि बदरं स्थिरं धारयसि ।
[28]द्विगुच्छायसे* आत्मा मूढः छेकाश्छल्यन्ते ॥

---

1. A's alt उत्तरन्या 2 A. C. H चित्र्यावान्त 3. A's alt C मान्ये यॊ वा 4. A's alt. अन्तरो हि इथा C. तरोहि ' 'घात. । 5. F द्धातं विने 6. A. C तः दृष्टान्तवलक्षणय न्याय अवान्तर वैचि 7. A's alt C पृपमेधवृत्त 8. Omitted in D. 9. A. C. F. H मेयायारोपि 10. D वृत्तेरध्या 11. A. C. योगः स्मृति 12. Omitted in F. 13. A C. F. H omit न. 14. A. C. F. H omit म 15. A. C. F. H नारीणां पाण्ड D. E I गौरीणामपा 16. A तले 17. Omitted in A. C. H. 18 Omitted in D. 19. C खर्जुरी 20. D. E. मञ्जरीणां 21. A's alt omits णु 22. A. C. H निमित्त 23 D. गण्डा 24. A's alt C. रूपवनवृत्ते D. F रूपे 25 C इत्यसंभवो माल (P.95) A. F इत्यादि । असंभवो माल (P.95) 26. D वृत्त 27. D दरफलोपरि 28. D द्विगु ।

* The meaning of द्विग or दिग in the Chaya is obscure. The chaya of the whole expression बिग्गुच्छाअइ given by Jayaratha and Samudrabandha is विडम्ब्यते । These two commentators give the chaya of the last quarter as धूर्तच्छेका छल्यन्ते ।

अत्र मुक्तेति निषेधपदं तदन्यथानुपपत्त्या पादयोर्हंसगतिप्राप्तिराक्षिप्यते। सा च तयोरनुपपन्ना सादृश्यमवगमयतीःसंभवद्वस्तुसंबन्धनिबन्धना निदर्शना।

**भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः ॥२८॥**

अधुना भेदप्राधान्येनालङ्कारकथनम्। भेदो वैलक्षण्यम्। सा च द्विधा भवति। उपमानादुपमेयस्याधिकगुणत्वे न्यूनगुणत्वे वा भावात्। विपर्ययो न्यूनगुणत्वम्। क्रमेणोदाहरणम्

विदृक्षवः पक्ष्मलताविलासमक्ष्णोः सहस्रस्य मनोहरं ते।
वापीषु नीलोत्पलिनीविकासरम्यासु नन्दन्ति न षट्पदौघाः॥

---

प्राप्ते. सम्बन्धानुपपत्तिरपि क्वचिन्निदर्शनाबीजमित्यर्थः। [2]तदा(नी मिय[3])मार्थीति[4] भावः। उत्कोप इति। अत्र[5] पङ्क्या हंसगतिर्मुक्तेति त्यागरूपनिषेधबलात् पादयोर्हंसगतिप्राप्तिराक्षिप्ता[6]। सा साक्षात्सम्बद्धु[7]मशक्ता सादृश्यमवगमयति। तदेतदाह—अत्र मुक्तेत्यादि।

सम्भव[8]द्वस्तुसम्बन्धोऽसम्भव[9]न्वावबोधयेत् ।
प्रतिबिम्ब यदि[10] तदा [11]निर्ज्ञातव्या निदर्शना ॥
बिम्बानुबिम्बार्थतया वाक्ययोः प्रकृतान्ययोः ।
स्यान्निरपेक्षे[12] दृष्टान्तः सापेक्षत्वे निदर्शना ॥

इत्थमभेदप्राधान्याधिकारनिपातिनोऽलङ्कारा. विवेचिताः।

अथ भेदप्राधान्येन[13] व्यतिरेक सूत्रयति—भेदप्राधान्ये उपमानादुपमेयस्याधिक्ये विपर्यये वा व्यतिरेकः[14]। भेदप्राधान्ये साधर्म्य[15] इत्यमुपज्यते[16]। भेदप्राधान्य व्यतिरेकस्योक्तचरमनुस्मारयन् अधिकरोति —अधुनेत्यादि[17]। भेदसम्भवं चित्र्यद्वय प्रभेदबीजत्वेन उद्घाटयति—भेदो[18] वैलक्षण्यमित्यादि[19]। विपर्यय[20]शब्दात् मिथ्याज्ञान[21]भ्रमो मा भूदित्याह—विपर्ययो न्यूनगुणत्वमिति[22]।

दिदृक्षव इति। अत्र नीलोत्प[23]लिनी विकासापेक्षयाक्षिसहस्रपक्ष्मलताया अधिकगुणत्वम्।

1. A's alt C नार्द्वीजं 2. A's alt. तदर्थी 3. All mss. नीयमियं 4. D अर्थी 5 C. अम 6. C. सार्य साक्षा 7. C संबन्धम E. F बन्धु। 8. H पक्षमं वस्तु 9. D भवन्वा बो 10. Omitted in A C. D. F. H. 11. A. निर्णीतव्या C नि·····नि D. निज्ञात 12. D पेक्ष्य 13. D. E. F तत्र न्य 14. H कः मोऽत्र चरमनु 15. A's alt C धर्म्यपने 16. All mss. ते याथिरासुः भेद 17. D. आदि। विपर्ययः। 18. H. भेद 19. H. आदि। विपर्ययो न्यून 20. D. पर्ययः A's alt. यः सुमित्या (ष्या)[ज्ञान] भ्रमो C. यः स मित्याज्ञाने भ्रमो 21. Omitted in D F. 22. इति omitted in H. 23 A. C. D. H पत्नानि।

क्षीणः क्षीणोऽपि शशी भूयो भूयो विवर्धते सत्यम्।
विरम प्रसीद सुन्दरि ! यौवनमनिवर्ति यात तु ॥

अत्र विकस्वरनीलोत्पलिन्यपेक्षयाक्षिसहस्रस्य पक्ष्मलताया वैलक्षण्यमधिकगुणत्वम्। चन्द्रापेक्षया च यौवनस्य न्यूनगुणत्वम्। शशिवैलक्षण्येन गतस्यापुनरागमात्।

उपमानोपमेययोरेकस्य प्राधान्यनिर्देशेऽपरस्य सहार्थसंबन्धे सहोक्तिः ॥२६॥

भेदप्राधान्य इत्येव। गुणप्रधानभावनिमित्तकमत्र भेदप्राधान्यम्। सहार्थप्रयुक्तश्च गुणप्रधानभावः। उपमानोपमेयत्व चात्र वैवक्षिकम्। द्वयोरपि प्राकरणिकत्वादप्राकरणिकत्वाद्वा सहार्थसामर्थ्याद्धि तयोस्तुल्यकक्षत्वम्। तत्र

---

क्षीण क्षीणो[1]ऽपीति। अत्र अनिवर्तिनो यौवनस्य क्षयिणो[2]ऽपि भूयोऽभि[3]-[4]वर्धितशशिन्यपेक्षया न्यूनगुणत्वम्। तदेतदुभय योजयति—अत्र विकस्वरेत्यादिना[5]।

भेदप्रधाने साधर्म्ये व्यतिरेको विधीयते।
आधिक्याद्‌पमेयस्य न्यूनत्वा[6]द्वोपमानत ॥

सहोक्ति सूत्रयति—उपमानो[7]पमेययोरेकस्य प्राधान्यनिर्देशे[8]ऽपरस्य सहार्थ[9]-सम्बन्धे सहोक्ति। अधिकारमनुस्मारयन्[10] [11]सामग्रीमस्या विविनक्ति—भेदप्राधान्य इत्येवेत्यादिना। ननु सहार्थ[12]तया[13] तुल्यकक्षयो[14] कथ भेदप्रधानतेत्यत आह—गुणप्रधानभावेत्यादि। सत्यम्। सहार्थ[15]सामर्थ्यात् साधर्म्यमेवात्र। भेदप्राधान्य तु व्यतिरेक[16]नयेन साधर्म्यंभित्ति[17]कमिह न भवति अपि तु गुण[18]प्रधानभावभित्तिकमिति यावत्। ननु समानयोगत्वे गुणप्रधानभावोऽपि[19] कीदृगि[20]त्यत आह—सहार्थप्रयुक्तेति। सहार्थो हि तृतीया त गुणत्वेन प्रयोजयति। ननु सहार्थत्वे क[21] उपमानोपमेयभाव इत्यत आह—उपमानोपमेयत्व चेत्यादि[22]। [23]तद्धि तृतीयान्तस्य[24] विशेषणत्वादुपमानत्व विवक्ष्यते। इतरस्य तु विशेष्यत्वादुपमेयत्वम्। अतो वैवक्षिकमेव न तु[25] वास्तवमिति भाव। अवास्तवत्वे हेतुमाह—द्वयोरपीत्यादि। ननु[26] द्वयो प्राकरणिकत्वमेवाप्राकरणिकत्वमेव वेति[27] किं नियामकमित्यत आह—सहार्थसामर्थ्यादिति। ननु तर्हि

---

1 A. C F H क्षीणाविति 2 D G क्षयिणोऽपि E क्षयेऽपि 3 C भूयाभि 4 A's alt C वर्धित F H अभिवृद्ध श 5 A C F H आदिना महोक्ति 6 C त्वाद्वोप 7 F उपमानेति 8 A भे पर 9 E अर्थाभिस 10 D च सार्म 11 A C F H सामान्यस्य वि 12 H अर्थ येन साधर्म्य 13 D त्या 14 A C D H कक्ष्यो 15 C अर्थ 16 A C D F H I न्यायेन 17 C omits भित्ति 18 A C गुणप्रगुण प्र 19 D अपी ति की 20 A F H कीदृश इत्यत 21 A's alt C तु 22 A's alt C नेत्या 23 A's alt. C त तृतीय 24 A C F H अन्त तस्य 25 Omitted in A C H 26 A C F H न तु 27 All mss इति वा किं

तृतीयान्तस्य नियमेन गुणत्वादुपमानत्वम् । अर्थाच्च परिशिष्टस्य प्रधानत्वादुप-
मेयत्वम् । शाब्दश्चात्र गुणप्रधानभाव· । वस्तुतस्तु विपर्ययोऽपि स्यात् । तत्रापि
नियमेनातिशयोक्तिमूलत्वमस्या । सा तु कार्यकारणप्रतिनियमविपर्ययरूपा
अभेदाध्यवसायरूपा च । अभेदाध्यवसायश्च श्लेषभित्तिकोऽन्यथा या । साहित्य
चात्र कर्त्रादीना भेदाद् ज्ञेयम् । तत्र कार्यकारणप्रतिनियमविपर्ययरूपा
यथा—

भवदपराधैं सार्धं सन्तापो वर्धतेतरा तस्या ।

---

वैवक्षिकत्वे कतरत्[1] येन रूपेण विवक्ष्यतामित्यत आह—तृतीयान्तस्येत्यादि[2] । ननु[3]
प्रधानमपि तृतीयान्तेन[4] निर्देशमर्हतीत्यत आह—शाब्दश्चेति[5] । सहशब्दो हि नियमेन
तृतीयान्तस्य शाब्द[6]गुणत्व कल्पयति । इतरस्य तु प्राधान्यम् । तर्हि अर्थापेक्षया का
स्थितिरित्यत आह—वस्तुतस्त्विति । गुणस्यापि प्राधान्य [7]प्रधानस्यापि गुणत्व विपर्यय ।
अपिशब्दाद[8]नवस्थितिरपि । एव न्यायक्रमे स्थिते[9]ऽपि विशेषोऽन्योऽस्या प्रयोजक
इत्याह—तत्रापीत्यादि । अतिशयोक्तिरपि[10] न[11] साकल्येन अस्या मूलमित्यत आह—
सा चेत्यादि । कार्यकारण[12]प्रतिनियमविपर्ययोऽत्र तुल्यकालता न तु कार्यस्य पूर्वकालता[13]
सहार्थत्वात् । अभेदाध्यवसायस्तु[14] द्विधा भवतीत्याह—अभेदाध्यवसायश्चेत्यादि । [15]तेनेय
त्रिविधोपक्षिप्ता । वैचित्र्यान्तरमुपक्षिपति—साहित्य[16] [17] चात्रेत्यादि । कर्तृकर्मादि
साहित्यनिबन्धनेनापि प्रभेदेन प्रथत[18] इति यावद् ।

क्रमेणोदाहरणानि । भवदपराधैरिति—अत्रापराधाना तृतीयान्तत्वाद्गु[19]णता ।
सन्तापस्य[20] प्रथमान्तत्वात्प्रधानता । अतो गुणप्रधानभाव[21] निबन्ध[22]नैवात्र भेदप्रधानता,
न[23] पुनर्वृद्धिक्रियानिबन्धना । स च गुणप्रधानभाव [24] सहार्थ[25]प्रयुक्त । द्वयाश्च प्राकर-
णिकत्वादुपमानोपमेयभावो वैवक्षिक· । अपराधाना च तृतीयान्त[26]त्वात् विशेषणाना
मुपमान[27]त्व नियतमपराधा यथा वर्धन्त[28] इति । सन्तापस्य तु प्रधानत्वादुपमेयत्व सन्ताप
स्तथा वर्धत[29] इति । स चाय गुणप्रधानभाव शाब्द । अर्थं व्यपेक्ष्य तु[30] सन्ताप एव
(इव) अपराधा वर्धन्त इत्यपि[31] प्राप्ते । न्याय[32]क्रमोऽयं उदाहरणान्तरेष्वपि योजनीय ।

---

1 A omits क A's alt C कत्वे तरात्तेन 2 A F H आदिना 3 C omits नु 4 F H अन्तत्वेन 5 A's alt. शब्दाश्चेति 6 D शाब्द् E शाब्द 7 D प्राधान्य स्या 8 E दाद्ययाव 9 A C F H स्थितिविशेषोऽन्यस्या 10 H अपि अभेदेन 11 Omitted in A C F 12 A's alt C ण विप्रति 13 A's alt तात्पर्यस्य पूर्वकालस C तात्वव्यस्य पूर्वकाल स 14 D सायो द्वि 15 All excpet E. omit ते 16 C. हित्य 17 A's alt. C इत्यत्रे 18 C प्रथत 19 C अगुणता E गुणत्वम् 20 A E. H स्य प्रधानत्वात् प्रथ A's alt C स्य अप्रधानत्वात् प्रथमान्त । अता 21 D भावि 22 D बन्धेनैव C बन्धनेनैव 23 Omitted in D 24. D भावप्रयुक्तःहार्थ 25 A C अथ युक्त व द्व 26 D तत्वा 27 A's alt C उपमेयत्व 28 A C वतन्त 29 D वर्धन्त 30 Omitted in C 31 A C F इति प्रा 32. D न्याय

अत्र अपराधानां सन्तापं प्रति हेतुत्वेऽपि तुल्यकालत्वेनोपनिबन्धः। श्लेषभित्तिकाभेदाध्यवसायरूपा यथा—

अस्तं भास्वान्प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि।

अत्रास्तंगमनं श्लिष्टम्, अस्तमित्यस्योभयार्थत्वात्। तदन्यथारूपा यथा—

कुमुददलैः सह संप्रति विघटन्ते चक्रवाकमिथुनानि।

अत्र विघटनं सबन्धिभेदाद्भिन्नं न तु श्लिष्टम्। एतद्विशेषपरिहारेण सहोक्तिमात्रं नालङ्कारः। यथा—

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः॥

इत्यादौ। एतान्येव कर्तृसाहित्ये उदाहरणानि। कर्मसाहित्ये यथा—

द्युजनो मृत्युना सार्धं यस्याजौ तारकामये।
चक्रे चक्राभिधानेन प्रेष्येणाप्तमनोरथः॥

अत्र करोतिक्रियापेक्षया द्युजनस्य मृत्योश्च कर्मत्वम्। इयं च मालयापि भवन्ती दृश्यते। यथा—

---

अत्र कार्यकारणसमकालत्व[1]लक्षणातिशयोक्तिमूलमिति दर्शयति—अत्रापराधाना-मित्यादि।

अस्तं भास्वानिति—संह्रियन्ता[2] विप्रकीर्णानि[3] एकीक्रियन्तामित्यर्थं अत्र श्लेषभित्तिकाभेदाध्यवसायरूपा[4] मूलमिति दर्श[5]यति—अत्रास्तंगमनमित्यादि। अस्तम्[6] एकदा गिरिः[7] अन्यदा स्थमाद इत्युभयार्थत्वम्।

कुमुददलैरिति—अत्र पुनः अ[8]श्लेषभित्तिकाभेदाध्यवसायरूप[9]मूलमिति दर्शयति—अत्र विघटनमित्यादि। एवमतिशयोक्तिमूलत्वाद्विलक्षणो यो विशेषः तदभावे सहोक्तिमात्र नालङ्कार इति व्युत्पादयति—एतद्विशेषेति। [10]प्रत्युदाहरति—अनेन सार्धमिति। कर्तृसाहित्यलक्षण वैचित्र्यमध्ये[11]ऽत्रैव दर्शितमित्याह—एतान्येवेति। एषु हि सन्तापापरा-धादि [12]कर्तृसाहित्य[13]म्—द्युजन इति। द्युजना देवाः। द्युजनस्य मृत्युना सह मनोरथा-वाप्ति दैत्यवलक्षय। अत्र कर्मसाहित्य दर्शयति—अत्र करोतिक्रियेत्यादि। द्युजन[14]मृत्योः प्राप्तिक्रियापेक्षया कर्तृत्वेऽपि तस्योपसर्जनत्वात् नेह कर्तृसाहित्यम्। या तु (चक्र[15]

1. A. C. omit त्व 2. E. इति वि 3. C. कीर्णानि स्थितान्यमनाहृत (P. 100)
4. A. F. रूप 5 A. ति। अत्र विघटन 6. D. E. अस्त 7. D. गिरि 8. D. omits अ 9. A. E. F. H. I. रूपा 10 D. तत्र प्र E. अत्र प्रत्यु 11. E. omits अपि 12. A. F कर्म 13 Except F. all read यमपुन 14. A. मृत्यो: 15. A. C. F. H. I. चक्रतृता प्र D. चात्र कर्तृता प्र E. चक्र कर्तृतात्र

उत्क्षिप्तं सह कौशिकस्य पुलकैः सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम् ।
वैदेह्या मनसा समं च सहसाकृष्टं ततो भार्गव-
प्रौढाहंकृतिकन्दलेन च समं भग्नं तदैशं धनुः ॥

सहोक्तिप्रतिभटभूतां विनोक्तिं लक्षयति—

**विना कश्चिदन्यस्य सदसत्त्वाभावो विनोक्तिः ॥३०॥**

सत्त्वस्य शोभनत्वस्याभावोऽशोभनत्वम् । एवमसत्त्वस्याशोभनत्व-

---

इति) प्रधानभूता करोतिक्रिया तदपेक्षया कर्मत्वा[1]त्कर्मसाहित्यमेतदिति यावत् । एव करणादिसाहित्य[2]वैचित्र्यमुन्नेयम्[3] ।

अथ पुनर्वैचित्र्यायाह—इयं चेति । [4]उत्क्षिप्तमिति । [5]धनुष उत्क्षेप [6]ज्याबन्ध मद्धट्ट[7]नम् । आस्फालनमाकर्ष [8]। शिलीमुखमोज इत्यादि क्रमिकाणि धा[9]नुष्यकर्माणि । तत्रा[10]कर्षण[11]भावान्त परिपण[12]नात्तावन्त्येवोपवर्णितानि । तत्रातिवत्सलस्य कौशिकस्य पुलकाना धनुरुत्क्षेपसम[13]समयमुत्क्षेप , मत्सरग्रस्तत्वात् उत्क्षेपमात्रा[14]परितोषिताना भूपाना धनुर्नति(सम)समय मुखनति[15] । परिपणिताकर्षणस्य जनकस्य [16]नत्यन्त सशयानु-वृत्ते । ज्यास्फालनसमसमय संशयबुद्धयास्फालनम् । वैदेह्या पुन परिपणनमिद्धयन्त्या[17] मनाकृष्टमन[18]स्समाकर्ष[19]सम[20]सम(य[21]) म(न[22])समाकर्ष[23] । भार्गवाहङ्कृति-कन्दलस्य तु धनुर्भङ्गान्तमभग्न[24]स्य भङ्गसमसमय भङ्ग[25]श्रीमता रामचन्द्रेणाकारीति समन्वयात् कर्मसाहित्यमिह मालात्वेनावतिष्ठते । एवमन्यदपि मालात्वेन ज्ञेयम् ।

गुणप्रधानभावो य[26] शाब्दत्वेन भिदोत्कटा ।
मश्रितातिशयोक्ति च[27] महोक्तिस्समयोर्मता ॥

अथ विनोक्त्य[28] सङ्गतिमाह —[29]सहोक्तिप्रतिभटेत्यादि —प्रतिभटभूता प्रतियोगि भूताम् । तत्र सूत्रम्—विना[30] [31]कश्चिदन्यस्य[32]सदसत्त्वाभावो विनोक्तिः । व्याचष्टे—सत्त्वस्येत्या(दि[33]) । (व्य[34]त्ययेनाभावशब्दार्थौ) प्रत्येकमभिसम्ब[35]ध्येते । शोभनत्वा-

---

1. A D कर्मसाहित्याकर्म 2. A F. त्प्रमुखे 3 A F उन्नयम् । इय 4 A C D. F. H I उपक्षिप्त 5. D उद्धनु 6 E. प. प्रेजाज्या 7. A. F घट्ट 8 A. F. आकर्षणम् 9 A धनु 10 D अत्र 11. D omits म 12. A. पयात्ता 13 D समयम 14. D. मात्रप 15 E. नति 16 D नत्य 17 A. F मिद्धयर्थं A's alt. C. पणनेन मिद्धान्त 18 A C E. F H I मनसम्म 19 A C F कर्षणम 20 D. समम्य नुम्समा 21. All mss. ममयमन 22. All mss मनमम्नदा 23 A C. कर्षण भा 24 C. भग्नस D. मनुभग्न 25 C. भङ्ग यिमता 25 A. C F. यत्यत्नेम 27. Omitted in A. C, D F H I. 28 A C. F. नर्थव 29 F. सहेति 30 F. विनेति 31. A. D F H किंचि 32 A C. F. H. सदसत्त्वामा 33 All mss दि यव्यय 34 A. C D H I व्ययाभाव शब्दा थर्थौ B E F. व्ययमभावशब्दा अर्थौ 35 A C. F. H बध्यते

इत्यादौ विनोक्तिरेव। तुहिनांशुदर्शनं विना नलिनीजन्मनोऽशोभनत्वप्रतीतेः। इय च परस्परविनोक्तिभङ्ग्या चमत्कारातिशयकृत्। यथोदाहृते विपये। द्वितीया यथा—

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः।
अमृतद्युतिसुन्दराशयोऽयं सुहृदा तेन विना नरेन्द्रसूनुः॥

अत्राशोभनत्वाभावः शोभनपदार्थप्रक्षेपभङ्ग्योक्तः। सैषा द्विधा विनोक्तिः।

*अधुना विशेषणविच्छित्त्याश्रयेणालङ्कारद्वयमुच्यते। तत्रादौ विशेषणसाम्यावष्टम्भेन समासोक्तिमाह—*

---

*अत्र[1] तुहिनांशुदर्शनं विना नलिनीजन्म न शोभनमिति प्रतीयते। अतो विनोक्तिरियम्। विनाशब्दानुपादाने त्वार्थीति विशेषः[4]। तदिदमभिसन्धायाह—इत्यादौ विनोक्तिरेवेत्यादि[5]। अत्र च[6] हेतुहेतुमद्भावव्यत्ययो विनोक्तेरेव विच्छित्तिविशेषाधायक[8] न पुनरलङ्कारान्तरमित्याह—इय च परस्परेत्यादि। उदाहृतविषय इति। निरर्थकं[9] जन्मेत्ययमुदाहृतो विषयः। मृगलोचनयेति। लोके हि मृगलोचना[10] विना [11]विचित्रव्यवहारप्रतिभाप्रागल्भ्यं नास्ति सुहृदा विना च[12] सुन्दराशयत्वम्। अस्य तु नरेन्द्रसूनोर्न तथेति श्लोकार्थः। अशोभनत्वा[13]भावं दर्शयति—[14]अत्राशोभन[15]त्वाभावादित्यादि। [16]प्रतिभाप्रागल्भ्यं सुन्दराशयत्व[17] च[18] शोभनपदार्थौ। निगमयति—सैषा द्विधेति।

सदसत्त्वनिवृत्ति[19]श्चेदेकनिवृत्त्या[20]ऽन्यस्य वर्ण्यते।
तदा द्विधा विनोक्ति[21]स्स्याद्वि[22]धिरत्र फलं भवेत्॥

अथ[23] विशेषणविच्छित्तिमूलौ[24] समासोक्तिपरिकरौ प्रस्तौति—अधुना

1. H अत्र किं क्रियतामित्यर्थः। अथ पुनर्वैचित्र्यमाह—इय चेत् पि मिन्द्रमिति अप्रस्तुतस्य गम्यत्वे (समासोक्ति P 103) 2 All except E. हिनरमिद 3 C शब्दानुपादा D शब्दोपा 4. A. C H शेष दिदम 5 H आदि। सदसत्र 6 Omitted in A and C. 7. A C नोक्तिरेव 8 A धायक न 9 A कमनुजन्मे 10 C लोचना 11 A C. E. F omit वि 12 Omitted in A C F 13 C सत्वा 14 A. C F. अत्र शो 15 Except E all read भनाभाव 16 A C F प्रतीता प्रा 17. A C E शयत्वं 18 A. C. F. अशोभ 19 H निवृ 20 E वृत्त्यान्य 21. A F. I विधा 22 Except H all read द्विधात्र 23 A. स पूर्वोक्तविच्छि C अथ अधुना 24 A मूलौ अधुना।

* After अत्र A C repeat the passage क्रियतामित्यर्थः। upto वैदग्ध्यं पुनः under समासोक्ति (pp 99-100), then jumps to 'गम्यत्वे यदि विशेष्यस्यापि' etc upto इत्यस्यविद्यामित्यपम्, a discussion occurring under Samāsokti (pp 103—104) and after this इत्ययम् comes back to Vinokti as इत्ययम्। अथ समासोक्तिः। तुहिनांशु

विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः ॥२१॥

इह प्रस्तुताप्रस्तुतानां क्वचिद्वाच्यत्वं क्वचिद्गम्यत्वमिति द्वैविध्यम्। वाच्यत्वं च श्लेषनिर्देशभङ्ग्या पृथगुपादानेन चेत्यपि द्वैविध्यम्। एतद्द्विभेदमपि श्लेषालङ्कारस्य विषयः। गम्यत्वं तु प्रस्तुतनिष्ठमप्रस्तुतप्रशंसाविषयः, अप्रस्तुतनिष्ठं तु समासोक्तिविषयः। तत्र च निमित्तं विशेषणसाम्यम्।

---

विशेषणेति[1]। विशेषणं विच्छित्तिश्च[2] द्विरूपा[3] साम्यं साभिप्रायता च। साम्ये समासोक्तिमधिकरोति—तत्रावावित्यादि। तत्र सूत्रम्। विशेषणसाम्यादप्रस्तुतस्य गम्यत्वे समासोक्तिः। यत्र[4] विशेष्यांशे प्रकृतमात्रपरता विशेषणसाम्यात् पुनरप्रकृतो[5]ऽवगम्यते सा[6] समासेन संक्षेपेण अभिधानात् समासोक्तिः। तदेतद्व्याचिख्यासुर्विषयविभागायाह—इह प्रस्तुतेत्यादि। क्वचिद्वाच्यत्वम्[7]। उभयेषामिति शेषः। क्वचिद्गम्यत्वं, [8]एकतरपामिति शेषः। [9]श्लेषनिर्देशभङ्ग्येति। विशेषणविशेष्यांशयोः श्लेषोपनिबन्धने[10]नेत्यर्थः[11]। पृथगुपादानेन चेति। विशेषणांशे श्लेषमुपनिबद्ध्य विशेष्यांशे पृथक् शब्दोपादानेनेत्यर्थः। एतद्द्विभेदमपि वाच्यत्वं[12] श्लेषालङ्कारस्य विषयः। यदा पुनर्गम्यत्वं प्रस्तुतविषयं[13] विशेषणसाम्यात् तदानीम[14]प्रस्तुतप्रशंसा, यदा[15]त्वप्रस्तुतविषयं तदा समासोक्तिरिति[16] विवेकः। अप्रस्तुतस्य गम्यत्वे यदि विशेष्यस्यापि साम्यं तदा[17] किं स्यादित्यत आह—विशेष्यस्यापि साम्ये श्लेषप्राप्तेरिति। श्लेषमूलध्वनिप्राप्तेरिति यावत्। ननु श्लेषालङ्कारत्व[18]प्राप्तिः किं न स्यात्। उच्यते। अत्रेयं[19] चर्चा। समासोक्त्यलङ्कारः श्लेषालङ्कारः शब्दशक्तिमूलध्वनिश्चेति त्रिषु विषयेष्व[20]प्यस्ति श्लिष्टपदो[21]पनिबन्धः। तत्र यदा[22] श्लेषः तदार्थ[23]द्वयस्य नियमेन वाच्यता। वाच्यत्वं चैवं संभवति—यदार्थौ द्वावपि प्राकरणिकौ स्तः[24] अप्राकरणिकौ वा तदा विशेषणविशेष्यांशयोर्द्वयोरपि [25]श्लिष्टपदोपनिबन्धात् श्लेषालङ्कारः। [26]अभिधाया अनियन्त्रणात्[27] द्वावप्यर्थौ वाच्यौ। अथ यदैकस्य[28] प्राकरणिकत्वमितरस्य अप्राकरणिकत्वं तदा विशेष्यांशे पृथक् शब्दोपादानबलादेव श्लेषालङ्कारः। यदि विशेष्यांशेऽपि श्लिष्टपदोपनिबन्धः तदा प्रकरण[29]नियन्त्रितायाः[30] अभिधायाः प्राकरणिकार्थं एवोपक्षयाद[31]प्राकरणिकार्थावगतिर्व्यञ्जनस्यैव विषयः स्यात्। [32]यद

---

1 F विशेषेति 2 C त्ति द्विरू 3 D रूप 4 Omitted in A C F H 5 A C H तो गम्य 6. A C H स 7 D तम् एकतरेषा 8 A C F H एकत्र तेषा F एकत्र गतमिति 9 A E.F H शेष 10 A C D F H I बन्धनेय 11 F अर्थः। एतद्द्विभे 12 A C F H यत्वे 13 A F H विषय 14 D मपि प्राकृतप्रश 15 A D H यदा प्र 16 A C H इति। समासोक्तिरूप (P 101) 17 D किं कि 18 H omits त्व 19 D E. F H अथ चर्चं 20 अपि omitted in D E. 21 A पद्याप 22. A C D यदा तावत् श्ले 23 D अर्थलयनि 24 A C स्त तदा 25 A. C F श्लिष्ट 26 H अथ अभि 27 D धादाभव्य 28. A C. D F H I एकदेशस्य 29 F प्राकरणिकनि 30 A's alt C यन्त्रिकाया 31 A D F क्षया अप्रा 32 D E. अथ य

**विशेष्यस्यापि साम्ये श्लेषप्राप्तेः। विशेषणसाम्यवशाद्धि प्रतीयमानमप्रस्तुत प्रस्तुतावच्छेदकत्वेन प्रतीयते। अवच्छेदकत्वाच्च व्यवहारसमारोपो न तु रूपसमारोप.। रूपसमारोपे त्ववच्छादितत्वेन प्रकृतस्य तद्रूपरूपित्वाद्रूपकमेव।**

समासोक्तिस्तदा विशेषणांशे अर्थद्वयप्रतिपादकशब्दोपनिबन्ध विशेष्यांशे तु [1]प्राक-रणिकार्थमात्रपरता। तदा विशेषण[2]साम्यादप्रस्तुतस्य गम्यत्वादुक्तलक्षणा[3] समासोक्ति। यदा पुन प्राकरणिकाप्राकरणिकयो विशेषणविशेष्यांशे[4]ऽपि श्लिष्टता तदा सावत्र समासोक्ति विशेषणमात्रसाम्यलक्षणा[5] यत श्लेषालङ्कारत्व[6]प्राप्तिरपि। कथम् [7] तत्रार्थद्वयस्य वाच्यत्वैव लक्षण यत, न ह्यत्र[8] द्वयोर्वाच्यतोपपत्ति[8] प्रकरणपक्षपातिन्या अभिधाया अप्राकरणिकेऽर्थे स्पर्शाभावात् अप्राकरणिकस्य[9] समन्वयमनन्तर[10]प्रतीति-करत्वात् शब्दशक्तिमूलस्य ध्वन स्वेनैव विषयग्रासप्रमङ्गाच्च। विविक्तोऽय[11] घण्टापथ ध्वनिनिदर्शनरहस्यविदामित्यलम्।

अथ समासोक्तिरूपकयो वैधर्म्यं विवेचयति—विशेषणसाम्य[12]वशादित्या दिना[13]। हिर्हेतौ। यतो विशेषणसाम्यादप्रस्तुतोऽर्थ प्रतीयते, अतो विशेष्यांशे[14] सस्पर्शा भावाद्विशेष्य प्रकृतार्थं[15] न[16] स्वेन रूपेण [1] रूपयन्त वर्तुमीष्टे किन्तु विशेषणांशप्रतीत [18]त्वव्यवहार विशेषणांशप्रतीते प्रकृतार्थव्यवहारे[19]ऽवच्छेदक[20]त्वेन समारोपयति। तदिद-माह—प्रस्तुता[21]वच्छेदकत्वेन प्रतीयत इति[22]। अवच्छेदकत्वेन[23] विशेषकत्वेन। यत इत्थ मवच्छेदकत्वमतोऽस्ति रूपकाद्वैधर्म्यमित्याह—अवच्छेदकत्वाच्चेत्यादि। व्यवहारसमा-रोप न तु[24] रूपसमारोप[25]। ननु[26] यदा रूपसमारोप तदा किं स्यादित्यत आह— रूपसमारोपे[27]त्यादि। अवच्छा[28]दितत्वेन[29] क्रोडीकृतत्वेन। [30]प्रकृतरूपरूपितत्वात् [31]अप्र कृतरूपेण उपरञ्जितत्वात् रूपकमेव। विवेचित चैतद्यथायोग परिणामालङ्कृतौ। अत्रा न्तरश्लोका — अप्रस्तुत प्रतीत[32] चेद्भेदकत्वासंकसा[33]म्यत [34]।

व्यवहार[35] समा[36]रोप्य[37] प्र[38]स्तुते स्यान्नवस्यय[39]॥

---

1 A C F. H अप्राक 2 D repeats विशेषण 3 C लक्षणा 4 A C F. अंशे श्लि 5 A C F H. क्षणाया श्लेषे 6 A C H omit त्व 7 A C F H अन्यत्र 8 C पक्षि प्रक 9 E कस्य च 10 A F. प्रतीति 11 A's alt विच्छित्तितोऽय तु पणत्व निदर्शन C विच्छित्तितोऽय निदर्श 12 A C F H बलादि 13 A ना। त्याहितौ यदा यतो C आदि इत्यर्हितौ यतो F आदिना। यतो H आदिना अभिहितौ अतो विशेषण 14 C अशेष्वप्रकृ 15 A C F G H अर्थ 16 Omitted in C 17 C न रूप 18 C मन्य 19 E H परिच्छेद 20 C कत्व समा 21 D प्रकृता 22 A C D F. repeat अवच्छेदकत्वेन प्रतीयत इति 23 C त्वेन यत 24 A.C F H न स्वरूप 25 H रोप विशेषणांश See below the Karika under Samāsokti. 26 A. नन्वदयारूप तदा C नन्व या रूपस्यादि 27 F रोपेत्विया 28 C अवस्यादित्त 29 D त्वेन प्रकृत 30 A C प्राकृत 31 A C F प्रकृत 32 D प्रतीत 33 C सामान्य तद्वच 34 D यत्र 35 C हार 36 F रसमा 37 C आरोप 38 D. प्रकृतेऽप्यभव 39 A C. F. अपि

तच्च विशेषणसाम्यं श्लिष्टतया साधारण्येनौपम्यगर्भत्वेन च त्रिधा भवति। तत्र श्लिष्टतया यथा—

> उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम्।
> यथा समस्तं तिमिरांशुकं तया पुरोऽपि रागाद्गलितं न लक्षितम्॥

अत्र निशाशशिनोः श्लिष्टविशेषणमहिम्ना नायकव्यवहारप्रतीतिः। अपरित्यक्तस्वरूपयोर्निशाशशिनोर्नायकताख्यधर्मविशिष्टयोः प्रतीतेः। साधारण्येन यथा—

---

> तेना[1]प्रस्तुतवृत्तान्तारोपेण प्रस्तुतं स्वयम्।
> सक्षेपेणोच्यते तस्मात्समासोक्तिरियं मता[2]॥
> स्याद्विशेष्यांश[3]साम्यं चेत्प्रस्तुताकाररूपितम्।
> भवेदप्रस्तुतं भेद्यं रूपकालङ्कृतिस्तदा॥ इति॥

अस्या विशेषप्रपञ्चनार्थमाह—तच्च विशेषणसाम्यमित्यादि। साधारण्यमुभयत्र प्रवृत्तिनिमित्तसंभवः। औपम्यगर्भत्व[4] तद्गर्भसमासा[5]श्रयणात्। इत्थं तद्वि[6]शेषणसाम्यं त्रिधा भवतीत्यर्थः। अतस्समासोक्तिरपि त्रिधा।

क्रमेणोदाहरणानि—उपोढरागेणेति। रागः सन्ध्यारुणिमा कामश्च। तारके[7]-त्यतो नक्षत्र[8]दृगन्तर्मण्डलयोः प्रतिपत्ति[9]। मुखं प्रारम्भो वक्त्रं च। तिमिरमंशुकमिव तिमिरसदृशा[10]मंशुकं च। लक्षणं योजयितुमाह—अत्र निशाशशिनोरित्यादि। नायकश्च नायिका च नायकौ। "पुमान्स्त्रिया" इत्येकशेषः। उपोढरागत्वादिश्लिष्ट[11]विशेषणमहिम्ना खल्वत्र निशाशशिनोः नायकव्यवहार[12]विशिष्टौ प्रती[13]येते। ननु[14] कथमत्र [15]निशापते व्यवहारसमारोपो न रूपसमारोप इत्यत आह—अप[16]रित्यक्तेत्यादि। यदि[17] रूपसमारोपस्तदा अप्र[18]स्तौ रूपकन्यायेन स्वं स्वं रूप[19]मव[20]च्छादित[21]त्वेन परित्यज्य मद[22]वच्छादकमुपमान[23]रूपं ताद्रूप्य[24]मुपगृह्णाति। इह पुनर्विशेष्यांशे निष्प्रतियोगिकतया[25] ज्ञातयोरत एवा[26]परित्यक्तस्व[27]रूपयोः निशाशशिनोर्विशेषणसाम्यावगमितेन नायकत्व-धर्मेण विशिष्टतया प्रतीतेः। अतो व्यवहारसमारोप एव[28]।

---

1 A. C अनेना 2 A C. सन 3 A C F. तद्विशेषणांश 4 A. C F. त्व पेद्गर्भं 5 A. C F omit सा 6 D E. अयद्वि 7. A. C F इत्यातो 8. D. दृतमदृ 9. C त्रिधा प्रति 10 A. C F. सदृश्य च 11. D. श्लिष्ट C. श्लिष्टमहि 12 D हारशिष्टे 13 D. प्रतीयते। 14 A's alt. न इत्यं 15 A C F निशा 16. C omits अ 17. Omitted in A. C F. 18. A's alt अहृत D अहृते 19 Except E all read स्वकं 20 A's alt उत्पादृश्येन C. उत्पादक [illegible] न परि 21 D आदिश्येन 22. A's alt. C मयवस्यादिन 23. C. omits न 24 A C. तद्रूपमुपमानीहृत इह 25 C. omits न 26 D. एव परि 27. All except C read स्वस्वरूप 28 A. एवं

तन्वी मनोरमा बाला लोलाक्षी पुष्पहासिनी ।
विकासमेति सुभग ! भवद्दर्शनमात्रतः ।।

अत्र तनुत्वेत्यादिविशेषणसाम्याल्लोलाक्ष्या लताव्यवहारप्रतीतिः । तत्र च लतैकगामिविकासाख्यधर्मसमारोपः कारणम् । अन्यथा विशेषणसाम्यमात्रेण नियतस्य लताव्यवहारस्याप्रतीतेः । विकासस्तु प्रकृते उपचरितो ज्ञेयः । एवं च कार्यसमारोपेऽपि ज्ञेयम् । इयं च समासोक्तिः पूर्वापेक्षया अस्फुटा । औपम्यगर्भत्वेन यथा—

दन्तप्रभापुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन सुवेषा हरिणेक्षणा ।।

---

तन्वीति । पुष्पम् आर्त्तवं रजः, प्रसूनं च । इह तनुत्वादीना विशेषणानामुभयत्रैकार्थतासाम्यं न तु [1]श्लिष्टता । तदेतदाह—अत्र तनुत्वेत्यादि । ननु तनुत्वादिधर्मसाम्यात् कथं लता[2]व्यवहारप्रतीतिरित्यत आह—तत्र च लतै[3]केत्यादि । विका[4]सो हि लताया एव तत्समारोपो लोलाक्ष्या[5] लताव्यवहारप्रतीतेः [6]कारणम् । ननु विकासस्य लतैकगामित्वात्कथं साधारण्यमित्यत आह—विकासस्त्वित्यादि । यथैवं विशेषणसाधारण्यं धर्मसमारोपश्च व्यवहारसमारोपस्य कारणं[7] तथा कार्यसमारो[8]पोऽपीति व्युत्पादयितुमाह—एवं च कार्येत्यादि । कार्यसमारोपनिबन्धनो हि[9] भेद इह धर्मसमारोपनीत्या[10] सुज्ञानः[11] उपरि च ग्रन्थकृता [12]पृथक्प्रकाशीकरिष्यति । अत इह नोदाहृतः । एवमादौ [13]धर्मकार्ययोरन्य[14]तरारोपमन्तरेण अप्रकृतार्थो नावगम्यते । प्रकरणनियन्त्रिताया अभिधायाः[15] प्राकरणिकार्थ एवो[16]पक्षयात् । अतो धर्मकार्ययोरन्यतरारोप एव व्यञ्जनव्यापारोत्था[17]पनेनाप्रकृतार्थ विगति[18]हेतुः । इतो[19] विशेषणसाधारण्यनिबन्धना समासोक्तिर्न्याय[20]विदामेव विभक्तविषया । अस्फुटत्वात्तदिदमभिसन्धायाह—इयञ्चेत्यादि । पूर्वापेक्षया श्लिष्टविशेषणनिबन्धना[21] समासोक्तिः पूर्वा [22]तदपेक्षयेत्यर्थः ।

दन्तप्रभा पुष्पचिते[23]ति । अत्रा[24]नपेक्षिताख्याने[25] वाक्ये श्रवण[26] समनन्तरमेव दन्तप्रभापुष्पचितत्वादिना हेतुना हरिणेक्षणायाः सुवेषता प्रतीयते । [27]अतस्तदा सुवेषत्वलक्षण[28]कार्यवशाद्विशेषणानां[29] दन्तप्रभा.[30]पुष्पाणी[31]वेत्युपमासमासपरत्वम् । अथ दन्त-

---

1. A. विश्लिष्ट C. विशिष्ट D. शिष्ट 2. D. लता प्रती 3. F. लतेत्यादि 4. A. C. F. एका हि 5. D. लक्ष्यात् 6. A's alt. C. कारणेन विका 7. A. C. F. कारणतया कार्य 8. E. omits पो 9. C. हि इह 10. C. नित्या 11. A's alt. सुज्ञातः C. संज्ञातः 12. A's alt. प्रकाशीक 13. D. E. आदौ हि 14. D. अन्यसमारोप 15. A's alt. omits या 16. A's alt. एवकोप क्षयापेक्षया C. एकोपक्ष्या पक्षया 17. C. omits प 18. C. D. गतिः 19. C. अतो 20. A's alt. C. सिद्धामेव 21. D. E. ना पूर्वा 22. A. C. F. पूर्वसुव्येक्षितेत्य 23. A. पस्फुरिते 24. A. C. omit न 25. C. ख्याते 26. D. श्रवणानन्त 27. A. C. omit अतः 28. A. C. F. लक्षणे D. लक्षयाः 29. A. C. F. विशेषणं 30. A. F. प्रभा पु 31. C. पुष्पाणि चेत्यु

अत्र दन्तप्रभा पुष्पाणीवेति सुवेषत्ववशादुपमागर्भत्वेन कृते समासे पश्चाद्दन्तप्रभासदृशैः पुष्पैश्चितेति समासान्तराश्रयणेन समानविशेषणमाहात्म्याल्लताव्यवहारप्रतीतिः । अत्रैव "परीता हरिणेक्षणा" इति पाठे उपमारूपकसाधकबाधकाभावात्सङ्करसमाश्रयेण कृते योजने पश्चात्पूर्ववत्समासान्तरमहिम्ना लताप्रतीतिर्ज्ञेया । रूपकगर्भत्वेन तु समासान्तराश्रयणात्समानविशेषणत्वं भवदपि न समासोक्तेः प्रयोजकम् । एकदेशविवर्तिरूपकमुखेनैवार्थान्तरप्रतीतेस्तस्या वैयर्थ्यात् । न च प्राङ्निर्दशितोपमासङ्करविषय एव

---

प्रभासदृशैः पुष्पैरिति मध्यमपदलोपि[1]समासान्तरप्रत्यायितैः पुष्पपल्लवादिभिः विशेषणसाम्यदशाया लताव्यवहारप्रतीति । तदेतदवबोधयति—अत्र दन्तप्रभा इत्यादिना । लताव्यवहारप्रतीतिरिति वदता रूपकसमासस्या[2]प्राप्तिरासूचिता । व्यवहारसमारोपे समासोक्तिः । रूपसमारोपे तु रूपकमिति प्रतिपादितम् यत अत प्रतीतोऽपि रूपकसमास इह न्यायतो न प्राप्नोति । नन्वेवमादौ प्रागुपमासमाससमाश्रयणनिमित्त यदि सुवेषत्वादिना[3] नोपात्त तदा किं स्यादित्यत आह—अत्रैव [4]परीतेत्यादिना । परीता केश[5]पाशालिवृन्देन परिगता । इह[6] दन्तप्रभा पुष्पाणी[7]वेत्यादिना किमुपमा[8]समास, उत[10] दन्तप्रभा एव पुष्पाणी[11]त्यादिको रूपकसमास इति सन्देह, उपमारूपकयो साधकबाधकाभावात् । अत सन्देहरूप[12]सङ्करसमाश्रयेण पूर्वं योजना । न[13] च[14] मन्तव्य[15] समास [16] सन्देहो[17]पपन्न इति, सन्देहस्य कविप्रतिभोत्था[18]पितस्य विच्छित्तिरूपत्वात् । अतस्सङ्करसमाश्रयेणादौ[19] योजना । अथ सन्देहोपशमकाले[20] दन्तप्रभासदृशैः पुष्पैरित्यादि[21] पूर्ववदेव[22] मध्यमपदलोप[23]समास.[24] लताव्यवहारप्रतीतौ[25] समासोक्तावेव विश्रान्तिः । इत्थ च सति उपमा[26]समासगर्भतया सङ्करसमासगर्भतया च समासोक्तिभेदोऽय द्विधा दर्शितो मन्तव्य । ननु केवलरूपक[27]समासाश्रये[28]णापि समासोक्तिभेदोऽय किं नेष्यत इत्यत आह—रूपकगर्भत्वेन त्विति । प्राक्[29] रूपकसमासे अय [30]तद्गर्भतयोपमासमासाश्रये यद्यपि विशेषणसाम्य भवत्येव[31], [32]तथापि न तत् समासोक्ते [33] प्रयोजकम्[34] । कुत ? एकदेशविवर्ति[35]मुखेनैव लताव्यवहारप्रतीतौ समासोक्ते वैयर्थ्यात् । ननु[36] उपमासमासे सङ्करसमासे च समासोक्तिवैयर्थ्यं किं न स्यादित्याह—न च प्राङ्निर्दशितेत्यादि ।

---

1. A C लोप 2. D स्याप्तिकासू 3. D E. आदिना उपात्त 4 A. परिते 5 A C. D पाश्पो बृ 6 Omitted in A. C F. 7. D प्रभा. 8. इव omitted in A C. D. F. 9 A. C. उपमा उत 10. C उदन्त 11. D पुष्पाणिको 12. F. पूर्वं 13. Omitted in D. 14 Omitted in C. 15 C. तव्या 16. C समासा 17. All except C. read सन्देहादुपपन्न 18 C प्रतिभोऽर्थापि 19 A F. श्रयणादा 20 D. E. समये 21. D. आदिना 22 All except D. एवास्य म 23 D. E. लोपि 24. All except C समासा 25. A. C. F. प्रतीतेः 26 A C F. उपमासन्देहगर्भतया च समा 27. C omits क 28. A. C. D. E श्रयणोऽपि 29. Omitted in C. 30. A's alt C. तत्तयोपमा 31 C एव च 32 E. G. अथा 33. A. C F. समासोक्ति 34. A C. कतु कुत. 35 A. C वर्तिनोरभावात् 36 D न तु

न्यायः । उपमासङ्करयोरेकदेशविवर्तिनोरभावात् । तच्चैकदेशविवर्तिरूपकमश्लेषेण श्लेषेण च भवतीति द्विविधम् । अश्लिष्टं यथा—

> निरीक्ष्य विद्युन्नयनैः पयोदो मुखं निशायामभिसारिकायाः ।
> धारानिपातैः सह किं नु वान्तश्चन्द्रो मयेत्यार्ततरं ररास ॥

अत्र निरीक्षणानुगुण्याद्विद्युन्नयनैरिति रूपके पयोदस्य द्रष्टृपुरुषनिरूपणमार्ततरं ररासेत्यत्र प्रतीयमानोत्प्रेक्षाया निमित्तत्वं भजते । श्लिष्टं यथा—

> मदनगणनास्थाने लेख्यप्रपञ्चमुदञ्चय—
> न्निव किल बृहत्पत्रन्यस्तद्विरेफमषीलवैः ।
> कुटिललिपिभिः कं कायस्थं न नाम विसूत्रय-
> न्व्यधित विरहिप्राणेष्वायव्ययावधिकं मधुः ॥

---

एष[1] न्यायः समासोक्तिवैयर्थ्यापत्तिलक्षणः । तत्र हेतुमाह—[2]उपमासङ्करयोरेकदेश[3]विवर्तिनोरभावात् । न[4] ह्युपमालङ्कारः सङ्करालङ्कारश्च एकदेशविवर्तित्वेन केनचिदनुशिष्टौ । अतः स्वतन्त्रालङ्कारत्वसमयासान्य[5]बाध[6]क्षमौ[7] । रूपकं तु [8]एकदेशविवर्तितयाऽनुशिष्टमन्यबाध[9]क्षममेव ।

अत एवंविधे विषये रूपक[10]प्राप्तौ[11] समासोक्तेः प्राप्तिरिति सोदाहरणं दर्शयितुमाह—तच्चैकदेशविवर्तीत्यादि । निरीक्ष्य विद्युन्नयनैरि[12]ति । पयोदो विद्युन्नयनैर्निशायामभिसारिका[13]याः मुखं निरीक्ष्य धारानिपा[14]तैः सह चन्द्रो मया वान्त इति धियेवार्ततरं ररासेत्यर्थः । अत्राश्लिष्टम् एकदेशविवर्तिरूपकं समासोक्तेर्नावकाशं ददा[15]तीति दर्शयति—अत्र निरीक्षणेत्यादि । निरीक्षणं हि पुरुषधर्मो न पयोदधर्मः । अतः पुरुषा[16]नुसा[17]रेण योजने विद्युत एव नयनानीति[18] रूपकमेव न पुनरुपमा सङ्करो वा । अतः पयोदे द्रष्टृ-[19]पुरुषरूपणम[20]र्थादिति एकदेशविव[21]र्तिता । तच्चे[22]दमार्ततरं ररासेति प्रतीयमानोत्प्रेक्षाया[23] एव निमित्तं समासोक्ते[24]रप्राप्तिरेवेति भावः ।

मदन[25]गणनेति—पत्राणि[26] दलानि तान्येव पत्राणि तालदलानि । [27]लिपयो रीतयः ता एव लिपयोऽक्षर [28]सन्निवेशाः । कायस्थो देही गणकः । एषु[29] रूप-

---

1. D. एतन्न्यायः 2. D. E. उपमालङ्कार 3. A's alt. वर्तिरूपभा 4. A. C. F. omit हि 5. D. तान्यता 6. C. बाधक 7. A. C. क्षमा 8. D. एकविध 9. D. बाधकक्षमं 10. A. C. F. रूपकव्याप्तिरिति 11. D. E. व्याप्तौ 12. E. रित्यादीति 13. A. C. सारिकामुखं 14. E. संपातैः 15. A. C. ददाती इति E's alt. दिशतीति 16. A. C. पुरुषरूपेण 17. A's alt. F. सरण 18. मीं omitted in D. 19. C. द्रष्ट 20. C. मप्यादि 21. C. विवक्षिता 22. A's alt. C. यच्चेद 23. A. C. F. प्रेक्षायां 24. D. E. उक्तेस्वप्रा 25. A. C. F. गणनेनेति E. गणेनि 26. णि omitted in D. 27. A. C. लिपयोरिति इमाः एव A's alt. वर्णापन्या रीतयः 28. A. C. E. H. विनिवेशाः D. विनिवेशः 29. D. एषु मा (p. 109)

अत्र हि पत्रलिपिकायस्थशब्देषु श्लेषगर्भं रूपकं द्विरेफमषीलवैरित्येतद्रूपकनिमित्तम्। अस्य च प्रचुरः प्रयोगविषय इति न समासोक्तिबुद्धिः कार्या। तदेवं श्लिष्टविशेषणसमुत्थापितैका। साधारणविशेषणसमुत्थापिता तु धर्मकार्यसमारोपाभ्यां द्विभेदा। औपम्यगर्भविशेषणसमुत्थापितोपमा संकरसमासाभ्यां द्विभेदा रूपकसमाश्रयेण तु भेदद्वयमस्या न विषयः। तदेवं पञ्चप्रकारा समासोक्तिः। इत्थं शुद्धकार्यसमारोपेण विशेषणसाम्येनोभयमयत्वेन

णसा[1]मर्थ्यान्म[2]दनो महाराजतया मधु[3]श्च थी[4]करणा[5]ग्रणी[6]त्वेन रूपितः प्रतीयते। तदेत[7]दुपदर्शयति—अत्र हि पत्रलिपीत्यादि। ननु[8]पत्राणी[9]वे[10]त्यादिरुपमा किं न स्यादित्यत आह—द्विरेफमषीत्यादि। मषी[11]योगो हि मषा[12]वसंभव[13]मुपमा[14]समासं बाधित्वा मण[15]कवृत्ते[16]रसंभवस्तदनुसारेण रूपकसमासं साधयतीति यावत्। ननु[17] समासोक्तिप्रस्तावे किं सोदाहरण[18] रूपक[19]भेदप्रदर्शनेनेत्यत आह—अस्य च प्रचुर इत्यादि। अस्य एकदेशविवर्तिरूपकस्य। अत्रावान्तरश्लोकौ—

स्या[20]दौपम्यसमासेन[21] समासोक्ति[22]विनिश्चये[23]। स्यात्सङ्करसमासेन समासस्य तु संशये॥
न रूपकसमासस्य प्राप्तावस्याः प्रवर्तनम्। रूपकादर्थसंसिद्धेरेकदेशविवर्तिनः॥

अतः प्रभेदा[24]न्तरप्र[25]पनाय उक्तभेदान्[26]संचष्टे—तदेवमित्यादि। इयं [27]खलु श्लिष्टात्साधारणादौपम्यगर्भाच्चेति विशेषणवैचित्र्यात्[28] त्रिधोद्दिष्टा। तत्र श्लिष्टाद्विशेषणादेक[29]विधा। साधारणात्तुधर्मसमारोप[30]कार्यसमारोपाभ्यां द्विधा। औपम्यगर्भादपि उपमासमासेन सङ्करसमासेन चेति द्विधा। श्लिष्टाश्लिष्टतया तु रूपकसमासद्वय-[31]मस्या न विषयः। अतः पञ्च प्रकाराः। इत्थं विशेषणसाम्यात्पञ्चप्रकारत्वसिद्धा[32]व-वान्तर[33]विशेषसहितामिमां पुनस्त्रिराशिकतया[34]संचष्टे—इत्थं शुद्धकार्येत्यादिना। कार्यस्य शुद्धत्व नाम [35]निरूपित[36] विशेषणसाम्या[37]संकीर्णता। प्रथमं विशेषणसाम्यनिबन्धनभेदोदयादर्वागित्यर्थः। अत्रैतदा[38]कूतम्—विशेषण[39]साम्यादप्रस्तुतस्य गम्यत्वे हि समासोक्तिः।

1. A. C. समर्थात् 2. A. C. E. र्थ्यात् मतो महा 3. D. मधुत्व 4. C. मीकर 5. D. E. F. H. I. कराम 6. A. गृहीत्वेन (प्रथितेन) 7. A's alt. C. एतद्रूपदर्श 8. Except C. all read. पत्राणि पत्रा 9. A. पत्राणिवे 10. A's alt. वेत्युपमादि किं 11. A's alt. मधुश्रीयोगो C. मधुश्रियो सो 12. C. मषाव 13. D. भवस्थमासं 14. C. उपमासं बा 15. C. गुणावृत्तेरसंभ 16. A's alt. E. वृत्ते संभ 17. D. न तु 18. A. C. हरण E. हरणं किं रूप 19. F. प्रभेद 20. C. स्यादावौप 21. C. समासेकसमा 22. A. उक्ति विनि 23. C. निश्चया 24. C. भेदान्तरा 25. C. मायना 26. D. भेदात् E. भेदा 27. E. F. च खलु 28. D. चित्र्यत्तया E. F. चित्र्यत्रयात् 29. E. देवकवि 30. D. आरोपाभ्यां द्वि A. आरोपककार्य 31. A. C. द्वयस्य न D. द्वयस्या न 32. C. omits ■ 33. D. अन्तरसहि 34. E. च संच 35. C. omits नि 36. All mss. पितचरवि. But चर seems told superfluous. 37. B. E. F. साम्यासं D. साम्यादप्रस्तुत 38. A's alt. C. आकूत 39. A's alt. C. वशात्।

प्रथमं त्रिधा समासोक्तिः। विशेषणसाम्यं च पञ्चप्रकारं निर्णीतम्। सर्वत्र चात्र व्यवहारसमारोप एव जीवितम्। स च लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः, शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः, लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः, शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोप इति चतुर्धा भवति। तदेवं बहुप्रपञ्चा समासोक्तिः। तत्र शुद्धकार्यसमारोपेण यथा—

> विलिखति कुचावुच्चैर्गाढं करोति कचग्रहं
> लिखति ललिते वक्त्रे पत्रावलीमसमञ्जसाम्।
> क्षितिप ! खदिरः श्रोणीबिम्बाद्विकर्षति चांशुकं
> मरुभुवि हठात्त्रस्यन्तीनां तवारिमृगीदृशाम् ॥

---

तच्च विशेषणसाम्यं शुद्धकार्यसमारोपे सत्युपचरितं, यथा विलिखतीत्यादावुदाहरिष्यमाणे[1] पद्ये स[2] एको राशिः, यदा पुनरिदमनु[3]पचरितं तदा पञ्चधोदाहृतम् प्राक् स द्वितीयः। उभयमयत्वे[4] तु तृतीयो राशिः। अनुपचरितविशेषणसाम्यनिबन्धनस्य न्याय[5]निर्भरत्वेन प्राक् प्रदर्शनं पञ्चविधत्वेन[6] कृतमिति। अथ तदेव प्राक् प्रदर्शनमनुस्मारयति—[7]विशेषणसाम्यं चेति। ननु शुद्धकार्यसमारोपे विशेषणसाम्यमुपचरितम्,[8] अन्यदात्व-नुपचरितं अनुगतमेकरूपं[9] तु प्रयोजन[10] नानुपश्याम इत्यत आह—सर्वत्र चात्रेत्यादि। एवकारेण तदेकप्राणता समासोक्ते[11]रभिप्रैति[12]। तस्य चातुर्विध्यं दर्शयति—स च लौकिक इत्यादि। वस्तुजातिगुणादि। अनेन च व्यवहारसमारोपचातुर्विध्येन[13] राशित्रय-मपि प्रत्येकं चतुर्धा[14] प्रयते[15]। अतस्समासोक्तिः प्रपञ्चव[16]तीत्याह—तदेवं[17] बहुप्रपञ्चेति। तत्रा[18]द्यं[19] राशिमुदाजिहीर्षुराह—तत्र शुद्धकार्येति। विलिखतीति[20]। उच्चैर्विलेख[21] (न) (?[22]) गाढं कच[23]ग्रहः[24]पत्रावल्यामसामञ्जस्यमंशुकविकर्षश्चे[25] चेति [26]हठका[27](मु)ककार्यम्। हठा[28]दिति विकर्षण[29]क्रियाविशेषणम्। अत्रोपचरितत्वादप्रस्तुता[30]वगतौ विशेषण-साम्यं[31] नातिबद्ध[32]भरम् अपि तु शुद्धकार्यसमारोप एव इत्याह—अत्र[33] पत्रावलीत्यादि।

---

1. D. E. माणे स 2. Omitted in A. C. F. 3. C. इदमुप 4. E. मयत्वेन 5. A. C. न्याय······निर्भरत्वेनप्राक्······प्रद 6. A. C. त्वेम तदिति 7. D. विशेषणस्येति। विशे 8. D. चरितं अनुग 9. F. रूपं चिन्तप्रयो 10. E, F. प्रयोजकं 11. A. C, उक्तिः 12. A. C. प्रैतीति 13. A. C. D. विध्ये च 14. A's alt. C. चतुर्विधा 15. A's alt. C. प्रदेशे 16. E. G. प्रपञ्चयति C. पञ्चती 17. C. एव 18. A. C. F. तत्राप्या 19. A. C. D. आद्य 20. A. C. omit इति 21. All mss. लेखन 22. A gap of about two letters in all mss. Probably the missing word is कुचयोः 23. C. कुच 24. A. C. ग्रहणं 25. A. C. D. विकर्ष इत्यं ह E. G. विकर्ष 26. A. C. हरकार्मुकं हठा D. हं कार्मुककार्य A's alt. F. हठकार्य 27. All mss. कार्मुक 28. A's alt. C. हरा 29. C. omits ण. 30. C. स्तुता। विशे 31. A's alt. C. साम्यायात्र 32. C. पर F. भरं 33. Omitted in A. C. F.

अत्र पत्रावलीविलेखनादिशुद्धकार्यसमारोपात्खदिरस्य हठकामुकव्यवहारप्रतीतिः । विशेषणसाम्येनोदाहृता । उभयमयत्वेन यथा—

निर्लूनान्यलकानि पाटितमुरः कृत्तोऽधरः खण्डितः
कर्णे रुग्जनिता कृतं च नयने नीलाब्जकान्ते क्षतम् ।
मान्तीनामतिसंभ्रमाकुलपदन्यासं मरौ नीरसैः
किं किं कण्टकिभिः कृतं न तरुभिस्त्वद्वैरिवामभ्रुवाम् ॥

अत्र कण्टकिभिरिति विशेषणसाम्यम् । निर्लूनान्यलकानीत्यादिषु कार्यसमारोपः । व्यवहारसमारोपप्रकारचतुष्टये क्रमेणोदाहरणम् । यथा—

ध्यामालिलिङ्ग मुखमाशु दिशां चुचुम्ब
रुद्धाम्बरां शशिकलामलिखत्करायैः ।

---

खदिरेऽत्यसंभवात् पत्रावलीग्रह * । व्युत्क्रमोक्तानां[1] [2]क्रमस्वारस्यायानुस्मारयति—विशेषणसाम्येनेति । विशेषणसाम्य हि यदा श्लिष्टता[3] तदोभयार्थता । यदा [4]साधारण्य तदोभयत्र[5] प्रवृत्ति[6]निमित्तसमव । [7]यदौपम्यगर्भविशेषणता तदा[8] समासभेद इति । विशेषणसाम्य[9]वशादेव[10] [11]अप्रस्तुतावगतिरिति ज्ञेयम्[12] । अथोभयमयत्वेनोदाहरति—निर्लूना[13]नीति । नीरसं [14] शुष्कं[15]रहृदयैश्च । कण्टकिभि [16]क्षुद्रशकुभिर्च्च घातकजनयोगिभिश्च । उभय[17]मयता योजयति—अत्र [18]कण्टकिभिरिति[19] ।

एषु[20] त्रिषु[21] राशिषु व्यवहारसमारोप[22]वैचित्र्यनिबन्ध[23]नात् भेदानुपदर्शयितुकाम आह—व्यवहारसमारोपेत्यादि । [24]ध्यामालिलिङ्गेति । [25]अम्बर नभो वासश्च । [26]निमग्नचरपुष्प[27]शरस्व दाहेन । तरुण प्रबलो युवा च । अत्र [28]अम्बरकरतरुणेषु विशेषण-

---

1 A. C. F उत्क्रम 2. D. E क्रममावस्वार 3 A. C. श्लिष्टंत 4. E. यदाऽसाधा 5 D. पत्र निमि 6. A. C F. प्रवृत्त इति नि 7 E. यवर्जैव 8. D. E तदाऽपि 9. F. साम्यादेव 10. A C. एव 11 A. omits अ 12 F. ज्ञेया 13 E. लूनादिति 14 A's alt. C. नीरस इ सहृद 15. A. शुष्कैश्चाहृद 16 A's alt. कृदिव्वा ▪ जनयांगि C. कृतिवो कृतजन 17 E उभयत्वं यो 18 F. कण्टकादिभि 19 D. E. इतीति 20. A. येषु 21. A. C त्रिराशि 22. F. आरोपनिब 23. A. D. E बन्धात् 24. A's alt. C आलिङ्गनेति 25. A. C आंबरं 26 A's alt. C. निरग्रस्र पुष्परदन्दाहेन 27. E. चरस्वरं दा 28. A's alt. असुरपरत C असुरवरतल

* This is an explanation to justify the vṛtti singling out पत्रावली from among the common acts. While scratching on limbs and tucking at hair and garment are quite understandable in a tree, the drawing of a patrāvalī design is quite out of the way and least to be expected in a tree (खदिरे अत्यसंभवात्). The Sambhava, of course, ▪ wrought by śleṣa.

अन्तर्निमग्नचरपुष्पशरोऽतितापा-
त्किं किं चकार तरुणो न यदीक्षणाग्निः ॥

लौकिकं च वस्तु रसादिभेदान्नानाभेदं स्वयमुत्प्रेक्ष्यम् ।

यैरेकरूपमखिलास्वपि वृत्तिषु त्वां
पश्यद्भिरव्ययमसङ्ख्यतया प्रवृत्तम् ।
लोपः कृतः खलु परत्वजुषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये ॥

अत्र आगमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुसमारोपः ।

---

साम्यम्[1] । अन्यत्र[2] कार्यसमारोपः । अत्र [3]लौकिकवस्तुनि[4] लौकिकव्यवहारसमारोपः । प्रदर्शितोदाहरणेषु च[5] ।

तत्र[6] लौकिकं[7] वस्तु विविध[8]मित्याह—लौकिकं[9] चेति । यैरिति । [10]एकरूप-[11]मविकृतं । वृत्तिषु जागरिता[12]दिषु । अव्ययं[13] सोषु (प्त्या[14]) दिषु [15]स्थगितम् । अत एवा[16]सङ्ख्यतया प्रवृत्तम्[17] । जाग[18]रे विश्वः प्रथमः, स्वप्ने[19] तैजसो[20] द्वितीयः, [21]सौषुप्ते प्राज्ञ[22]स्तृतीय[23] इति । सङ्ख्यया[24] वस्तुतो रहितं [25]तुरीयस्य[26] [27]सर्वानुस्यूतत्वाद् ।

उक्तं हि[28] श्रीमद्गौडपादैः—"मात्रा सङ्ख्या तुरीय[29]मि"ति । [30]यैरीदृशं त्वां पश्यद्भिः [31]परत्वजुषो विभक्तेर्लोपः कृतः । अस्मात्परमस्तीति विभागो[32] लुप्तः । तैस्तव लक्षणं कृतं ([33]मन्ये)परमेश्वरस्य हि सर्ववृत्तिष्वेकत्व[34]रूपमव्य[35]यत्वं असंख्यता न कुतश्चि[36]दपि देशकालादेर्भेद इति इदमेव लक्षणम् । इदमागमशास्त्र[37]प्रसिद्धं वस्तु[38] / अथ सर्वासु कारिकादिवृत्तिष्वेकत्वादिसंख्यारहितमव्यये हि [39]स्यादिति प्रतियोग्येकत्वं नास्ति किं [40]त्वभेदैकत्वमेव । ईदृशमन्वयं [41]पश्यद्भिः परत्वजुषः प्रकृते.[42] परत्वलक्षणाया.[43] विभक्तेः प्रथमा[44]देर्लोपः कृतः[45] ।

---

1. D. साम्य 2. C. अत्र 3. A's alt. C. एकवस्तुनि एकवस्तु व्य 4. F. omits नि 5. Omitted in all except E. 6. F. अत्र 7. A. C. एकं 8. A's alt. C. निधिनं 9. A's alt. C. एकेवेति 10. A. C. एकं 11. C. F. रूपं विकृ 12. C. जागरिका 13. C. व्यय 14. All mss. सौषुप्तादि 15. A's alt. C. स्वधित 16. D. एक 17. A. C. वृत्ति 18. A's alt. C. ग्राते 19. A's alt. C. स्वपेतत्यज्ञसा 20. A. C. जन्मा जागरितो द्वि 21. A. C. तृतीये सौ 22. C. प्राज 23. C. तृतीयं 24. D. संख्याय 25. C. तृतीय 26. F. यस्यलुप्तः 27. D. सर्वोऽनु 28. A. C. च 29. D. तुरीयां 30. A's alt. C. यैरेकरोपन्वाम्यन्......मुत्व......जुषोति 31. A. पशुत्व 32. D. मालो 33. All mss read. अन्ये 34. त्व omitted in E. 35. D. रूपत्वं संख्याता न अव्ययत्वं कृत 36. अपि omitted in E. 37. E. omits प्र 38. Omitted in A. C. F. 39. D. E. A. इत्यादि 40. A. न भेदैः तत्त्वमेवमीद 41. A. C. अप 42. C. कृते पर 43. C. लक्षणायापि प्र 44. A. मायाः दर्लोकृत C. प्रथमा दर्लोकृत 45. A's alt. C. कृतं

सीमान न जगाम यन्नयनयोर्नान्येन यत्सङ्गत
न स्पृष्ट वचसा कदाचिदपि यद्दृष्टोपमान न यत् ।
अर्थादापतित न यत्र च न यत्तत्किंचिदेणीदृशा
लावण्य जयति प्रमाणरहित चेतश्चमत्कारकम् ॥

अत्र लावण्ये लौकिके वस्तुनि मीमासाशास्त्रप्रसिद्धवस्तुसमारोप । एव तर्कायुर्वेदज्योति शास्त्रप्रसिद्धवस्तुसमारोपो बोद्धव्य ।

स्वपक्षलीलाललितैरपोढहेतौ स्मरे दर्शयतो विशेषम् ।
मान निराकर्तुमशेषयूना पिकस्य पाण्डित्यमखण्डमासीत् ॥

अत्र तर्कशास्त्रप्रसिद्धवस्तुसमारोप । पाण्डित्यशब्द प्रकृते लक्षणया व्याख्येय ।

मन्दमग्निमधुरर्यमोपला दर्शितश्वयथु चाभवत्तम ।
दृष्टयस्तिमिरज सिषेविरे दोषमोषधिपतेरसनिधौ ॥

अत्र आयुर्वेदप्रसिद्धवस्तुसमारोप ।

---

इदमव्ययलक्षण [1]सदृश त्रिषु लिङ्गेष्वि त्यादिना प्रतिपादितम् । [1]इद व्याकरणप्रसिद्ध वस्तु । अत्र विशेषणसाम्यमेव ।

सीमानमिति । अत्र नयनसीमालङ्घनेन प्रत्यक्षप्रमाणस्याविषयता । अन्येना सङ्गतया [2]नियतसम्बन्धाभावात्[3] अनुमानस्य, वचस्स्पर्शाभावाच्छब्दस्य लौकिकस्य अदृष्टो[4]पमानतयोपमानस्य, अर्थादना[5]पातादर्थापत्तेर्न च न यदिति प्रमाणानु[6]त्तावपि वस्तुत ईदृशि[7] लावण्ये[8] मीमासादिसिद्धादृष्टादिवस्तुसमारोप । [9]चोदनैकलक्षणस्य[10] प्रमाणान्तरासन्निकर्षादत्र विशेषण[11]साधारण्यम् । शास्त्रीय[12]वस्तुनो वै[13]विध्य प्रदर्शयति — एव तर्के[14]त्यादि । स्वपक्षेति । पक्षो गरुत् [15]साध्यधर्मविशिष्टो धर्मी च । हेतिरायुध[16] हेतुर्निङ्ग च । विशेषोऽतिशय पदार्थविशेषश्च । माना[17] रोष प्रमाण च ।

मन्दमग्निमिति[18] । अत्र म दाग्नि[19]श्वयथुतिमिरदोषा[20]विर्भाव [21]मोषधिपतेर्भिषजोऽसन्निधाविति । अत्र विशेष्यांशेऽपि साम्यमित्युदाहरणान्तर मृग्यम् । यद्वा चन्द्रमस इति[22] विशेष्याध्याहारादोष[23]धिपतेरित्येतद् विशेषणतया विवक्षणीयम्[24] ।

---

1 Omitted in A C [illegible] C नियति 3 E I भावात् अनास्पद मनुमा 4. A. C. दृष्टा समान A's alt. दृष्टो मान 5 A C D G अनापा 6. D E H प्रतिवृत्तावपि 7 C दृशा 8 D वयय 9 A s alt C शोधनै 10 F I तस्य प्र 11 D शेषण 12 E. I स्त्रीयस्य 13 A s alt C द्वैविध्य 14 A's alt. तर्केत्या 15 A. यमाप्य 16 A. आयुध 17 E. F G H I मान 18 A C. इति विशेषाभ्या 19 E. F I यग्निश्वयथा 20 D E. H I. नेषा 21 E शौषधि 22. A. C. D H विशेषाभ्या 23 A. C. H ओष धर्यरिति तद्विशेषणतया विव धिय मम्सं 24 H च सन्निधा प्रम E s alt. विवक्षणीयान्तर प्र

प्रसर्पत्तात्पर्यैरपि सदनुमानैकरसिकै-
रपि ज्ञेयो नो यः परिमितगतित्वं परिजहत् ।
अपूर्वव्यापारो गुरुवर ! बुधैरित्यवसितो
न वाच्यो नो लक्ष्यस्तव सहृदयस्यो गुणगण. ॥

अत्र भरतादिशास्त्रप्रसिद्धवस्तुसमारोपः । तथा ह्यत्र गुणगणगतत्वेन शृङ्गारादिरसव्यवहारः प्रतीयते । यतो रसो न तात्पर्यशक्तिज्ञेय, नाप्यनुमानविषयः, न शब्दैरभिधाव्यापारेण वाच्यीकृत, न लक्षणागोचरः किन्तु विगलितवेद्यान्तरत्वेन परिहितपारिमित्यो व्यञ्जनलक्षणापूर्वव्यापारविषयीकृतोऽनुकार्यानुकर्तृगतत्वपरिहारेण सहृदयगत इति प्रसर्पत्तात्पर्यैरित्यादिपदै रस एव प्रतीयते । एवमन्यत्रापि ज्ञेयम् ।

---

प्रसर्पत्तात्पर्यैरिति । ये तात्पर्यविद ये चानुमानरसिका [1]तैरपि (अपि) ज्ञेयश्चासौ [2]पारिमित्य जहाति न[3] वक्तु[4] शक्य न च लक्षयितु किन्तु गुरुवर ! तव सहृदयस्यो गुणगणो [5]बुधैरपूर्वव्यापारगुणगणान्तर[6]व्यापारातिशायि व्यापार इत्यवसित[7] । अत्र गुणगणे शृङ्गारादिरस[8] व्यवहार समारोपित इत्याह—अत्र भरतेत्यादि । रस हि भरतोपज्ञम्[9] आमनन्ति । विभावानुभाव[10]व्यभिचारिसंयोगाद्रसनिष्पत्ति[11]रित्याम्नानाद्[12] । तद्व्यवहारमुपपादयति—तथा ह्यत्रेत्यादिना । न तात्पर्य[13]शक्तिज्ञेय [14]इति । तात्पर्यं हि नाम [15]अभिहितान्वयमते समन्वयशक्ति अभिधोत्तीर्णा समन्वय[16]मात्र[17]विश्रान्तयानया समन्वय[18]समनन्तर[19]प्रतीतिको रसो न ज्ञायते । विभावानुभावव्यभिचारिभिस्सह नियतसम्बन्धाभावादनुमानस्यापि न विषय[20] । साक्षात्सङ्केता[21]विषयत्वात् न वाच्य । मुख्यार्थ[22]बा[23]धाद्यभावादपि सत्य अपि तु वेद्यान्तरविगलनादपरिमितस्सन् अभिधालक्षणातात्पर्योत्तीर्णेन व्यञ्जनाख्येन काव्यैकगामिना शास्त्रान्तरापूर्वेण[24] व्यापारेण विषयीक्रियमाणो लौकिकत्वात् अनुकार्य[25]अभिनयप्रयासनिघ्नत्वात् [26]अनुकर्तार च[27] परिहृत्य सहृदयैकगत इति बुधै[28]रवसीयते । दिङ्मात्रमिद, रसमीमांसायां[29] विस्तर । अवृत्तानुपयोगीति न क्रियते । सम्प्रदायप्रकाशिन्यां काव्यप्रकाशटीकायां वितत्य कृत इति तत[30] एवावधार्य इत्यलम् ।

---

1. A C H धरविज्ञे 2 A C H परिमित 3 Omitted in A C H 4 A. C H पन्त्रे शक्य वय लक्ष 5 A C H बुधै 6 A C D H गणातद्व्या 7 F ग्रव्यवसित 8 D रसम्य 9 A's alt C D आव यन्ति 10 D भावमयो 11. D इति न्यायात् 12 A C H आम्नातात 13 C. शक्ति 14 D ज्ञेया 15 A's alt. C अभिधाशक्ति' 16 A's alt समन्वयथा D समन्वया 17 E. F omit वि 18 C. वय, 19 A C अन्तरो—समप्रतीतिनो रस प्रतीतिनो रसो न 20 D विषय 21 A सङ्केतो 22. C. भावाद्यभा 23 D भाव 24 A's alt C पूर्वगो 25 A's alt. C. अनुलार्य 26 A's alt C अनुकार्यात्म 27 Omitted in C. 28 A's alt C इव 29 D E. मीमांसाया 30 A C. E. अत

पश्यन्ती त्रयमेव यत्र तिरयत्यात्मानमाभ्यन्तरी
　　यत्र त्रुट्यति मध्यमापि मधुरध्वन्युज्झिहासारसात्।
चाटूच्चारणचापलं वितनुता वाक्तत्र बाह्या कथं
　　देव्या ते परया प्रभो! सह रहःक्रीडाद्दढालिङ्गने ॥

*ज्योतिश्शास्त्रादिवस्तुसमारोपोऽनया रीत्या ज्ञेय इत्याह—एवमन्यदिति। पश्यन्तीति। [1]अत्रेदुप[2]ह्वरम्—[3]वाग्देवता हि परा पश्यन्ती मध्यमा[4]वैखरी चेति[5] चतुष्पद परिमिता। तत्र [6]नामरूपात्मकं प्रपञ्चं स्वात्मन्युपसंहृत्य [6]स्वरूपज्योती[7]रूपिणी जागरितादि[8]धामत्रयोल्लङ्घिनी परा। नाम[9]रूपप्रपञ्चोल्लासनाय प्राथमिकप्राणपरिस्पन्दाभि[10]मानिनी [11]कन्दमन्दिरा[12] मणिपूरकावधिप्रसरन्ती बीजभावापन्ननिर्विभागवर्णमयी विश्वाभिमुखी भवन्ती[13] [14]सौषुप्त[15]वृत्तिः पश्यन्ती। परायाः[16] सकाशादुदिता[16] मणिपूरकात् अनाहतावधि[17] प्राणपरिस्पन्दो[18]त्क्षुभितबुद्धिवृत्त्यभिमानिनी वर्णपदादिपरिग्रहान्त[19]स्सजल्पात्मिका[20] पश्यन्तीप्रभवा स्वप्नवृत्तिर्मध्यमा। अनाहतान्मुखकन्दरावधि प्रसृता बहिस्सजल्पात्मिका स्थूला मध्यमोद्भवा जागरितवृत्तिर्वैखरी। आसां[21] नाम[22]निरुक्त्यादि विशेषः प्रथमश्लोक[23]विवरणे प्रपञ्चितः। अथ संहारावसरे जागरितलयपुरस्कारेण वैखरी मध्यमायां[24]लीयते। मध्यमा स्वप्नलयपुरस्कारेण पश्यन्त्याम्, सा च सौषुप्त[25]लयपुरस्कारेण परायाम्, परा तुरीयपर्वा[26]त्मिका समाधिवृत्तिरुच्यते। इत्थं च सति शक्तिमानात्मा परायां[27] तुरीय[28], पश्यन्त्यां[29] प्राज्ञः, मध्यमायां तैजसः[30], वैखर्यां विश्वः[31] इत्या[32]गमार्थविदः। अत्र[33] शब्दसङ्ख्या[34] व्याकुर्मः। प्रभो[35]! वश्येन्द्रियतया[36] प्रभवनशील!

1 C अत्रुपे 2 A's alt C रूप पर 3 C वाग्भेदे 4 E रीति चतु 5 A's alt C नामानुरूप प्रप 6 D स्वात्मज्यो 7 A and C ज्योति C. ज्यामि 8. A's alt. नाम 9 C प्ररूप 10 D मानी 11 A H. कुन्द 12 E रात्मन्सिप् 13 C भवन्त 14 A C सुषुप्त 15 D परनिया 16 A's alt. C D उदिताद् 17 D ध्यवधि परि 18 C स्पन्दाक्षु D स्पन्दात् 19 F ग्रहात 20 D आत्मिका स्थूला 21 A's alt एषां 22 A's alt. तिर 23 F श्लोक प्र 24 E. मर्नीय 25 A C. सुषु 26 A C मर्त्ता 27 A C. वरियान् E. परायां 28. D E. तुरीय 29 F पश्क् पश्य 30 C. तै सह 31. A E विश्व 32. F आगमदिक् 33 A's alt C अपशब्द 34 A's alt. सन्तताद् 35 A's alt C प्रभोवश्येन्द्रि 36. C. वया मह पुरुषा

* The explanation of Vidyācakravartin of अन्यत् as referring to ज्योतिश्शास्त्रादि (Jayaratha explains अन्यत् as मन्त्रशास्त्र) and his omission of the explanation of the verse 'गण्डान्ते मदवन्तिनाम्' etc (which is given as an illustration of ज्योतिश्शास्त्रप्रसिद्धवस्तुसमारोप in the N S. and T S. S. editions), while he has commented on all the sub-varieties of Samāsokti, shows that according to our author, Ruyyaka did not give an illustration for ज्योतिश्शास्त्र वस्तुसमारोप

अत्रागमप्रसिद्धे वस्तुनि लौकिकवस्तुव्यवहारसमारोप. । लौकिक-

तव परया देव्या सह क्रीडाढ्ढालिङ्गने अप्रयासेन तादृशी समाधिसामरस्ये प्रवृत्ते बाह्या[1] वाक् कथ चाटूच्चारणचापल स्फुटताल्वोष्ठ[2]पुटव्यापारमुखरता कथ[3] नाम वितनुता चापलक[4]थैव नास्तीत्यर्थ । कुतो नास्तीत्यत आह—आभ्य तरी पश्यन्ती अपयवात्मान यत्र तिरयति[5], मध्यमापेक्षयाऽभ्यन्तरतमा स्वात्मान न प्रकाशयतुमीष्टे । तुरीयपर्वणि प्राणानुदया[6]यत्र मध्यमाऽपि मधुर ध्वन्युज्जिहासारसात् त्रुटयति । अत-स्सङ्कल्परूप [8]मधुरमपि ध्वनिं[9] नोन्मूलयतीत्यर्थ । यत्र[10] परा समाधौ पश्य तीमध्यमयो-रनुदय, तत्र[11] वैखरी कथ नाम प्रवर्तताम् इति तात्पर्यार्थ । अत्रागमसिद्धे वस्तुनि लौकिकवस्तुव्यवहार[12] शृङ्गारात्मकस्समारोपित । यथा परया[13] देव्या पट्टमहिष्या सह तव [14]क्रीडाढ्ढालिङ्गने प्रवर्तमाने अन्या काचिदाभ्यन्तरी [15]आभ्यन्तरत्वादेव युवयोरा-लिङ्गन पश्यन्ती अपयेवात्मान यत्र तिरयति [16]गोपयति । मध्यमाऽपि नाभ्यन्तरी न च बाह्या[17] । [18]मध्यमावृत्तिर्मधुरध्वनि [19] यथा भवति तथा उज्जिहासारसात् त्रुटयति । [20]उद्गन्तुकामा कौतुकादुपरमति । तत्र[21] बाह्या[22] [23]परिग्रह[24]वेश्या चाटू[25]च्चारणचापल कथ वितनुतामिति । अत्र लक्षणयोजना[26]याह—अत्रागा[27]मेति । लौकिक[28]वस्तुनि नाभ्योपयोगित्वं[29]विषय उक्तचरम्[30] अनु[31]स्मारयति—[32]लौकिक[33]वस्तिवति ।

ननु विशेषणसाम्य समासोक्तिलक्षणमुक्तम् । शुद्धकार्यसमारोप तु तदव्यापक-

1 A C बाह्य 2 D पुटगपा पा 3 A's alt कथा 4 A's alt C स्ततथैव 5 C तिर 6 A's alt C उदयात् D उदयाकत्र 7 D मधुप्य 8 C मधीर 9 C ध्वनि 10 A C यत्र 11 A C ततो 12 F हारात्मक 13 E परा 14 All except E. क्रीडालिङ्ग C क्रीडावर्त 15 C D E अभ्य 16 All except E गोपा 17 A H याह्य F बाह्या । वस्तुपर्यालोचनया (P 118) 18 C मध्यम 19 C. ध्वनी 20 F उद्गतातु गमिता की 21 F तत 22 A C F H बाह्य 23 A's alt पर 24 C प्रहर्षा वारण 25 A's alt चाणू E चारू 26 A C नाया मिति अत्र D E माया च 27 A C H आगमे च 28 A C च वस्तु 29 A C F द्वैधि 30 A's alt D भर 31 Omitted in all except E. 32. A C K यति एवमिति । की D F यति उग इति की 33 All except E लौकिक

* From the word बाह्या the mss F jumps to वस्तुपर्यालोचनया (p 118) which occurs in the middle of the explanation of the meaning enjoined in the rule दशा जुहाति । But the omitted portion (i e from मध्यमवृत्ति to अत एव सिद्ध) is found in the end of the commentary, where the author enumerates the figures of speech dealt with by him as कमद्भति विषममध्यमवृत्ति अत एव सिद्ध and after this सिद्ध, the ms. ends abruptly

वस्तुव्यवहारश्च रसादिभेदाद्बहुभेद इत्युक्तं प्राक् । तत्र शुद्धकार्यसमारोपे कार्यस्य विशेषणत्वमौपचारिकमाश्रित्य विशेषणसाम्यादिति लक्षणं पूर्व-शास्त्रानुसारेण विहितं यथाकथंचिद्योज्यम् । इह तु—

ऐन्द्रं धनुः पाण्डुपयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार ॥

अस्ति तावद्रविशशिनोर्नायकत्वप्रतीतिः । न चात्र विशेषणसाम्यमिति सा कुतस्त्या । प्रसादयन्ती सकलङ्कमिन्दुमिति विशेषणसाम्याच्छरदो नायिकात्वप्रतीतौ तदानुगुण्यात्तयोः समासोक्त्या नायकत्वप्रतीतिरिति चेत् आर्द्रनखक्षताभमैन्द्रं धनुर्दधानेत्येतद्विशेषणं कथं साम्येन निर्दिष्टम् ? न चैकदेशविवर्तिन्युपमोक्ता, यत्सामर्थ्यान्नायकत्वप्रतीतिः स्यात् । तत्कथमत्र व्यवस्था ?

---

मित्यत आह—तत्र शुद्धकार्येत्यादि । शुद्धकार्यसमारोपे हि [1]विलिखति कुचादित्यादौ [2]यत् कुचविलेखनादि ह(ठ[3])का(मु[4])ककार्य[5] तस्य यद्यपि न[6] मुख्य[7]तया [8]खदिरादिविशेषणत्व, अथाप्युपचारेण विशेष[9]णीकरण, तत् (तत्र ?) यथाकथंचिल्लक्षणयोजना कार्या । ननु किं उपचाराश्रयणेनेत्यत आह—पूर्वशास्त्रानुसारेणेत्यादि ।

अथ[10] यत्र समासोक्तेरसामञ्जस्यं तत्र न्यायसञ्चारेण समञ्जसीकर्तुमाह—इह त्वित्यादिना । ऐन्द्रं धनुरिति । आ[11]र्द्रनखक्षताभम्[12] ऐन्द्रं धनुः पाण्डुपयोधरेण दधाना सकलङ्कमिन्दु प्रसा[13]दयन्ती शरद्रवेस्तापमभ्यधिकं चकार । पयोधरो मेघः कुचश्च । प्रसा[14]दाति[15]शये कलङ्को[16]द्धुरीभावात् सकलङ्कत्वोक्तिः जारत्वाविष्करणाय । प्रावृडपेक्षया शरदि रवे तापाधिक्यम् । अत्र [17]चर्चा—अस्ति[18]तावदित्यादि[19] । नायकत्वप्रतीतिरस्तीति[20] प्रतिज्ञाय तदाक्षिपति—न चात्रेति । सा[21]कुतस्त्या नायकत्वप्रतीतौ नास्तिहेतुरित्यर्थं । हेतुसद्भा[22]वमाशङ्क्य निराचष्टे—प्रसाद[23]-यन्तीत्यादि । सकलङ्कप्रसा[24]दलक्षणविशेषणसाम्यात् शरदस्तावदस्ति नायिकात्व-प्रतीति, तदनुगुणत्वेने[25]न्दुरव्योर्नायकत्वप्रतीतिरिति चेत् मन्यसे, [26]नैतद्घटते । कुतः आर्द्रनखक्षताभ ऐन्द्रं धनुरिति विशेषण[27]स्यासाम्यात् । ऐन्द्र[28] धनु शरद[29] एव विशेषण

---

1. A C. omit वि 2. Omitted in A. C D 3 All mss. हर 4 All mss कार्मुक 5 A. C. H. कार्यान्तरस्य 6 Omitted in D. 7. A's alt. C. मुग्धस्य तथा त्व 8. D न खदि 9 A D H. विशेषकार C विशेषणकार 10. A C. अत्र 11. C. आद्र 12. C. क्षताभं 13. A. C. प्रसार 14 D प्रसाद 15. F. शये कलङ्कोक्ति 16 A. C. कलङ्क E. कलङ्कोद्धरी D. G. H. द्धरी 17. Except A. all mss चर्चं 18. C. अस्मि 19 A D F. आदिना 20 C इति रसस्तुति प्रति 21. A C. F. कुतस्त्यां 22. D स्वभावमा 23. A. C. प्रसादयन्ती 24 E. F. प्रसादनम् 25 नं Omitted in D 26. C. तदाप्यतर्के । कु 27 A. C. F. पदासाम्य 28. All mss. ऐ धनु 29. A's alt. C. शरदि

उच्यते—एकदेशविवर्तिन्युपमा यदि प्रतिपदं नोक्ता, तत्सा केन प्रतिषिद्धा ? सामान्यलक्षणद्वारेणायातायास्तस्या अत्रापि संभवात् । अथात्र नोपमानत्वेन नायकत्वं प्रतीयते, अपि तु रविशशिनोरेव नायकत्वव्यवहारप्रतीतिः । तयोरत्र नायकत्वात् । तदत्रार्द्रनखक्षताभमित्यत्र स्थितमपि श्रुत्योपमानत्वं वस्तुपर्यालोचनया ऐन्द्रे धनुषि संचारणीयम् । इन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतेः । यथा 'दध्ना जुहोति' इत्यादौ दध्नि संचार्यते विधिः । एवमुपमानुप्राणिता समासोक्तिरेव । इह पुनः—

---

न[1] नायि[2]काया । नन्वा[3]र्द्रनखक्षताभमिति[4] विशेषणो[5]पम्यादेकदेशविवर्तिन्युपमा शरदि तत्सा[6]मर्थ्यादिन्दुरव्यो नायकत्वप्रतीतिरस्त्वित्यत आह—न चैकदेशेति । यद्येकदेशवर्तिन्युपमा[7] केनचिदुक्ता तदा तत्सामर्थ्यादनयोर्नायकत्वप्र[8]तीतिस्स्यात् । न चेयमुक्ता केनचित् । अत[9]स्तत्सामर्थ्यात् कथ[10]मनयोर्नायकत्वव्यव[11]स्थिति । अत्र समा[12]धित्सुराह—उच्यत इति । एकदेशविवर्तिनीत्यादि । यद्यपि साक्षान्नोक्ता अथापि नास्या[13] प्रतिषेधोऽस्ति । नन्वुक्तिप्रतिषेधयोर्द्वयोरप्यभावे कथ संभव इत्यत[14] आह—सामान्यलक्षणेति । ननु यद्येकदेशविव[15]र्तिन्युपमाया इह संभव तर्ह्युपमालङ्कारस्यैव प्राप्तिर्न स[16]मासोक्तेरित्यत आह—अथात्रेत्यादि । अथेत्यधिकारे । यद्युपमानत्वेन नायकोऽधिकारी कश्चित्प्रती[17]यते, [18]भ[19]वेत्प्राप्तिरुपमालङ्कारस्य । [20]न हि प्रतीयते नायकोऽत्र कश्चिदधिकारी । अपि तु रविशशि[21]नोरेव नायकत्वव्यवहारे प्रतीति, तयोरेवा[22]स्या[23] शरदि नायकत्वोपचारात् । इत्थ समासोक्तिप्राप्तौ, तदनुसारेण शब्दन्यासो[24] न्याय्य इत्यत आह—तद[25]त्रेत्यादि । [26]आर्द्रन[27]खक्षते श्रुत्या[28] स्थितमप्युपमानत्वमिन्द्रधनु[29]षि संचारणीयम् । कुत ? वस्तुपर्यालोचनया । तामेव वस्तुपर्यालोचना स्फुटयति—इन्द्र[30]चा (चाभ[31]) इत्यादि । प्रतीति. पदा[32]र्थान्तर[33]समभिव्यवहारादित्थम् एव[34] यत[35] । अन्यनिष्ठस्य धर्मस्यान्यत्र संचारण कुत्र दृष्टमित्यत आह—यथा दध्नेत्यादि । दध्ना जुहोतीत्यत्र हि हवनगत[36]त्वेन विधि[37] प्रतीत[38] स त्वग्निहोत्रं जुहोतीत्य[39](त) एव सिद्ध

---

1 Omitted in C 2 C यिका नायकत्वादार्द्र 3 All except. E नत्वार्द्र 4 A C इति । ननु प्रसादयन्तीति वि 5 A C. F H. शेषणेन साम्या 6 A F H साम्यादि 7 E न येन 8 A C F. व्यवस्थिति 9. D अतत्सा 10 Omitted in D 11 D F H. व्यवस्थेति 12 C समाधि साराभउ 13 A C E नासां 14 C. अतत्सामा 15 C D E विवर्त्यु 16 E न तु 17 D H प्रतीयेत 18 A C इति भवे 19 A's alt इनेति प्राप्ति 20 omitted in C 21 After नो D repeats the portion from उपमालकारस्य to शशि 22 A एव गस्या 23 D अस्या 24 D न्यासौ E H न्यासोऽसौ 25 A's alt C काऽत्रेत्या 26 A C. E F. अत्र 27 C न लक्ष्यते 28 A क्षते भूत्यस्थ A's alt क्षतु श्रुत्यात्तम C भूत्यवस्थम 29 A C. D F धनुष 30 D तद्रूपचाप 31 All mss चाप इ 32. F पदान्तर 33 A's alt C समुच्चितव्य 34 A C. F. H एव 35 A C F H कुत 36. C गतार्थेन 37 A D विधि 38 A. C प्रतीति 39 All mss अत

नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरःश्रियः ।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव ॥

सरःश्रियामिति नायिकात्वप्रतीतिर्न समासोक्त्या, विशेषणसाम्याभावात् । तस्मान्नायिकात्रोपमानत्वेन प्रतीयते, न तु सरःश्रीधर्मत्वेन नायिकात्वप्रतीतिरित्येकदेशविवर्तिन्युपमैवोपास्या, गत्यन्तराभावात् । यैस्तु नोक्ता तेषामप्युपसङ्ख्येयैव । यत्र तु "केशपाशालिवृन्देन" इत्यादौ समासोक्तायामुपमाया समासान्तरेण विशेषणसाम्यं योजयितुं शक्यं तत्रौपम्यगर्भविशेषणप्रभाविता समासोक्तिरेव युक्तेति न विरोधः कश्चित् ।

सा च समासोक्तिरर्थान्तरन्यासेन क्वचित्समर्थ्यगतेन क्वचित्समर्थकगतत्वेन

---

इति । वस्तुपर्यालोचनया यथा[1]दध्नि सचाय्येते तथे[2]हाप्यनुसन्धेयमिति यावत् । अत समासोक्तिरेवेयमिति निगमयति—एवमुपमानुप्राणितेति । ऐन्द्रधनुष[4] उपमेय[5]स्योपमानत्व[6]क्लृप्ते[7] वैवक्षिकोपमानुप्राणितत्वम् । अथ यत्र[8] न्या[9]यत समासोक्तिमपोह्य एकदेशविवर्तिन्युपमैव प्रथते त विषय दर्शयितुमाह—इह पुनरिति ।

नेत्रैरिवेति अत्र सरःश्रिया नायिकात्वप्रतीतौ[10] निमित्त विवेचयति—सरःश्रियामिति[11] । विशेष[12]णसाम्यान्नायिका[13]त्वप्रतीतिर्न समासोक्त्या । अत एव व्यवहार[14]समारो[15]पोऽपि न भवतीत्याह—तस्मान्नायिकेति । नायिकाऽप्यत्र सरःश्रियामुपमानतया, न तु व्यवहारसमारोपेण सरःश्रीधर्मतया अत[16] एवविधे विषये गत्यन्तराभावादेकदेशविवर्तिनी उपमै[17]वोपास्या । अनुक्ता कथमुपास्येत्यत आह—यैस्त्विति । अस्माभि[18]रनावदुपप[19]त्तिभिरुक्ता । यैस्तु नोक्ता तैरपि गत्यन्तराभावा[20]दुपसङ्ख्यात[21]व्यैवेत्यर्थः ।

ननु पूर्वमेकदेशविवर्तिन्युपमा निराकृता, सम्प्रति साधितेति व्याघात इत्यत आह—यत्र तु केशपाशेत्यादि । दन्तप्रभा पुष्पाणीवेत्यादि समासेनोक्तायामुपमाया सत्यामपि दन्तप्रभासदृशैः पुष्पैरिवेत्यादि समासान्तरमहिम्ना विशेषणसाम्यमुपपद्यते । तत्रौपम्य[22]गर्भविशेषणोत्थापिना समासोक्तिरेव [23]युक्ता । सम्प्रति तु नेत्रैरिवेत्यत्र गत्यन्तराभावादेकदेशविवर्तिन्युपमैव[24] व्य[25]वस्थापितेति व्याघाताभावात् सर्वमनवद्यम् ।

अथार्थान्तरन्यास[26]प्रभावितायामस्या वैचित्र्यान्तरमस्तीत्याह—सा चेत्यादि ।

---

1 Omitted in A C 2 C घाय्येते 3 D तथेत्याप्य 4 A. C D F धनुरप 5 C मेय शीप 6 D मानत्व 7 A C. D क्लृप्ति वै 8 A's alt C यात्र 9 A's alt C स्थाप्यायत 10 A C F प्रतीति 11 All except C इत्यादि 12 D विशेषयात 13 A C D F नायक 14 D हार 15 A C E आरोपोपि D आरोपो न 16 D यत 17 D मेवास्या 18 भि Omitted in C 19 A's alt C. वर्तिभि 20 All mss भावा-दुपमा सख्याया उप 21 A's alt. तैर्व्य E omits व्य 22. D म्य विशे 23 Except A all read उक्ता 24 After उपमैव A repeats the portion from उपास्या । अनुक्ता etc to एकदेशविवर्तिन्युपमैव 25 A's alt C व्युत्थापि 26 न्यास omitted in E F

च भवति । क्रमेण यथा—

> अथोपगूढे शरदा शशाङ्के प्रावृड्ययौ शान्ततडित्कटाक्षा ।
> कासां न सौभाग्यगुणोऽङ्गनानां नष्टः परिभ्रष्टपयोधराणाम् ॥
> असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः ।
> अनाक्रम्य जगत्सर्वं नो सन्ध्यां भजते रविः ॥

अत्रोपगूढत्वेन शान्ततडित्कटाक्षत्वेन च शशाङ्कशरदोर्नायकव्यवहार-प्रतीतौ समासोक्त्यालिङ्गित एवार्थो विशेषरूपः सामान्याश्रयेणार्थान्तर-न्यासेन समर्थ्यते । सामान्यस्य चात्र श्लेषवशादुत्थानम् । शान्ततडित्कटा-क्षेत्यौपम्यगर्भं विशेषणं समासान्तराश्रयेणात्र समानम् । "असमाप्तेत्यादौ" तु स्त्रीशब्दस्य सामान्येन स्त्रीत्वमात्राभिधानात्सामान्यरूपोऽर्थो लिङ्गविशेष-निर्देशगर्भेण कार्योत्थापितया समासोक्त्या समारोपितनायकव्यवहारेण रवि-संध्यावृत्तान्तेन विशेषरूपेण समर्थ्यते ।

> आकृष्टिवेगविगलद्भुजगेन्द्रभोग-
> निर्मोकपट्टपरिवेषतयाम्बुराशेः ।

---

सम[1]र्थ्यः प्रकृतोऽर्थः समर्थकस्त्वप्रकृतः । अथोप[2]गूढ इति । उप[3]गूढे आलिङ्गिते । ययौ अपगता । अत्र समर्थ्यगता[4] । असमाप्ते[5]ति । अत्र तु समर्थकगता । उभयत्र योजनामाह—अत्रोपगूढ[6]त्वेनेत्यादि । उपगूढत्व शान्ततटित्कटाक्षत्वं च[7] विशेषणसाम्यं तदुत्थापितया[8] समासोक्त्या नायकव्यवहारप्रतीतिः । तथा सति समासोक्त्यालिङ्गितो[9] योऽयं विशेषात्मा[10] स सामान्यात्मना अर्थान्तरन्यासेन समर्थ्यते । सामान्यरूपस्य च समर्थकस्योत्थानम् । परिभ्रष्टपयोधराणामिति श्लेषवशादुपगूढ[11] इति विशेषणं साधारणतया[12] स्फुटम् । शान्ततटिदित्येतत्तु प्रागुपमागर्भम् । तटितः कटाक्षा इवास्या (य यस्या ?) इति । अथ तटित्सदृश[13]कटाक्षेति समा[14]सान्तराश्रयात् साम्यमालम्बते[15] । [16]"असमाप्ते"त्यत्र स्त्रीसामान्यग्रहणात् सामान्यरूपसम[17]र्थोऽर्थः स्त्रीलिङ्गपुल्लिङ्ग[18]निर्देशगर्भेण भजनरूपेण[19] कार्येणोत्थापितया [20]समासोक्त्या समारोपितनायकव्यवहारेण विशेषात्मना रविसन्ध्या-वृत्तान्तेन समर्थ्यते ।

उत्प्रेक्षावशात् वैचित्र्या[21]याह—आकृष्टि[22]वेगेति । वेष्टना वेष्टनं यस्य मन्दरगिरेः,

---

1. A. C. E. समर्थः 2. A. अथेति । उप 3. A. C. उपश्लेष्टे A's alt. उपश्लिष्टे 4 C. गणना च 5. आप्तेरिति 6. A's alt. C. गूढा पेत्या 7. Omitted in A. C. F. H. 8. C. ताया 9. D. लिङ्गिता 10. A. C. F. H. I. त्मना समर्थ्योऽर्थः स 11. D. E. गूढं 12. D. रणतया स्फु 13 A. C. F. G. H. सदृशे 14. C. समासाय 15 C. लम्ब्यते 16. A. C. H. omit च 17. G. समर्थ्यो 18. A's alt. C. लिङ्गनिर्देश 19. A. C. F. K. दर्शनरूपा 20. A. C. D. समारोपितया समासोक्त्या 21. A's alt. चित्र्यमाह 22. A. C. G. K. कृष्ट

मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले ॥

अत्र निर्मोकपट्टापह्नवेन समारोपितायाः मन्दाकिन्या यद्वस्तुवृत्तेन पादमूले वेष्टनं तच्चरणमूले वेष्टनत्वेन श्लेषमूलयातिशयोक्त्याध्यवसीयते। तत्तथाध्यवसितं मन्थव्यथाव्युपशमार्थमिवेत्युत्प्रेक्षामुत्थापयति। सोत्थाप्यमानैवाम्बुराशिमन्दाकिन्योर्भर्तृपत्नीव्यवहाराश्रया समासोक्तिं गर्भीकरोति। एवञ्चोत्प्रेक्षासमासोक्त्योरेकः कालः। एवं "नखक्षतानीव वनस्थलीनाम्" इत्यत्रापि वनस्थलीनां नायिकाव्यवहारः उत्प्रेक्षान्तरानुप्रविष्टसमासोक्तिमूल एव। एवमियं समासोक्तिरनन्तप्रपञ्चेत्यनया दिशा स्वयमुत्प्रेक्ष्या॥

---

पादः पर्यन्त[1]पर्वतः चरणश्च। अत्र समासोक्तेरुत्प्रेक्षा[2]याश्च समकालतां दर्शयितुमाह—अत्र[3] निर्मोकेत्यादि। निर्मोक[4]पट्टपरिवेष्टनया[5] मन्दाकिनीति कथनात् तदपह्नवेन मन्दाकिनीसमारोपः, तस्याश्च यत्प्रान्तपर्वतवेष्टनं[6] तच्चरणमूलवेष्टनमेवेति, पादशब्दश्लेषोत्थया[7] भेदेऽभेद इत्येवंरूपया अतिशयोक्त्या[8]ऽध्यवसीयते। तथाऽध्यवसितं च मन्थ[9]व्यथेत्यादि फलोत्प्रेक्षामुत्थापयति। सा च अम्बुराशिमन्दाकिन्योर्भर्तृपत्नीव्यवहारसमा[10]श्रया समासोक्तिं स्वसमकालमुत्थापयतीति अनयोरेककालता। इत्थमन्यत्रापि दर्शयति—एवं नखक्षतेति[11]। उत्प्रेक्षान्तरमनुप्रविष्टेति समकालता सूचिता। इत्थं वैचित्र्यम्[12] अनुसन्धेयमिति निगमयति—एवमियमित्यादि।

विशेषणानां साम्येनाप्रस्तुतार्थस्य गम्यता।
[13]समासोक्तिर्मता येन संक्षिप्या[14]र्थोऽभिधीयते॥
शुद्धकार्यसमारोपे साम्यं[15] स्यादौपचारिकम्[16]।
व्यवहारसमारोपः साक्षादस्याः प्रयोजकः[17]॥
स्याद्विशेषणसाम्यं चेत्[18] समासान्तर[19]संश्रयात्।
उपमा बाध्यते नैना[20]मेकदेशविवर्तिनी॥
दृश्यतेऽर्थान्तरन्यासे[21] सम[22]र्थ्ये च समर्थकः।
उत्प्रेक्षायोगिनी चैषा क्वचित्स्यादेककालगा[23]॥

---

1 A's alt अन्तवेष्टनं च C पर्यन्तवेष्टनं तच्चरणमूल 2 E प्रेक्षा स 3 Omitted in A F K 4 D E G मोकपरि 5 A F H वेपतया 6 D वेष्टन 7 C उत्थाया 8 A C H उक्त्याऽर्थोऽवसी 9 H मन्द C मन्त 10 C समाश्रय 11 E क्षतानी 12 E चित्र्यान्तरमनु 13 C repeats समासोक्ति to येन 14 A C F H क्लिष्टा 15 A's alt E कार्यं 16 G चारित 17 C जक 18 A's alt च इत्यथा 19 E अन्ते स 20 A C F H एनं 21 A C D E F न्यास 22 C समर्थे 23 A's alt. कालता

## विशेषणसाभिप्रायत्वं परिकरः ॥३२॥

विशेषणवैचित्र्यप्रस्तावादस्येह निर्देशः। विशेषणानां साभिप्रायत्व प्रतीयमानार्थगर्भीकार। अत एव प्रसन्नगभीरपदार्थत्वान्नाय ध्वनेर्विषयः। एवं च प्रतीयमानांशस्य वाच्योन्मुखत्वात्परिकर इति सार्थकं नाम। यथा—

राज्ञो मानधनस्य कार्मुकभृतो दुर्योधनस्याग्रतः
प्रत्यक्षं कुरुबान्धवस्य मिषतः कर्णस्य शल्यस्य च।
पीतं तस्य मयाद्य पाण्डववधूकेशाम्बराकर्षिणः
कोष्णं जीवत एव तीक्ष्णकरजक्षुण्णादसृग्वक्षसः॥

अत्र राज्ञ इत्यादौ सोत्प्रासपरत्व प्रसन्नगभीरपदत्वम्। एवम् "अङ्गराज! सेनापते! राजवल्लभ! द्रोणापहासिन्! कर्ण! रक्षैनं भीमाद्दुश्शासनम्" इत्यादौ ज्ञेयम्।

---

परिकरं लक्षयति—विशेषणसाभिप्रायत्वं परिकर[1]। सङ्गतिमाह—विशेषणवैचित्र्येति। व्याचष्टे—विशेषणानामित्यादि। प्रसन्नगभीरत्वं नाम पदानां व्यङ्ग्यार्थगर्भी[2]कार[3] एव न तु व्यङ्ग्यस्य वाच्यातिशायिता। निर्व[4]क्तुमाह—एवं चेति। वाच्योन्मुख[5]त्वं वाच्याङ्गता[6]॥

राज्ञ इति[7]। राज्ञो न तु याहशानाहशस्य। तत्रापि मानधनस्य[8] न स्वव[9]मानसहस्य। कार्मुकभृतो न निरायुधस्य। दुर्योधनस्य न तु शवययोधनस्य। अग्रतो न त्वसमक्षम्। कुरुबा[10]न्धवस्य मिषत कर्णस्य शल्यस्य च न निस्सहायस्य। [11]सर्वेष-"मना[12]"दरे षष्ठी"। इत्थं मिषतो[13] दुर्योधनकर्णशल्यानमनादृत्येत्यर्थं। दुश्शासनस्येत्यनुक्त्वा[14] तस्य पाण्डववधूकेशाम्बराक[15]र्षिण इत्युक्ति [16] [17]हन्तव्यत्वप्रसिद्ध्यर्थं। जीवत एव न तु मूर्च्छितस्य मृतस्य वा[18]। तीक्ष्णकरजक्षुण्णाद[19]सृग्वक्षस न त्वा[20]युधविदारितात्। कोष्णं न तु पर्युषितम्। मयाद्य पीतमिति भीमसेनोक्ति। साभिप्रायता दर्शयति—अत्रेत्यादि। वाक्येऽपि दर्शयति—एवमङ्गराजेत्यादि।

---

1 D कर 2 C गर्भ 3 A's alt करण 4 D निर्वर्तयितु 5. A C F G H मुख था 6 C अङ्गतां 7 A C H इति च 8 D स्य अग्रतो 9 A's alt तु मान F तु अमान 10 A C D G H पाण्डव 11 C मर्वेर्वेधमना D स्वे षे षष्ठी 12 E. मना। याचक सार्थं (P 124 under श्लेष) The omitted portion दरे षष्ठी to मार्गणशते is later found in the same figure Śleṣa while explaining तत्क्रियायोग in the verse अर्थामयोऽपि etc as तत्क्रियायोग स्वदरे षष्ठी मार्गणशते द्वेतुरा (p 128) 13 A's alt C द्विषतो 14 C उक्त्वाऽस्य तस्य 15 Except E all read कर्षण 16 A's alt उक्ति C उक्त H उक्त 17 A's alt C मन्त 18 H का विनेपथ्या 19 D E क्षुण्णात न तु A. F G H क्षुण्णादस्य च C अस्र च 20 A's alt आयधवि

विशेष्यस्यापि साम्ये द्वयोर्वोपादाने श्लेषः ॥३३॥

केवलविशेषणसाम्य समासोक्तावुक्तम् । विशेष्ययुक्तविशेषणसाम्य त्वधिकृत्येदमुच्यते । तत्र द्वयो प्राकरणिकयोरप्राकरणिकयो प्राकरणिका-प्राकरणिकयोर्वा श्लिष्टपदोपनिबन्धे श्लेष । तत्राद्य प्रकारद्वय विशेषणविशेष्य-साम्य एव भवति । तृतीयस्तु प्रकारो विशेषणसाम्य एव भवति । विशेष्य-साम्ये स्वयंप्रकरणादिना वाच्यार्थनियमेऽर्थान्तरावगतिर्ध्वनेर्विषय स्यात् । आद्ये तु प्रकारद्वये द्वयोरप्यर्थयोर्वाच्यत्वम् । अत एव द्वयोर्वोपादान इति तृतीय-प्रकारविषयत्वेनोक्तम् । विशेष्यस्यापि साम्य इति तु श्लिष्टप्रकारद्वयविषयम् । क्रमेण यथा—

येन ध्वस्तमनोभवेन बलिजित्काय पुरास्त्रीकृतो
यश्चोद्वृत्तभुजङ्गहारवलयो गङ्गा च योऽधारयत् ।
यस्याहु शशिमच्छिरोहर इति स्तुत्य च नामामरा
पायात्स स्वयमन्धकक्षयकरस्त्वा सर्वदोमाधव ॥

---

विशेषणाना व्यङ्ग्यायग[1]भीकरणलक्षणा[2] ।
सोत्प्रासता[3] परिकरो[4] व्यङ्ग्य परिकरो यत ॥

श्लेष लक्षयति—विशेष्यस्यापि[5] साम्ये द्वयोर्वोपादाने श्लेष । अर्थद्वयस्य यदा[6] प्राकरणिकत्वमप्राकरणिकत्वमेव वा तदा विशेषण[7]विशेष्ययो शब्दसाम्ये श्लेष । यदा तूभयमयत्व अर्थद्वयस्य तदा[8] विशेष्या[9]शे पृथगुपादाने श्लेष इति सूत्रार्थ । सङ्गतिमाह—केवलविशेषणेति । इदमिति वचनविशेषणम् । व्याचष्टे—तत्र द्वयोरि-त्यादि । विशेषणविशेष्यसाम्य एवेति । उभयत्र शब्दसाम्ये सत्येवेत्यर्थ । विशेष्यसाम्ये त्विति । तृतीयप्रका[10]रे यदि विशेष्यांशेऽपि शब्दसाम्य तदा [11]अयप्रकरणादिना[12] अभि धानियामकेन प्राकरणिक एव वाच्या[13]थ इति नियमे अप्राकरणिकायप्रतीतिर्ध्वनेरेव विषयस्स्यात् न [illegible] श्लेषस्य । अनेकार्थो हि शब्द [14] प्रकरणादिना प्राकरणिक एवार्थे नियम्यते । आद्य तु प्रकारद्वये नियमहेत्वभावात् द्वा[15]वपि वाच्यो[16] । इत्थ सति विकल्पो व्यवति[17]ष्ठत इत्याह—अत एवेति । श्लिष्टप्रकारद्वयेति । आद्य प्रकारद्वय श्लिष्ट विशेष्या शेऽपि श्लेषाय[18]त्वात् ।

येन ध्वस्तेति । अनश्शकटम्[19] । अभवेन असंसारेण बलिर्दैत्यजित्काय पुराऽमृत-

---

1 H नम कर 2 A's alt. C लक्षणात् E. लक्षण 3 K प्राशता 4 A C E F H परिकर 5 F विशेष्येति । अर्थ 6 A C G H यथा 7 D विशेषणांशे [illegible] 8 A C. तथा 9 D विशेष्यांशे 10 A E H प्रकारेति य 11 A. C F H तदर्थ 12. A C F आदिना आकरणिक एवार्थे 13 F G वाच्योऽर्थ 14 D E F शब्द 15 A s alt. आद्यावपि 16 A. सिद्धौ 17 D तिष्ठति 18 A C F H अर्हत्वा 19 Except E all read शकट

नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः ।
सदृशे वनवृद्धानां कमलानां तदीक्षणे ॥

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम् ।
मोहात्समाक्षिपति जीवितमप्यकाण्डे
कष्टो मनोभव इवेश्वरदुर्विदग्धः ॥

[1]सविभागकाले स्त्रीकृत स्त्रीभाव नीत । यश्च उद्वृत्तका[2]लियादिभुजङ्गघा[3]तीति । भर वलयवान् अरवलय चक्रम् । अग गोवर्धन गा मही च य कृष्ण वराहावतारे [4]अधारयत् । यस्य च स्तुत्य नाम अमरा शशिमच्छिरोहर इत्याहु[5] । शशिमद्राहु[6] शशिन मथ्नातीति । अन्धकाना [7]वृष्णिसहचराणा[8] क्षयकृत् आवासकर । [9]स माधवस्त्वा सर्वदा पायात्[10] । अथ येन ध्वस्तमनोभवेन[11] नाशितमन्मथेन बलिजित्काय विष्णोर्वपु पुराणा सहरणे भस्मीकृत । य[12]श्चोद्वृत्तभुजगवलयै हारवान् वलयवांश्च गङ्गा च योऽधारयत् अमरा यस्य[13] शिर शशिमचन्द्रकलावत् स्तु[14]त्य च नाम हर इत्याहु । अन्धकासुर[15]क्षयकर उमाधवो गौरीपतिस्सर्वदा त्वा पायात् । अत्र हरिहरयोर्द्वयोरपि प्राकरणिकता ।

नीताना[16]मिति । लुब्धैर्मधुलपटै व्याधैश्च [17] भूरीति[18] क्रियाविशेषणम् एकदा शिलीमुखै[19]र्भ्रमरै अन्यदा भूरिबाणै । वन जल विपिन च । कमलाना [20]पद्माना मृगाणा च । अत्र पद्ममृगयोरप्राकरणिकता ।

स्वे[21]च्छेति । विषयो[22] देशकोशादिस्स्यादिश्च । देहीति वितरेति दहवानिति च । मार्गणशतैर्याचकसार्थै । वक्तु[23] न यातीत्येकदा मार्गण[24]शतै प्रयोगभेदात् (द) [25]दात-सङ्घर्षणै [26] दुःख ददातीत्यन्यदा । जी[27]वित जीविका[28] जीवश्च[29] । ईश्वर [30]दुर्विदग्ध [31] । [32]प्रभुरत्र प्राकरणिक , अप्राकरणिको मनोभव, अत्र विशेष्ययोर्द्वयोरुपादानम् ।

1 स omitted in D 2 A C वृत्त भुजगहारवलय का 3 A C हति भिन्दहार वल्यपुन्ड आरघन्यमकुर्वन् अग 4 अ Omitted in D and E. G अधारयन् 5 A D F G H आह 6 A मथराहु A's alt मथ राम्मय C मर्थारा 7 C. घृष्णीना 8 D E. G या आवास 9 Omitted in A C F G 10 G यात अन्यात् । अथ 11 D भवेन थलि 12 A उद्वत्त C उद्वृत्ते 13 F स्य नाम हर 14 A. सन्य 15 A's alt भवकर C क्षयकर 16 E. repeats नीताना मिति 17 A पञ्चर्ग 18 D omits ति 19 D मुखै श्च 20 A C F G H लानां मृ 21 A. स्वेति C स्वेति 22 A यापदेश 23 A. C F G K वृत्तं 24 C गते 25 D बहु 26 A C D. मार्गशै 27 A's alt C जाचित D E. G K जीवन F जीवन जीयश्च 28 C का च इं 29 E. G जीवश्च 30 A's alt दर्विद 31 A's alt G. च प्रभुश्च अ 32 D प्रभु प्रा

अत्र हरिहरयोर्द्वयोरपि प्राकरणिकत्वम् । पद्मानां मृगाणां चोपमानत्वादप्राकरणिकत्वम् । ईश्वरमनोभवयो· प्राकरणिकाप्राकरणिकत्वम् । एष च शब्दार्थोभयगतत्वेन वर्तमानत्वात्त्रिविध· । तत्रोदात्तादिस्वरभेदात्प्रयत्नभेदाच्च शब्दान्यत्वे शब्दश्लेषः । यत्र प्रायेण पदभङ्गो भवति । अर्थश्लेषस्तु यत्र स्वरादिभेदो नास्ति अत एव न तत्र सभङ्गपदत्वम् । सङ्कलनया तूभयश्लेषः । यथा—

> रक्तच्छदत्वं विकचा वहन्तो नालं जलैः सङ्गतमादधानाः ।
> निरस्य पुष्पेषु रुचिं समग्रा पद्मा विरेजु· श्रमणा यथैव ॥

अत्र रक्तच्छदत्वमित्यादावर्थश्लेषः नालमित्यादौ शब्दश्लेषः । उभयघटनायामुभयश्लेषः । ग्रन्थगौरवभयात्तु पृथङ्नोदाहृतम् ।

एष च नाप्राप्तेष्वलङ्कारान्तरेष्वारम्यमाणस्तद्बाधकत्वात्तत्प्रतिभोत्पत्तिहेतुरिति केचित् । "येन ध्वस्तमनोभवेने"त्यादिर्विविक्तोऽस्य विषय

---

उदाहरणत्रयेऽपि योजनामाह—अत्र हरिहरेत्यादि । पुनस्त्रैविध्यमाह—एष च शब्दा[1]र्थेति[2] । उदा[3]त्तादीति । लौकिकशब्देष्वपि स्वरभेदादेवार्थविगति । ताल्वोष्ठा[4] दिव्यापार[5] प्रयत्न अय[6] शब्दा[7]न्यत्वे हेतु । शब्दश्लेषे लिङ्गान्तरमाह[8]—यत्र प्रायेणेति । अर्थश्लेषस्तु अन्यथेत्याह[9]—अत एवेति । उभयश्लेष[10]माह—सङ्कलनयेति ।

उभ[11]यश्लेषमुदाहरति—रक्त[12]च्छ[13]दत्वमिति । [14]छदो दल[15] वासश्च । विकचा विकस्वरा,[16] कच[17]रहिताश्च । जलैस्सङ्गत नालमादधाना जडजनै[18]सख्यमल [19]नादधाना । [20]पुष्पेषु कुसुमान्तरेषु [21]रुचिं शोभा पुष्पचापप्रियता[22] च । उभयश्लेषता दर्शयति—अत्र रक्तेत्यादि । पृथगनुदाह[23]रणे हेतुमाह— ग्रन्थगौरवेति ।

अथास्य सावकाशनिरवकाशादिचर्चाम् आरभते—एष चेत्यादिना । अलङ्कारान्तरेष्वप्राप्तेषु अनारभ्यमाणोऽप्य[24] निरवकाशत्वात्[25] [26]बलीयानिति बाधित्वा तत्प्रतिभामात्र[27] मुत्पादयतीति केचित् । येन[28] ध्वस्तेति । अन्ये पुन "येन ध्वस्तमनोभवेने' ति

---

1 H शब्दे उदात्तेति 2 A C F अर्थादित्रेति 3 D उदात्यादी 4 C ताल्वो ष्ठादि 5 D E G व्यापार आयामो[I] र्गीक्ष्य मृदुती[II] स्वस्येति उर्द्ध करणानि[III] शब्दस्य। अन्ववमर्गो [IV]मार्दवमुस्वारवस्येति नीचै करणानि शब्दस्येति। अनुघितो गात्रायामादि प्रयत्न । (I D E G आयामो II D घृत्तताल्वस्यैव III D करणादि E G करणि IV D मर्गवमर) 6 Omitted in C 7 Except E all read अन्यत्व 8 D आह अत एवेति उभ 9 A's alt C H अन्यथे 10 A G H श्लेषमुदाहरति सक 11 D सकलनर्थे 12 A's alt रत्न 13 D पदत्व 14 C छदा 15 A C D F H दलानि 16 D विस्वस्व 17 A's alt कृप 18 A C शाख्य 19 A C H न दधा E F अल दधा C पुष्पे पु 20 Omitted in A C D F H I 21 A C H श्रिय 22 A C D G H I प्रिय च 23 C हरण 24 C. यत् 25 A त्वादेव 26 A's alt बलितानि च D E F G बलीतानि च 27 F आवहती 28 A C यन त्विति A's alt येनेति H येन त्विति

इति निरवकाशत्वाभावादन्यबाधकत्वमित्यन्यः सह सकरः। दुर्बलत्वाद्वा बाध्यत्वमित्यन्ये। तत्र पूर्वेषामभिप्रायोऽयम्—इह प्राकरणिकाप्राकरणिकोभयरूपानेकार्थगोचरत्वेन तावत्प्रतिष्ठितोऽयमलङ्कारः। तत्राद्य प्रकारद्वय तुल्ययोगितायाः विषयः। तृतीये तु प्रकारे दीपकं प्रभवतीति तावदलंकारद्वयमिद श्लेषविषयं व्याप्यावतिष्ठते। तत्पृष्ठे चालकारान्तराणामुत्थानमिति नास्ति विविक्तोऽस्य विषयः। अत एव चालङ्कारान्तराणां बाधितत्वात्प्रतिभामात्रेणावस्थानम्। "येन ध्वस्तमनोभवेन" इत्यादौ च प्राकरणिकत्वादर्थद्वयस्य तुल्ययोगितायाः प्रतिभानम्।

अलङ्कार्यालङ्करणभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तेः। "रक्तच्छदत्वम्" इत्यादावर्थद्वयाश्रितत्वादयमर्थालङ्कारः "नालम्" इत्यादौ शब्दद्वयाश्रितत्वाच्छब्दालङ्कारोऽयम्। यद्यपि "अर्थभेदे शब्दभेद" इति दर्शने

---

अलङ्कारान्तरविविक्तोऽस्य विषय इति सावकाशत्वादन्य[1]बाधक। अतोऽन्यसम्पात सङ्कर न्यायतो वा[2] दौर्बल्ये बाध्यत्वमित्याहु। तत्र स्वमतनिरवकाशत्व[3]माविष्किकीर्षुराह—तत्र पूर्वेषामित्यादि। अनेकार्थगोचरत्वेनेति प्रत्येकमभिसम्बन्ध। आद्य[5] प्रकारद्वय प्राकरणिकानेकार्थगोचरत्व अप्राकरणिकानेकार्थगोचरत्व[6] च। तदुभयमपि हि तुल्ययोगितायाः विषय। तस्याः प्रस्तुतानां वा समानधर्माभिसम्बन्धो लक्षणम्[7]। [8]यत्रोभयरूपानेकार्थगोचरत्व तृतीय प्रकार तत्र तु दीपक प्रभवति। तस्य प्रस्तुताप्रस्तुतानां समानधर्माभिसम्बन्धो[9] लक्षण यत। अत श्लेषविषयोऽनेना[10]लङ्कारद्वयेन व्याप्त। अलङ्कारान्त[11]रेणापि व्याप्यत इत्यत[12] आह—तत्पृष्ठे[13] चेति। अत इत्थ नास्य [14]विविक्तविषयता अतोऽलङ्कारान्तराणि [15]श्लेषबाधितानि प्रतिभा[16]मात्रावशेषाणि भवन्ति। इत्थ सति विविक्तो[17] यत्राङ्कितो विषय सोऽपि अविविक्त एवेत्याह—येन ध्वस्तेत्यादि। इत्थ निरवकाशत्वादन्यबाधकत्वमुपपाद्य शब्दार्थोभयविषयता[18]मस्य उपपत्त्या[19]पयितुमाह—अलङ्कार्येत्यादि। अलङ्कार्यालङ्करणभावा हि आश्रयाश्रयिभावेनोपपन्नौ[20] लोके [21]कर्णा[22]श्रित [23]कर्णालङ्कार इति। अतो रक्तच्छ[24]देत्यादावर्थाश्रयणादर्थालङ्कारोऽय, नालमित्यादौ[25] तु स्फुटशब्दभेद इति शब्दालङ्कार। ननु अर्थभेदे[26] शब्दभेदोऽपि भिन्न एवेति[27] रक्तच्छदमित्यादावपि न शब्दैक्यमित्यत आह—

---

1 A's alt अस्य 2 C पादा 3 D omits त्व 4. D त्व बलीतानि बाधित्वा आवि C. त्वमाह 5 D आद्यं प्राक 6 A D चरत्वात्तद् C गोचर 7 D तथा श्लेषविषयो 8 E F यत 9 E बन्धे 10 A अलङ्कारान्तराणि श्लेष 11 D अन्तरोऽपि 12 D इत्याह 13 F प्रतिष्ठे H तत्पत्ते 14 C विभक्त 15 C श्लेषा च तानि, 16 A C K मात्रवशे 17 D विविक्ततया विष F. विविक्ततया विष 18 A. C F H विषयत्व 19 H उपपादयि 20 A C. H उपपत्ते 21 A कण्ठाश्रित कण्ठालङ्कार कर्णा 22 D F कण्ठा 23 D F कण्ठा 24 C रक्तदेत्ये 25 F इत्यादौ तु शब्दभेद प्रतीत्य 26 A H भेदोऽपि भि 27 C वावेति

"रक्तच्छदत्वम्" इत्यादावपि शब्दाश्रितोऽयं तथाप्यौपपत्तिकत्वादत्र शब्दभेदस्य प्रतीतावेकत्वावसायान्नास्ति शब्दभेदः। "नालम्" इत्यादौ तु प्रयत्नादिभेदात्प्रातीतिक एव शब्दभेदः। अतश्च पूर्वत्रैकवृन्तगतफलद्वयन्यायेनार्थद्वयस्य शब्दश्लिष्टत्वम्। अपरत्र तु जतुकाष्ठन्यायेन स्वयमेव शब्दयोः श्लिष्टत्वम्। पूर्वत्रान्वयव्यतिरेकाभ्यां शब्दहेतुत्वाच्छब्दालंकारत्वमिति चेत्, न। आश्रयाश्रयिभावेनालंकारत्वस्य लोकवद् व्यवस्थानात्। एवञ्च,

"सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव" इत्यादौ न गुणक्रियासाम्यवच्छब्दसाम्यमुपमाप्रयोजकमपि तूपमाप्रतिभोत्पत्तिहेतुः श्लेष एवावसेयः। श्लेषगर्भे तु रूपके रूपकहेतुकस्य श्लेषस्य तृतीयकक्ष्याया रूपक एव

---

यद्यपीत्यादि। औपपत्तिकत्वादिति[1]। अयमयं शब्दभेद इत्युपपत्त्या हि शब्दभेदोपपादनम्[2]। प्रतीतौ पुनरैक्यमेवावसीयते। अत साहित्यसरणौ प्रतीत्यैक्य[3]सारत्वात् शब्दैक्यप्रतिपादकदर्शनावष्टम्भाच्च नास्ति[4] शब्दभेद[5]। नालमित्यादौ तु शब्दभेद प्रतीत्यनुरोधी। अतो रक्तच्छदमित्यादौ शब्दैक्यादेकवृन्त[6]गतफलद्वयन्यायेन[7] अर्थयो श्लिष्टता, नालमित्यादौ तु जतुकाष्ठन्यायेन शब्दयोरेव। रक्तच्छदमित्यादौ पुनरस्य दालङ्कारतामाशङ्कते[8]—पूर्वात्रान्वयेति। परिहरति—न। आश्रयेत्यादि। अलङ्कारत्व हि लोके[9] नान्वयव्यतिरेकाभ्या[10] व्यवतिष्ठते, अपि त्वाश्रयाश्रयिभावेनैव, इहापि तद्वदित्यर्थ.। एवमुभयालङ्कारता प्रसाध्य[11] बाध्यबाधकभाव[12]विवेचनमुपक्रमते—एव च[13] सकलेत्यादि। इत्य[14] निरवकाशत्वोभयालङ्कारत्व[15]सिद्धौ सकल[16]कलमित्यादौ श्लेष एव नोपमा। तत्र हेतु[17]—गुणक्रियासाम्यवत् शब्दसाम्य नोपमाप्रयोजकमिति। सुधांशुबिम्ब कलाभिरुपेत[18] पुर[19] तु [20]कलकलसहितमिति शब्दसाम्यमेवेह। अत उपमाप्रतिभोत्पत्तिहेतु श्लेष एवावसीयते। ननु निरवकाशत्वाच्छ्लेषश्चेद्बाधक, तर्हि[21] रूपकसमासोक्त्यो कुतो[22] न बाध इत्यत आह—श्लेषगर्भे[23]त्वित्यादि। रूपक हि [24]सिद्धश्लेषमु[25]त्थाप्य [26]स्वस्वरूप एव विश्राम्यतीति श्लेष[27]बाधक। तत्रापि यदि श्लेष [28] पूर्वसिद्धो[29] रूपकमुत्थाप्य

---

1 D इत्यर्थः 2 C. पादनम 3. D प्रतीत्यैक 4 E. चास्ति 5 D भेदा 6 C वृत्तान्त 7. A C न्यायेन शब्दयो 8 F. आलम्बते 9. A. C H लौकिके F. लौकिको 10 A C काभ्या व्यवति H रेका भाव्यनुति 11 C. साध 12 Except C E. others read भावमुप 13 Omitted in all except E G. 14 A. C H च निर 15 C कारत 16 A. C H सकलमि 17 A. F. हेतु [illegible] 18 A's alt. उपेत 19 C. पर 20 E. सकल 21 C. तर्हि 22 A. C. H. कुतोऽयबाध A's alt. कोऽनबोध. 22 A. E. F. गर्भेष्वि 23 G स्वसिद्ध्ये श्लेष 24 C. श्लेषमर्थ स्व 25. स्व omitted in D 26 A C. D E. श्लेषाबाधक 27. D श्लेषा 28 Except E. G others read. सिद्धरू 29 D रूपमु

विश्रान्तिरिति रूपकेण श्लेषो बाध्यते। श्लिष्टविशेषणनिबन्धनायां च समासोक्तौ विशेष्यांशस्य गम्यत्वाच्छ्लेषस्य बाधिका समासोक्तिः। इह तु

त्रयीमयोऽपि प्रथितो जगत्सु यद्वारुणीं प्रत्यगमद्विवस्वान्।
मन्येऽस्तशैलात्पतितोऽत एव विवेश शुद्धयै वडवाग्निमध्यम्॥

अत्र श्लोके विवस्वतो वस्तुवृत्तसम्भावि अधःप्रदेशसंयोगलक्षणं यत्पतितत्वं यश्च वडवाग्निमध्यप्रवेशस्ते द्वे अपि त्रयीमयसम्बन्धिवारुणीगमनरूपविरुद्धाचरणहेतुकाभ्यां पतितत्वाग्निप्रवेशाभ्यामतिशयोक्त्या श्लेषमूलया अभेदेनाध्यवसिते। सोऽयमेकक्रियायोगः। तद्धेतुका च मन्येऽत एव शुद्धय

यदि स्वरूपे विश्राम्यति तदा रूपक[1] बाध्यमेव यथा भ्रमिमरतिमित्यादौ। चर्चितं चैतत् रूपकप्रस्तावे।

रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद्यदि।
तदा[3] रूपकमेव स्याद्यथा श्लेष इष्यते॥ इति

श्लिष्टविशेषणेति। समासोक्तौ तु श्लिष्टविशेषणनिबन्धनायां विशेष्यांशस्य[4] गम्यत्वात् समासोक्तिरेव बाधिका[5]। श्लेष[6] हि वाच्यत्वमेव लक्षणम्। अतो लक्षणविकलत्वात् विशेषणे[7]ष्वाभातो[8]ऽपि बाध्य एव।

विशेषणान्तरेऽपि श्लेषस्य बाधकता दर्शयितुमाह—इह त्वित्यादि। जगत्सु[9] त्रयीमयत्वेन प्रथितोऽपि[10] विवस्वान् वारुणीं प्रति यद[11]गमत्[12]। वारुणी प्रतीची दिक् सुरा च। अत [13]एवास्तशैला(त्पतित [14])। पातित्य अधः प्रदेशसंयोग उपहृतिश्च[15] पतित[16]त्वादेव शुद्धयै वडवाग्निमध्यं विवेशेत्यर्थ [17]। व्याचष्टे—विवस्वतो वस्तुवृत्तेत्यादि। लोके[18] त्रयीमयस्य सता वारुणी[19]स्पर्शता[20] यौ पति[21]तत्वाग्निप्रवेशौ ताभ्यां श्लेषमूलया[22]ऽतिशयोक्त्या द्व[23] अपि विवस्व[24]त्क्रियेऽध्यवसित[25]। सोऽय[26] तत्क्रिया ([27]एकक्रिया)योगो नाम प्रतिशय[28]। [29]यद्यप्येकैव क्रिया कर्तृभेदभिन्ना सत्य[30]भेदेनाध्यवसिता[31] स तु तत्क्रिया ([32] एकक्रिया) योग [33], तद्धेतुकातिशयोक्तिहेतुका। अत्र[34] (उत्प्र[35])क्षायाम्[36]। अत

1 A C रूपकमेव 2 D पूर्वसिद्धान्त 3 A D F G H तथा 4 D अंशस्य ग 5 C बाधिक 6 A F H श्लेष वा C श्लेष वा 7 A C H पर्णष्वाह बाध्य F पर्णत्वात् भाता 8 D आटाता विया 9 C जगत्सुत्रयी 10 D थिता वि 11 A H अगात् 12 H अगात् अर्थं व्याचष्टे 13 Except D F others read अताऽस्त 14 All read पतित 15 D हर्तातिश्च 16 त omitted in D 17 A अर्थ 18 C लाक 19 C वारुणापुदरा 20 E स्पर्श 21 त omitted in D 22 D मूलाया 23 Omitted in A C H 24 A C H स्वन त्रय 25 C सिता 26 C साय 27 All mss तक्रिया 28 H शय अप्रस्तुतप्रशंसा 29 A अर्थक कक्रि C अर्थैकक्रि 30 A D F सती अ 31 D मितां। तत्क्रिया 32 A C यागस्त 33 All mss तक्रिया 34 A E F G यत्र 35 All mss चोत्प्रेना 36 A C D F H प्रेक्षायां त्र (P 128)

इत्युत्प्रेक्षा । अत्रात एवेति परामृष्टो विरोधालङ्कृतोऽर्थो हेतुत्वेनोत्प्रेक्ष्यते । शुद्धयै इति च फलत्वेन । ततश्च हेतुफलयोर्द्वयोरप्युत्प्रेक्षा । विरोधालङ्कारस्य च विरुद्धाभासत्वं लक्षणम् । अतो विरोधाभासनसमय एव हेतुफलोत्प्रेक्षयोरुत्थानम् । उत्तरकालं तु विरोधसमाधिः । श्लेषस्य सर्वालङ्कारापवादत्वाद्विरोधप्रतिभोत्पत्तिहेतुरयं श्लेषः ।

यत्र तु प्रस्तुताभिधेयपरत्वेऽपि वाक्यस्य श्लिष्टपदमहिम्ना वक्ष्यमाणार्थनिष्ठमुपक्षेपापराभिधानं सूचकत्वं तत्र किं श्लेष उत शब्दशक्तिमूलध्वनिरिति विचार्यते। तत्र न तावच्छ्लेषः अर्थद्वयस्यानन्वितत्वेनाभिधेयतया वक्तुमनिष्टेः। नापि ध्वनिः । उपक्षेप्यस्यार्थस्य संबन्धाभावात्तेन सहोपमानोपमेयत्वस्याविवक्षणात् । न चान्या गतिरस्ति । तदत्र किं कर्तव्यम् ? उच्यते श्लेषस्योक्त-

एवेति सर्वनाम्ना परामृष्टो[1] यो विरोधालङ्कारः विरुद्धचरणाभासरूप[2] तेनालङ्कृतोऽर्थं पातित्यरूप[3] हेतु[4]त्वेनोत्प्रेक्ष्यते । शुद्धयै इति च फलत्वेन । अतो हेतूत्प्रेक्षा फलोत्प्रेक्षा च[5] । विरोधालङ्कारोऽपि सम्पन्नलक्षण इत्याह—विरोधालङ्कारस्य चेति[6] । अतो विरोधोत्प्रेक्षालङ्कारयोस्तुल्यकालता[7] एकवृत्तान्त पा(ति[8])ता, उत्तरकाल तु विरोधोपशम[9] इति प्रतीतिक्रम । इत्थ[10] च सति श्लेष सर्वबाधकस्सन् विरोधालङ्कार बाधित्वा प्रतिभामात्रेणाव[11]स्थापयति । विरोधबाधे[12] च तद्धेतुकोत्प्रेक्षाबाध सिद्ध एवेत्याशय । अत[13] श्लेष एवायम् ।

यत्र तु[14] नाट्यादौ भा[15]व्यर्थोपक्षेपात्मक बीजन्यासलक्षण सूचकत्व तत्र मीमांसार्थमाह —यत्र त्वित्यादि । [16]प्रस्तुताभिधेयपरत्वेऽपि वर्तमाना[17]र्थनिष्ठत्वेऽपि । उपक्षेपापराभिधानमिति । उपक्षेप इति तस्य सज्ञा । यदाह—"बीजन्यास उपक्षेप" इति । अर्थद्वयस्येति । तत्रार्थ[18]द्वयमभिधागोचरत्वेनान्वितं वक्तु नेष्यते । किं तर्हि ? एकोऽर्थोऽभिधेय प्रस्तुत । वक्ष्यमाणस्तु सूच्य । अतो न श्लेष । इतरे[19] द्वयोरभिधेयत्वनियमात् नापि ध्वनि । कुत ? उपक्षेप्यस्य[20] भाव्यर्थस्य असम्बन्धेनौपम्या[21]विवक्षणात् । श्लेष[22]ध्वनिव्यतिरेकिणी गतिरपि नास्ति, तत्र किं कर्तव्यमित्याक्षेप । समाधत्ते—उच्यत इत्यादि[23] । श्लेषस्तु द्वयार्थान्वितत्वाभावात् सर्वथा[24] न प्रवर्तत इति ध्वनौ[25] एव विषयोऽयम् ।

1 A F मृष्टेन वि 2. C. रूपा 3 A C. D F G रूपस्मरे E. रूप च है 4. A. F G हेतुकत्वेन 5 Omitted in C 6 F. इति श्लेष । च 7. A कालान्तरेन कालेन्य विरो 8 All mss पाता 9 C. उपक्रम 10 C. एव 11 D. उपस्थाप 12. A C F बाधेन 13 D अन्तर 14 Omitted in A C. D 15 A's alt भाव्यर्थ 16 E. प्रस्तुताप्रस्तु 17 A. C D मानति 18 D E. तत्र हि अर्थ 19 D. E. श्लेष 20 A. C. अस्य सम्ब F अस्य भाव्यर्थस्य 21. A. C. F पम्यस्य वि 22. A F G श्लेषध्वन्योरपि C. श्लेषश्च न ध्व 23. C. आदि इयो 24 A. C सर्वथा 25 A's alt. C. पुन

नयेनाप्रवृत्तेर्ध्वनेरेवायं विषय इति निश्चिनुमः। तथा हि—शब्दशक्तिमूले हि ध्वनावर्थान्तरस्यासबद्धत्वात्सबन्धार्थमौपम्यं कल्प्यते। स च सबन्धः प्रकारान्तरेणौपम्यपरिहारेण यद्यप्युपपादयितुं शक्यः स्यात् तत्कोऽभिनिवेशस्तत्र? उपमाध्वनौ वस्तुध्वनिरपि संबन्धान्तरेण समीचीनः स्यात्। अत एव—

अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते।
प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा॥

इति न्यायभरनिबन्धेन द्विधा शब्दशक्त्युद्भव उक्तः। एवं प्रकृतेऽपि यत्र सूचनाव्यापारोऽस्ति तत्र शब्दशक्तिमूलो वस्तुध्वनिरवसेयः। यथा—

सद्यः कौशिकदिग्विजृम्भणवशादाकाशराष्ट्रं जवा-
त्त्यक्त्वा धूसरकान्तिवल्कलधरो राजास्तशैलं ययौ।
तत्कान्ताप्यथ सान्त्वयन्त्यलिकुलध्वानैः समुल्लासिभिः
क्रन्दन्तं कुमुदाकरं सुतमिव क्षिप्रं प्रतस्थे निशा॥

---

एतदुपपादयति—तथा[1] हीति। शब्दशक्तिमूले हि ध्वनौ वाच्यप्रतीयमानयो सम्बन्धाभावात् सम्बन्धायौपम्यक्लृप्तिः। स (च[2]) सम्बन्ध औपम्यानपेक्षया प्रकारान्तरेण यदि सूपपाद[3] तर्हि 'उपमाध्वनौ [4]कोऽभिनिवेश' ? न कार्य एव, यतो वस्तुध्वनिरपि तत्र विषये सम्बन्धान्तरेणोपपन्न। अत एव[6] ध्वनिकृता शब्दशक्तिमूलो[7] ध्वनि अलङ्काररूपो वस्तुरूपश्चेति द्विधा न्यायत उक्त—

अलङ्कारोऽथ वस्त्वेव शब्दाद्यत्रावभासते।
प्रधानत्वेन [8]स ज्ञेय शब्दशक्त्युद्भवो द्विधा॥ [9]इति॥

इत्थं च सति प्रकृतेऽपि सूचनस्य[10]सम्बन्धात् शब्दशक्तिमूलो वस्तुध्वनिरवसेय[11]।

अत्र[12] उदाहरणम्—सद्य कौशिकेति। हरिश्चन्द्रचरिते नाटके। कौ[13]शिकदिक् उलूकदिशा[14] हर्षात्मिका ते हि प्रभाते हर्षेण कूजन्ति। यद्वा कौशिक इन्द्र, तस्य दिक् प्राची[15] तद्विजृम्भणवशात्। प्रभाते हि प्राची प्रतायते। आकाश राष्ट्रम[16] इन्द्रया[17] त्य[18]क्त्वा वल्कलादिधूसरकान्तिधरश्चन्द्र अस्तशैलं ययौ। अथ तत्कान्तापि[19] निशा समुल्लासिभिरलि[20]कुलं क्रन्दन्तं सुतमिव कुमुदाकरं सान्त्वयन्ती[21] तेन सह क्षिप्रं प्रतस्थे।

---

1 A C D F. G. H I. तथार्थीति 2. All read चेम्बन्ध 3 A C F उपपादित 4 A's alt. C. तर्हि ध्वननौ अभि 5 G को नि 6 D E. G एव हि 7. D मूलो अल 8. C D सज्ञेय 9 Omitted in C 10. A C कन्ये 11 E. यवसेय 12. Omitted in A C F 13 A's alt. घृणिक 14 All except. C. दृशा 15 C. प्रार्थावनात् वि 16. C. मर्म 17. A C अंगुष्ठवर्याम्य 18 D अवक्या 19 D वितिशा 20 C. रवि 21 A's alt C त्यवंनि

इति हरिश्चन्द्रचरिते । अत्र प्रभातवर्णनानुगुण्येन राजशब्दाभिधेयेऽस्तमुपेयुषि चन्द्रे रोहिताश्वाख्यतनयसहितया औशीनर्या वध्वा युक्तस्य हरिश्चन्द्रस्य राज्ञो विश्वामित्रसपादितोपद्रववशात्प्रातः स्वराष्ट्रं त्यक्त्वा वाराणसीं प्रति प्रस्थानं सूचितम्। तथा च कौशिकशब्दः प्रकृते इन्द्रोलूकयोर्वर्तते । सूचनीयार्थविषयत्वेन तु विश्वामित्रवृत्तिः । वल्कलसुताभ्यामित्यौपम्यं सूचनीयार्थनैरपेक्ष्येण साहश्यसभवमात्रेण विश्रमणीयम्। अतः प्रकृतेन सूचनीयस्य सबन्धाच्छब्दशक्तिमूलो वस्तुध्वनिरयम् । इह च—

> आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे
> कण्ठे लग्नः सुकण्ठः प्रभवति कुचयोर्दत्तगाढाङ्गसङ्गः ।
> बद्धासक्तिर्नितम्बे पतति चरणयोर्यः स तादृक्प्रियो मे
> बाले ! लज्जा निरस्ता नहि नहि सरले ! चोलकः किं त्रपाकृत् ॥

इत्यलङ्कारान्तरविविक्तोऽप्ययं श्लेषस्य विषय इति नाशङ्कनीयम्। अपह्नुतेर्विद्यमानत्वात्। वस्तुतोऽपह्नवस्य साहश्यार्थंप्रवृत्तेर्नायमपह्नुत्यलकार

सूचनीये त्वयं विश्वामित्रक्रोधवशात् इच्छया[1] [2]राष्ट्रं त्यक्त्वा वाराणसीं प्रस्थित[3] । तत्कान्ताप्यौशीनरी[4] क्रन्दन्तं रोहिताश्वं[5] सुतं[6] सान्त्वयन्ती तेनैव सह [7]प्रस्थितेति । इह वस्तुध्वनिरेवेति दर्शयितुमाह—अत्र प्रभा[8]तेत्यादि । ननु धूसरकान्तिवल्कलेति सुतमिवेति च औपम्य[9]सम्बन्धस[10]द्भावात्[11] कथमय[12] वस्तुध्वनिरित्यत आह—वल्कलसुताभ्यामिति । सूचनीयार्थनैरपेक्ष्येण साहश्यं हि सभवति । प्रकृतार्थविषयत्वेन तावन्मात्रेण विश्रमणीयं सूचनीयेऽर्थे[13] अनुपयोगात् । अतः प्रकृतेन सह[14] सूचनीयस्य सूचनसम्बन्धाच्च शब्दशक्तिमूलो वस्तुध्वनिरेव । इत्थं सर्वत्र नाटकादौ ज्ञेयम् ।

अथ[15] अत्र न तुल्ययोगिता नापि दीपकं तत्रापि नास्त्यलङ्कारान्तरविविक्तोऽस्य विषय इति दर्शयितुं आह—इहेति । अत्र[16] विशेषणानां अलका[17]कर्षवक्त्रा[18]सञ्जनादीनां वल्लभपरतया प्रथमं प्रतीतिः । अथ इत्थं वदन्त्यास्ते लज्जा[19] प्रलीनेति सखीव्य[20]वहारे नहि नहीति अपह्नव[21] निह्नपूर्वस्तरं चूर्णितमूपत्तेन क्रियते । अत्र हि[22] न तुल्ययोगिता [23]दीपकं वा अतो विविक्तोऽयं श्लेषविषय इति न शङ्कनीयम् । तत्र हेतु— अपह्नुतेर्विद्यमानत्वादिति । चोदयति—वस्तुत इति । अपह्नवो हि वस्तुतस्साहश्यार्थं

1 A. C F G ईदृश 2. All except E राज्य 3 C स्थित इति 4 C औशीनरीं 5 C रोहित सुत 6 A D सुसान्त्व 7 प्र Omitted in C 8 A प्रभाहे A s alt प्रवाहे C प्रभावे 9 A C D G आर्षिय 10 A C D F सभव 11 D भवात् वस्तु 12 A. C कथमत्र प्रकृतार्थ 13 A C अर्थे तु प्रकृतलाभात् अप्रकृतेन 14 A C सह सूचनस्य 15 A अतोऽत्र 16 D अत्रापिहि 17 E. repeats अलका 18 D वक्त्राञ्ज 19 C लज्जा 20 D व्याहारे 21 Omitted in D E. 22 A C D नहि तु 23 D न दीपक

इति चेत्, न। उभयथाप्यपह्नुतेः संभवात्। सादृश्यपर्यवसायिना वापह्नवेनापह्नवपर्यवसायिना वा सादृश्येन भूतार्थापह्नवस्योभयत्र विद्यमानत्वात्।

साहृश्यव्यक्तये यत्रापह्नवोऽसावपह्नुतिः।
अपह्नवाय सादृश्य यत्राप्येषाप्यपह्नुतिः॥

इति संक्षेपः। आद्या स्वप्रस्ताव एवोदाहृता। द्वितीया तु संप्रति दर्शिता। तेनालकारान्तरविविक्तो नास्य विषयोऽस्तीति सर्वालङ्कारापवादोऽयमिति स्थितम्।

प्रस्तुतावप्रस्तुतावगतौ समासोक्तिरुक्ता। अधुना तद्वैपरीत्येनाप्रस्तुतात्प्रस्तुतप्रतीतावप्रस्तुतप्रशंसोच्यते—

**अप्रस्तुतात्सामान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रतीतावप्रस्तुतप्रशंसा ॥२४॥**

---

प्रवर्त्तते इह तु[1] सादृश्य अपह्नवाय प्रवृत्तमिति नायमपह्नव इति चोद्यम्। परिहरति—न उभयथाप्यपीति। भूतार्थस्य प्रकृतार्थस्य। प्रकृता[2]पह्नवो[3]ह्यपह्नुतिलक्षणम्। स चोभयथाऽपि सभवतीति अपह्नुति। अत्र सग्रहश्लोकमाह—सादृश्यव्यक्त इति। आद्या[4] सादृश्यपर्यवसाय्य[5]पह्नववत्(पा[6]) स्वप्रस्तावे अपह्नुतिप्रस्तावे। द्वितीयापह्नव पर्यवसायि सादृश्यारिमका। निगमयति—तेनालङ्कारान्तरेति।

शब्दसाम्य[8] भवेच्छ्लेषो विशेषणविशेष्ययो।
यद्येकोऽप्रकृतार्थश्चेत् भेदाशे[9] भिन्नशब्दता[10]॥
शब्दार्थोभयनिष्ठोऽय सर्वालङ्कारबाधक[11]।
[12]पूर्वसिद्धस्य[13] चेदङ्ग तदा न्यायेन बाध्यते॥

इत्थ न्यायनिर्भरतया [14]अनेन प्रपञ्चितोऽपि काव्यप्रकाशकृता प्रतिपद खण्डितोऽय श्लेषोऽ[15]लङ्कार[16]। खण्डनयुक्[17]यस्तु मनीषितया[18]अह लिख्यन्ते[19]। सम्प्रदायप्रका-[20]शिन्यां तु काव्यप्रकाशटीकाया वितत्य दर्शिता इति तत [21]एवावधार्या।

अप्रस्तुतप्रशसा[22] लिलक्षयिषु विशेषणविच्छित्तिसङ्गतिमभ्यास्ते[23] राङ्गत्यन्तर दर्शयति—प्रस्तुतादप्रस्तुतेत्यादि। तत्र सूत्रम्[24]—अप्रस्तुतात् सा[25]मान्यविशेषभावे कार्यकारणभावे सारूप्ये च प्रस्तुतप्रतीता[26]वप्रस्तुतप्रशसा[27]। सामान्यविशेषभावादि

---

1 Omitted in A C 2 A. C प्रकृतो E. प्रकृतार्थोप 3 A's alt C द्वयोस्या पनयति स 4 A C F अन्यथा D आद्यापर्य 5 A C F सार्य 6 All mss except C रूपं C रूपस्य प्र 7 D द्वय पूव प 8 A साम्ये 9 A G गम्यांशे 10. D शब्द 11. D बाधक 12. E सर्व 13 D स्य अङ्ग 14 A C G तेन 15 D श्लेषात्म 16 C कारस्य 17. C वस्तु 18 D विग्य 19 C लिख्यते 20 A D F प्रदर्शिन्यां 21 D F. एव स्थितास्य 22 D प्रशसा 23 Except E all read समासो 24 F सूत्र प्रस्तुतादित्यादि। सामा 25 D repeats सामान्यविशेष 26 D तायप्रस्तु अप्रस्तु 27 D प्रशसा स्या (P 133)

इहाप्रस्तुतस्य वर्णनमेवायुक्तमप्रस्तुतत्वात्। प्रस्तुतपरत्वे तु कदाचित्तद्युक्तं स्यात्। न चाप्रस्तुतादसंबन्धे प्रस्तुतप्रतीतिः अतिप्रसङ्गात्। संबन्धे तु भवन्ती न त्रिविधं संबन्धमतिवर्तते। तस्यैकार्थान्तरप्रतीतिहेतुत्वोपपत्तेः। त्रिविधश्च संबन्धः—सामान्यविशेषभावः कार्यकारणभावः सारूप्यं चेति। सामान्यविशेषभावे सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्य प्रतीतौ द्वैविध्यम्। कार्यकारणभावेऽप्यनयैव भङ्ग्या द्विधात्वम्। सारूप्ये त्वेको भेद इत्यस्याः पञ्च प्रकाराः, तथापि सारूप्यहेतुके भेदे साधर्म्यवैधर्म्याभ्यां द्वैविध्यम्। वाच्यस्य संभवासंभवोभयरूपताभिश्च त्रयः प्रकाराः। श्लिष्टशब्दप्रयोगे त्वर्थान्तरस्यावाच्यत्वाच्छ्लेषाद्विशेषः श्लेषे ह्यनेकस्यार्थस्य वाच्यत्वमित्युक्तम्। तत्र सामान्याद्विशेषप्रतीतौ यथा—

*तण्णत्थि किंपि पइणो पकप्पिअं जंण णिअइघरणीए।*
अणवरअगमणसीलस्स कालपहिअस्स पाहिज्जम्॥

अत्र प्रहस्तवधे विशेषे प्रस्तुते सामान्यमभिहितम्। विशेषात्सामान्यप्रतीतौ यथा—

---

सबन्धावलम्बेनाप्रस्तुतात् प्रस्तुतावगतौ अप्रस्तुतप्रशसा। व्याचष्टे—इहाप्रस्तुतस्येति। नह्यप्रस्तुत प्रस्तुतपरत्वाभावे वर्णनीयम्[1], [2]अप्रस्तु[3]तत्वात्। प्रस्तुतप्रत्यायक च सम्बन्धाभावे न घटते अतिप्रसक्ते। प्रतीतिहेतुश्च सम्बन्ध त्रिधैव[4] सामान्यविशेष्य[5]भाव. *कार्यकारणभाव सारूप्य चेति। तत्र सामान्याद्वि[6]शेषस्य विशेषाद्वा[7] सामान्यस्य प्रतीति*रिति द्वैविध्यम्[8]। एव कार्यकारणभावेऽपि। सारूप्ये तु यद्यपि नैवम्, अतः पञ्चप्रकारा। तथापि साधर्म्य[9]वैधर्म्याभ्या द्वैविध्य [10]भेदान्तर[11]वत्सारूप्येऽपि। अथ सर्वैव वाच्यस्य[12] सभवेन[13] उभयरूपतया चेति त्रिधा। [14]श्लिष्टशब्दप्रयोगे तु श्लेषेण न बाध्यते प्रस्तुतस्या[15]वाच्यत्वात्। तण्ण[16]त्थीत्यादि।

तन्नास्ति किमपि (पत्यु [17]प्र) कल्पित(यन्न[18]नियति)गृहिण्या[19]।
अनवरतगमनशीलस्य कालपथिकस्य पाथेयम्[20]॥

व्याख्यात प्राक्। सामान्याद्विशेषप्रतीतिं दर्शयति—अत्र प्रह[21]स्तेत्यादि।

---

1. D नीय 2 F. omits अ. 3. A C D. G. स्तुतपरत्वात् 4 A. D F. नैवं 5 D विशेष 6. A. E H. याद्वा विशे 7 D. Omits वा 8. D विध्यं साधर्म्यं 9. C. धर्म्याभ्या 10 A. E G अभेदा 11 C वत्वाद्रूप्ये 12. A. D. E F. वाच्यस 13 D. भवेन रूप 14 C श्लेष 15 H. स्वात्। सद्वा 16. D. तण्णन्यीति E. तणहहीण्या 17. All mss. पत्युरिव 18 All read यन्निजगृ 19. A. C. F. G H. गृहेभ्योनव 20. A's alt C. पाथेयम्याख्या 21. D प्रगस्य

एतत्तस्य मुखात्कियत्कमलिनीपत्रे कणं पाथसः
यन्मुक्तामणिरित्यमस्त स जडः शृण्वन्यदस्मादपि।
अङ्गुल्यग्रलघुक्रियाप्रविलयिन्यादीयमाने शनैः—
स्तत्रोड्डीय गतो ममेत्यनुदिनं निद्राति नान्तः शुचा॥

अत्र जडानामस्थान एव अभिनिवेश इति सामान्ये प्रस्तुते विशेषोऽभिहितः। कारणात्कार्यप्रतीतौ यथा—

पश्याम किमियं प्रपद्यत इति स्थैर्यं मयालम्बितं
किं मां नालपतीत्ययं खलु शठः कोपस्तयाप्याश्रितः।
इत्यन्योन्यविलक्षदृष्टिचतुरे तस्मिन्नवस्थान्तरे
सव्याजं हसितं मया धृतिहरो बाष्पस्तु मुक्तस्तया॥

अत्र तया धाराधिरूढो मानः कथं निवृत्त इति कार्ये प्रस्तुते निवृत्तिकारणमभिहितम्। कार्यात्कारणप्रतीतौ यथा—

---

एतत्तस्येति। तस्य मुखात् एतत् कियत्। वक्ष्यमाणस्य जाड्या[1]पेक्षया जाड्यमस्य अल्पकमित्यर्थः। एतदित्युक्तम्। किं तत् ? कमलिनीपत्र पाथसः कणं मुक्तामणिरित्यमस्तेति यत्। एवं मन्ता[2] नातिजड[3] इत्यर्थः। स एवातिजडः यस्तु मुक्तामणिधिया[4]ऽऽदीयमाने तत्र पाथः कणे अङ्गुल्यग्रक्रियाप्रविल[5]यिनि सति मम[6] मणिरुड्डीय गत इति अन्तश्शुचा न निद्राति। अत्र विशेषात्सामान्यप्रतीतिं दर्शयति[7]—अत्र जडानामिति।

पश्याम इति—सुहृदा[8] सह नायिकावृत्तान्तोपवर्णनरूपा नायकोक्तिरियम्। किमियं प्रपद्यत[9] इति पश्याम इति धिया सलापपरि[10]हारादिरूपं स्थैर्यं मया[11]ऽवलम्बितम्। तया तु "अयं खलु शठः [12]मां न किमप्यालपतीति" कोपः आश्रितः। इत्यन्योन्यवैल[13]क्ष्येन दर्शनचतुरे [14]तस्मिन्नवस्थान्तरे मया व्याजेन हसितं, [15]तयाऽपि धैर्यहरो बाष्पो मुक्तः[16]। उद्बाष्पाया तस्या धैर्यमेव[17] मुक्तमित्यर्थः। अत्र कारणात्कार्यप्रतीतिं दर्शयति—अत्र तया[18] धाराधिरूढे[19]ति। माननिवृत्तिकार्ये प्रस्तुते बाष्पमभिहितम्[20] अप्रस्तु[21]तत्वेन विवर[22]णीयम्।

---

1 C जा आवेक्ष 2. A's alt. मर्ता ? C H मत्वा 3 H जन स्य इ 4 A C D F G H I धिया दीय 5 C विलयादि 6 E G मम्मणि 7. D यतीति 8. C. सहृदा 9 A C इति धिया 10 E. F परित्यागादि 11 A E F G H मनावक 12 A C F मामयं किमपि भाल H मानिन कि 13 A D E येषा 14 H. तस्राव 15 D E F G तया च अम तयाविध धै 16 H मुक्त-विगलितायित (P 137) 17 E. F G धैर्य धौर्य मु D धैर्य वयमु 18. A C कदा धारेऽपि D तया धारेति 19 A's alt omits इति 20 C हितम्यमम 21 D स्तुतेन 22. C वत्तयन्

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा।
कार्कश्यं कलयापि कोकिलवधूकण्ठेष्विव प्रस्तुतं
*सीतायाः पुरतश्च हन्त ! शिखिना बर्हाः सगर्हा इव ॥*

अत्र सभाव्यमानैरिन्द्वादिगतैरञ्जनलिप्तत्वादिभिः कार्यरूपैरप्रस्तुतैर्लोकोत्तरवदनादिगतं सौन्दर्यातिशयं कारणरूपः प्रस्तुतं प्रतीयते। तेनेयमप्रस्तुतप्रशसा। ननु कार्यात्कारणे गम्यमानेऽप्रस्तुतप्रशसायामिष्यमाणायां—

येन लम्बालकः सास्रः कराघातारुणस्तनः।
अकारि भग्नवलयो गजासुरवधूजनः॥

इति। तथा—

चक्राभिघातप्रसभाज्ञयैव चकार यो राहुवधूजनस्य।
आलिङ्गनोद्दामविलासवन्ध्यं रतोत्सवं चुम्बनमात्रशेषम्॥

इत्यादौ सुप्रसिद्धे पर्यायोक्तविषयेऽप्रस्तुतप्रशसाप्रसङ्गः। अत्र हि गजासुरवधूगतेन लम्बालकत्वादिना कार्येण कारणभूतो गजासुरवधः प्रतीयते। तथा राहुवधूगतेन चिशिष्टेन रतोत्सवेन राहुशिरश्छेदः कारणरूपो गम्यते। एवमन्यत्रापि पर्यायोक्तविषये ज्ञेयम्। तस्मादप्रस्तुतप्रशसाविषयत्वात्पर्यायोक्तस्य निर्विषयत्वप्रसङ्गः। नैष दोषः। इह यत्र कार्यात्कारण प्रतीयते

---

इन्दु[1]रिति—इन्दुरञ्जनेन[2] लिप्त इवे[3]त्यनेन मुखस्य सौन्दर्यं, मृगीणा दृष्टिर्जडि[4]तेवेति इक्चाञ्चल्यं विद्रुमदल प्रम्ला[5]नारुणिमेवेति अधरप्रभा, कोकिलवधूकण्ठेषु कार्क[6]श्य प्रस्तुतमेवेति स्निग्धकण्ठता, बर्हास्सगर्हा इवेति च[7] केशभारवैपुल्यं प्रतीयते। [8]कार्यात्कारणप्रतीतिं दर्शयति—अत्र सभाव्यमानैरित्यादि। सभाव्यमानैरुत्प्रेक्ष्यमाणैः। अनातिव्याप्तिमाशङ्कते—ननु कार्यादित्यादि।

येन लम्बालक इति—अत्र लम्बालकत्वादिना कार्येण गजासुरवधरूपकारणप्रतीति।

चक्राभिघातेति—अत्र[10] रतस्यालिङ्गनवन्ध्यत्व[11]चुम्बनमात्रशेषत्वरूप[12]कार्यभेदाद्राहुशिरश्छेद कारणम्। अत्रातिव्याप्तिं दर्शयति—अत्र हीत्यादि। परिहरति—नैष दोष इति। द्वयो[13]रपि प्रस्तुतत्वे कारणापेक्षया कार्योपवर्णनस्य सचमत्कारत्वे तद्द्वारा[14] कारणप्रत्यायन पर्यायोक्तविषयः। कार्यस्या[15]प्रस्तुतत्वे त्वप्रस्तुतप्रशंसाया इति

---

1 Omitted in A C D E 2 [illegible] विलिप्त 3 C इत्य 4 A. C चकितेरे F जनितमेने 5 A प्रम्लाना D प्रमला लारु 6 C कार्य 7 Omitted in A C E F 8 C कार्यकार 9 A C F G omit आ 10 A's alt अतारत 11. A C F G omit त्व 12 E. कार्य 13 A C F द्वयोरप्र 14 रा omitted in D 15 D अयस्ते अ

तत्र कार्यं प्रस्तुतमप्रस्तुतं चेति द्वयी गतिः। एवं यत्र प्रस्तुतत्वं कार्यस्य कारणवत्तस्यापि वर्णनीयत्वात्तत्र कार्यमुखेन कारणं पर्यायेणोक्तमिति पर्यायोक्तालङ्कारः। तत्र हि कारणापेक्षया कार्यस्यातिशयेन सौन्दर्यमिति तदेव वर्णितं यथोक्तोदाहरणद्वये। अत्र हि गजासुरवधूवद्गजासुरवधूवृत्तान्तोऽपि भगवत्प्रभावजन्यत्वात्प्रस्तुत एव। एवं राहुवधूवृत्तान्तोऽपि ज्ञेयम्। ततश्च नायमप्रस्तुतप्रशंसाविषयः। यत्र पुनः कारणस्य प्रस्तुतत्वे कार्यमप्रस्तुतं वर्ण्यते तत्र स्पष्टैवाप्रस्तुतप्रशंसा। यथा "इन्दुर्लिप्त इव" इत्यादौ। अत्र हीन्द्वादयः स्फुटमेवाप्राकरणिकाः। तत्प्रतिच्छन्दभूतानां मुखादीनां प्राकरणिकत्वात्। तेनात्रेन्द्वादिगतेनाञ्जनलिप्तत्वादिनाप्रस्तुतेन प्रस्तुतं मुखादिगतं सौन्दर्यं सहृदयहृदयाह्लादि गम्यत इत्यप्रस्तुतप्रशंसैवासौ। एवञ्च यत्र वाच्योऽर्थो अर्थान्तरं तादृशमेव स्वोपस्कारकत्वेनागूरयति, तत्र पर्यायोक्तम्। यत्र पुनः स्वात्मानमेवाप्रस्तुतत्वात्प्रस्तुतमर्थान्तरं प्रति समर्पयति, तत्राप्रस्तुतप्रशंसेति निर्णयः। ततश्चानया प्रक्रियया,

> राजन्राजसुता न पाठयति मां देव्योऽपि तूर्ष्णीं स्थिताः
> कुब्जे ! भोजय मां कुमार ! सचिवैर्नाद्यापि किं भुज्यते।
> इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
> च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते॥

इत्यत्र पर्यायोक्तमेव बोद्धव्यम्। अन्ये तु दण्डयात्रोद्यतं त्वां बुद्ध्वा त्वदरयः पलाय्य गता इति कारणरूपस्यैवार्थस्य प्रस्तुतत्वात्कार्यरूपोऽर्थोऽप्रस्तुत एव, राजशुकवृत्तान्तस्याप्रस्तुतत्वात्प्रस्तुतार्थं प्रति स्वात्मानमर्पयतीत्यप्रस्तुतप्रशंसे-

---

विभाग। विभक्त[1]विषयतया निगमयति—एव मन्येत्यादि। तादृशमेव,[2] प्रकृतमेव। आ[3]गूरयति सामर्थ्यादानयति।

इत्थं च सति प्रकृ[4]त[5]स्य मनोऽर्थस्य[6] स्वोपस्काराय प्रकृतान्तरा[7]गूरणे पर्यायोक्तमेवेति प्रथनाय[8] पुनराह—ततश्च अनयेत्यादि। राजन्निति। कुब्जा शुक[9]भोजननियुक्ता। कुमारेति[10] सम्बोधनम्[11]। तव[12]रिवास्तगज्याधिकारिण। राजशुकः श्रेष्ठशुक[13]। अत्र[14] राजशुकवृत्तस्यापि नायकप्रतापाङ्गतया प्रकृतत्वात् पर्यायोक्तमेव बोद्धव्यम्। अन्येषां हृदयमाह—अन्ये त्विति। कारणरू[15]पस्य अरिपलायनलक्षणस्य। ईदृशि विषये अन्येषामप्रस्तुतप्रशंसामात्र[16]बुद्धावपि न विरोधः कश्चित्। द्वयोः प्रस्तुतत्वे पर्यायोक्तम्[17]।

---

1 A's alt. विभाग 2 D. G एव आग् 3. A. C. F. आनयति सा 4. E. प्रस्तुत 5 C. कृतस्थितार्थस्य 6. A. omits स्य E. मोप 7. A. C. नरारम्भ A's alt नराश्रयणे 8 H साय राजशुक- 9 D. शुकवृत्तान्तस्यापि सो 10 C. इति राज 11. A. F. धन राज 12 D. गहिता समत्र 13 A. C D E. शुकस्याद्भुतस्य स्व सा 14. G. मत्र 15. A. रूपरिग 16. C. मात्र 17. A. योक्त-

वात्र न्याय्येति वर्णयन्ति। सर्वथा पर्यायोक्ताप्रस्तुतप्रशंसयोर्विषयविभागः सुनिरूपित एवेति स्थितम्। सारूप्ये यथा। *एतानि साधर्म्योदाहरणानि। वैधर्म्येण यथा—

धन्याः खलु वने वाताः कल्हारस्पर्शशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः॥

अत्र वाता धन्या इत्यप्रस्तुतादर्थादहमधन्येति वैधर्म्येण प्रस्तुतोऽर्थः प्रतीयते। वाच्यसंभवे उक्तान्येवोदाहरणानि। असंभवे यथा—

कस्त्वं भोः कथयामि दैवहतकं मां विद्धि शाकोटकं
वैराग्यादिव वक्षि साधु विदितं कस्मादिदं कथ्यते।
वामेनात्र वटस्तमध्वगजनः सर्वात्मना सेवते
न च्छायापि परोपकारकृतये मार्गस्थितस्यापि मे॥

अत्राचेतनेन सह प्रश्नोत्तरिका नोपपन्नेति वाच्यस्यासंभव एव। प्रस्तुतं प्रति तात्पर्यात्प्रमुख एव तदध्यारोपितत्वप्रतीतेर्युज्यत एवैतत्। उभयरूपत्वे यथा—

---

कार्यस्याप्रस्तुतत्वे[1] तु अप्रस्तुतप्रशंसेति विभागस्याना[2]कूलत्वात् इत्यभिप्रायेणाह—[3]सर्वथेति। अथ एतानि साधर्म्योदाहरणत्वेन[4] विज्ञेयानीत्याह—एतानि साधर्म्य इति।

वैधर्म्ये[5] तु उन्नेयानि। सारूप्यहेतुक तु भेदम् अनया नीत्या साधर्म्येण मुशान[6]त्वां वैधर्म्येणोदाहरति—धन्या इति। [7]वैधर्म्यं दर्शयति—अत्र वाता इति। वाच्यसभवे[8] पृथड्नोदाहर्तव्यानी[9]त्याह—वाच्येति। कस्त्वं भो इति। कस्त्वमिति पृष्ट[10]शाकोटकतरु[11]र्वक्ति—भोः कथयामीत्यादि। [12]तत्र पुनः प्रश्न—वैराग्यादिव[13] वक्षीति। तत्रोत्तर—साधु विदितमिति[14]। अथ कस्मादिदमिति[15]प्रश्नेऽवशिष्टम् उत्तरम्[16]। असभवं दर्शयति—अत्रा[17]चेतने[18]नेति। नन्वेवमसभ[19]वत्व प्राप्तमित्यत आह—[20]प्रस्तुतं प्रतीति। [21]प्रमुख एव [22]शाकोटकवृत्तस्य आरोपितत्व[23]प्रतीतेर्युज्यत एवासम्भवः वाच्यस्य अहत्स्वार्थलक्षणामूलत्वेन अत्यन्ततिरस्कारात्[24]।

---

1. D रंस्ऽतः अप्र 2. A. E. अनुकू D. अनाकलनत्वात् 3. A's alt. C. सर्वदा 4. A. C. D त्वेनापि ज्ञे 5. A. C. F. G. धर्म्ये उ 6. A. C. F. G. ज्ञात 7. E. अत्र वै 8. E. संभवः 9. D. इत्यत आह 10. A. C. F. G. प्रष्टव्यस्य शा 11. F. तरुः व्यक्तिविशेषः भोः 12. A. C. अत्र 13. A. इव वक्ष्यति A's alt. दि विवक्षति C. इव वक्ष्यति 14. D. इति प्रमुख 15. E. प्रश्नो 16. F. त्तरं प्रमुख 17. A's alt. अत्वचे 18. A. F. चेतनेति नेति 19. C. संगतित्वं 20. A. C. D. F. अप्रस्तुत 21. A. C. omit प्र 22. A C. E. एवास्याहो ईदग्वृत्तस्य H. एवास्याहो ईदग्वृक्षस्य 23. E. omits त्व 24. A. C. काराद्वा

* Samudrabandha has this bit and having attested to the fact of the loss of Ruyyaka's illustrations, adds his own. But see Jayaratha who says this is an interpolation.

* This line in the Sañjīvanī is incomplete; a word like 'अनुदाहृत्य' is required here.

अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः।
कथं कमलनालस्य मा भूवन्भङ्गुरा गुणाः॥

अत्र वाच्येऽर्थे कण्टकानां गुणभङ्गुरीकरणे* हेतुत्वमसंभवि छिद्राणां तु संभवि इत्युभयरूपत्वम्। प्रस्तुततात्पर्येण प्रतीतेस्तदध्यारोपात्तत्र संगतमेवैतदिति नासमीचीनं किञ्चित्। एतदेव च श्लेषगर्भायामस्यामुदाहरणम्। तदत्र सामान्यविशेषत्वेन कार्यकारणत्वेन सारूप्येण च यद्भेदपञ्चकमुद्दिष्टं, तत्र द्वयोः सामान्यविशेषयोः कार्यकारणयोश्च यदा वाच्यत्वं भवति, तदार्थान्तरन्यासाविर्भावः। सरूपयोस्तु वाच्यत्वे दृष्टान्तः। अप्रस्तुतस्य वाच्यत्वे प्रस्तुतस्य गम्यत्वे सर्वत्राप्रस्तुतप्रशंसेति निर्णयः।

---

अन्तश्छिद्राणीति—छिद्राणि रन्ध्राणि मन[1]र्मद्वाराणि च। कण्टकाः पुलका[2] विघा[3]तकाश्च। अत्र वाच्येऽर्थे छिद्राणि[4] गुणभङ्गु[5]रीभावे हेतुरित्युभयरूपता। प्रस्तुत[6]तात्पर्येण प्रतीतेः तदध्यारोपात् सङ्ग ([7]त) मेव। तदिदमाह—अत्र वाच्य इत्यादि। श्लेषगर्भत्वे चैतदेव द्रष्टव्यम् [8]छिद्रकण्टकगुणानां श्लिष्टत्वादित्याह—एतदेव चेति। [9]अस्यार्थान्तरन्यासदृष्टान्ताभ्यां विषयविवेकं दर्शयति—त[10]दत्रेति। अर्थान्तरन्यासे[11] हि सामान्यविशेष्ययोः कार्यकारणयोश्च[12] वाच्यत्वं (दृष्टा[13]न्ते तु) सरू[14]पयोः[15]वाच्यत्वम्। सर्व[16]त्रैव प्रस्तुतस्य गम्यत्वे अप्रस्तुताभिधाना[17]दप्रस्तुतप्रशंसैव।

अप्रस्तुतप्रशंसा तु प्रस्तुतावगमोऽन्यतः।
सा[18] सामान्यविशेषादिविच्छित्त्या पञ्चधा मता[19]॥

भवेत्साधर्म्यवैधर्म्ययोगतस्सा[20] पुनर्द्विधा।
संभवे[21]ऽसंभवे[22]द्वैधे वाच्यस्याथ पुनस्त्रिधा[23]॥

प्रस्तुत[24]स्यावगम्यत्वात्पर्यायोक्ताद्विभिद्यते।
इयमर्थान्तरन्यासाद्[25] दृष्टान्ता[26]लङ्कृतेरपि॥

---

1. A. C. अर्थाद्वा 2. C. कादि घातुका 3. A. C. F. घातुका 4. E. न गुण 5. A. भङ्गुरि 6. A. C. F. स्तुतत्वात् पर्यायेण 7 All mss. सङ्गतत्वमेव 8. C. छुद्र 9 Omitted in A. C. F. G. 10. A. C. D. तदर्थेति 11. D. न्यासेन हि 12. C. Omits च 13. All mss. दृष्टान्तयति स्वरू 14. All except. D. स्वरूप 15. मर्वस्यैव 16 C. धानाद पद प्र 17. and 18. omitted in D. 19. D. साधु पुनः 20. A's alt. F. भवासं˙ ˙ 21. A's alt. C. भवेऽयेतद्वाच्यः 22. A. F. त्रिधा अर्थान्तर 23. A. स्तुताय 24 C. Omits त 25 D. E. न्याम ह 26. A. C. F. मन्तकृताऽपि

*. The reading adopted in the N. S. ed. as हेतुत्वं संभवि छिद्राणां त्वसंभवीति is evidently wrong.

उक्तनयेन प्राप्तावसरमर्थान्तरन्यासमाह—

सामान्यविशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यासः ॥३७॥

निर्दिष्टस्याभिहितस्य समर्थनार्हस्य प्रकृतस्य समर्थकात्पूर्वं पश्चाद्वा निर्दिष्टस्य यत्समर्थनमुपपादनं, न त्वपूर्वत्वेन प्रतीतिरनुमानरूपा सोऽर्थान्तरन्यासः। तत्र सामान्यं विशेषस्य विशेषो वा सामान्यस्य समर्थक इति द्वौ भेदौ। तथा कार्यं कारणस्य, कारणं वा कार्यस्य समर्थकमित्यपि द्वौ भेदौ। तत्र भेदचतुष्टय प्रत्येकं साधर्म्यवैधर्म्याभ्यां भेदद्वयेऽष्टौ भेदाः। हिशब्दाभिधानानभिधानाभ्यां समर्थकपूर्वोपन्यासोत्तरोपन्यासाभ्यां च भेदान्तरसंभवेऽपि न तद्गणना सहृदयहृदयहारिणी वैचित्र्यस्याभावात्। तस्माद्भेदाष्टकमेवेहोट्टङ्कितम्। क्रमेण यथा—

अनन्तरत्नप्रभवस्य यस्य हिमं न सौभाग्यविलोपि जातम्।
एको हि दोषो गुणसन्निपाते निमज्जतीन्दोः किरणेष्विवाङ्कः॥

लोकोत्तरं चरितमर्पयति प्रतिष्ठां
पुंसां कुलं न हि निमित्तमुदात्ततायाः।
वातापितापनमुनेः कलशात्प्रसूति-
र्लीलायितं पुनरमुष्य समुद्रपानम्॥

---

अ[1]र्थान्तरन्यासार्थ[2] सङ्गतिमाह—उक्तनयेनेति। सामान्यविशेषा[3]दिसम्बन्धयोग उक्तो[4] नय.। तत्र सूत्रम्—सामान्य[5]विशेषकार्यकारणभावाभ्यां निर्दिष्टप्रकृतसमर्थनमर्थान्तरन्यास.। आभ्या सम्बन्धाभ्या समर्थ्यत्वेन निर्दिष्टस्य प्रकृतस्य समर्थनमर्थान्तरन्यास इत्यर्थ.। व्याचष्टे—निर्दिष्ट[6]स्येत्यादि। समर्थना[7]र्हस्य न[8] तु समर्थननिर[9]पेक्षस्य। समर्थकात्पूर्वं पश्चाद्वेति पूर्वपश्चाद्भावे कामचार उक्त। न त्वपूर्वत्वेनेति। निर्दिष्टत्वेनैव प्रतीतिर्नत्वपूर्वत्वेन। अपूर्वत्वे को दोप इत्यत आह—अनुमानरू[10]पेति। तथा प्रतीतावनुमानरूपत्वमेव प्रसजेदित्यर्थ.[11]। भेदान् मचष्टे—तत्र सामान्यमित्यादि। सभवतोऽपि वैचित्र्यविरहिणो [12]भेदानपोहति—हिशब्देत्यादि। उट्टङ्कित निष्टङ्कितम्।

अनन्त[13]रत्नेति—सन्नि[14]पातो बहूना सङ्घात.। अत्र गुणसन्निपाते दोपनिमज्जनलक्षण सामान्य साधर्म्येण विशेपसमर्थकम्। लोकोत्तरमिति। पुसा लोकोत्तर चरितमेव

---

1. A C. F. read अर्थान्तर to निर्दिष्टप्रकृत after पुनर्द्विधा (p 138) and then read the कारिका प्रस्तुतस्याच etc (ibid) 2 A. C. F. G. अर्थं 3 F. शेपस 4 A C D E. उक्तोऽयम् 5 F. सामान्येति आभ्या 6 E. दिष्टेत्यादि 7. C. अर्थस्य 8 Omitted in A. C G. 9 C. निर्वंप 10 A C. रूपत्वेति F. रूपतेति 11. A C. अर्थ तत्र 12. A's alt. C अभिधानमयो 13 A's alt C. अन्यतरतेति 14. A. Omits सन्

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव संपदः ॥

अत्र सहसाविधानाभावस्य विमृश्यकारित्वरूपस्य संपद्वरणं कार्यं साधर्म्येण समर्थकम् । तस्यैवैतत्कार्यविरुद्धत्वमापत्पदत्वं सहसाविधानाभावविरुद्धाविवेककार्यं वैधर्म्येण समर्थकम् ।

पृथ्वि ! स्थिरीभव ! भुजङ्गम ! धारयैनां
त्वं कूर्मराज ! तदिदं द्वितयं दधीयाः ।
दिक्कुञ्जराः ! कुरुत तत्त्रितये दिधीर्षां
देवः करोति हरकार्मुकमाततज्यम् ॥

अत्र हरकार्मुकाततज्यीकरणं पृथ्वीस्थैर्यादिप्रवर्तकत्वे कारणं समर्थकत्वेनोक्तम् । वैधर्म्येण सामान्यविशेषभावो यथा—

अहो हि मे बह्वपराद्धमायुषा यदप्रियं वाच्यमिदं मयेदृशम् ।
त एव धन्याः सुहृदां पराभवं जगत्यदृष्ट्वैव हि ये क्षयं गताः ॥

---

प्रतिष्ठाम् अर्पयति औदा[1]र्यं प्रतिष्ठापयतीत्यर्थः । [2]न तु कुलमिह निमित्तम्[3] । वातापितापनोऽगस्त्यः । कलशः कुलस्थानीयस्तस्य समुद्रपाने कोऽधिकारः । लीलायितं चरितस्थानीयम् । अत्र अगस्त्यवृत्त[4]लक्षणो विशेषः[5] साधर्म्येण सामान्यसमर्थकः ।

सहसेति—क्रिया[6]व्यवसायः सहसाविधानरूपो ह्यविवेकः आपदां पदम् अनेनापत्पदत्वरूप [7]कार्यं सहसा विधानाभावरूपस्य कारणस्य वैधर्म्येण समर्थकम् । विमृश्यकारिणं सम्पदो (वृणत) इति । सहसाविधाना[9]भावात्मनो विमृश्यकारित्वस्य[10] कारणस्य सम्पद्वरणं कार्यं साधर्म्येण । अत्र साधर्म्यस्य प्राथमिक[11]त्वात् उत्तरार्धार्थपुरस्कारेण योज[12]यति—अत्र सहसाविधानेत्यादि[13] । विमृश्यकारित्वरूपस्य कारणस्येति शेषः । तस्यैव[14] कारणस्येत्यर्थः ।

पृथ्वी[15]ति—द्वितयं पृथ्वी[16] भुजङ्गरूपं तद् त्रितये कूर्मराज[17]युक्तद्वितयात्मनि । दिधी[18]र्षां धारयितुमिच्छा । अत्राततं[19]ज्यीकरणं[20] कारणं[21] स्थिरीभावादिकार्यं साधर्म्येण[22] समर्थकम् । [23]तदिदं योजयति—अत्र हरकार्मुकेति ।

अहो हीति—आयुषा बह्वपराद्धं हि सुहृ[24]दः पराभवं[25] दृष्ट्वा[26] ईदृशम[27]प्रियं

---

1. A. C. प्राधान्यं 2. A. C. न तूक्तमिह 3. A. निमित्तः 4. A. C. व्रत F. omits धृत्त 5. A. C. F. विशेषणा 6. A's alt. F. व्यवसा 7. A. F. कार्यरूपं स C. कदर्यरूपं स 8. All mss. वृणुत 9. A. C. F. G. धानादिभाव 10. A. C. G. त्वस्य कार्यं 11 A. C. F. G. मिकात् 12. D. योजयत 13. A. C. D. Omit त्यादि 14. A. C. तस्मै कारणाये D. तत्रैव 15. A C. पृथिवी 16. A. C. पृथिवी 17. A. C. राजद्वि 18. C दिधीषा 19. A. E F. G. अतज्ज्यीकर C. अत्राततस्वीकर 20. A. C. F. करण 21. A. C. F. कारण 22. D. Omits ण 23. A. F. G. तदेवेदं 24. D. E. G. हृदपरा 25. C. भव 26. A. दृष्टार ह 27. D. अपि इयं

अत्रायुःकर्तृकापराधाक्षिप्तस्याधन्यत्वस्यायुर्विरुद्धक्षयगतिप्रयुक्तं धन्यत्वं विरुद्धं सामान्यरूपतया समर्थकत्वेनोक्तम्। कार्यकारणतायां वैधर्म्येणोदाहृतम्। हिशब्दाभिहितत्वानभिहितत्वादिभेदाः स्वयमेव बोद्धव्याः। चारुत्वातिशयाभावान्नेह प्रदर्शिताः॥

एवमप्रस्तुतप्रशंसानुषङ्गायातमर्थान्तरन्यासमुक्त्वा गम्यप्रस्तावागतं पर्यायोक्तमुच्यते—

गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम् ॥३६॥

यदेव गम्यत्वं तस्यैवाभिधानं पर्यायोक्तम्। गम्यस्यैव सतः कथमभिधानमिति चेत्, न। गम्यापेक्षया प्रकारान्तरेणाभिधानस्य संभवात्। न हि तस्यैव तदैव तथैव विच्छित्त्या गम्यत्वं वाच्यत्वं च संभवति। अतः कार्यमुखद्वारेणाभिधानम्। कार्यादेरपि तत्र प्रस्तुतत्वेन वर्णनार्हत्वात्। अत एवाप्रस्तुतप्रशंसातो भेदः। एतच्च वितत्याप्रस्तुतप्रशंसाप्रस्तावे निर्णीतमिति तत एवावधार्यम्। उदाहरणम्—

---

वक्त[1]व्यत्वेना[2]पतित[3] यतः। त एव हि[4]धन्या, सुहृत्पराभवमदृष्ट्वा[5] ये क्षयं गताः[6]। अत्र सामान्यस्य वैधर्म्येण समर्थकत्वम्[7]। योजयति—अत्रायुः [8]कर्तृकेति। आयु.[9] कर्तृकेण हि अपराधेनाधन्यत्वं आक्षिप्तम्। आयुर्विरुद्धक्षय[10]गमनप्रयुक्तं यद्धन्यत्वं तद्वैधर्म्येण समर्थक[11]सामान्यमुक्तम्। अनुस्मारयति—कार्यका[12]रणतायामिति। अपोढेष्वौदासीन्यमाविष्करोति—हिशब्देत्यादि।

[13]समर्थ्यत्वे[14]न निर्दिष्टः प्रकृतो यः[15] समर्थने।
सोऽयमर्थान्तरन्यासः सामान्यादिभिरष्टधा[16]॥

पर्यायोक्तार्थसङ्गतिं द्योतयति—एवं अ[17]प्रस्तुतेति। गम्यप्रस्तावेति। प्रतीयमानार्थप्रस्तावो[18] हि वर्तते। तत्र सूत्रम्—गम्यस्यापि भङ्ग्यन्तरेणाभिधानं पर्यायोक्तम्॥ प्रतीयमानस्यापि कार्यादिमुखेन प्रकारा[19]न्तरेणाभिधानं पर्यायोक्तम्। व्याचष्टे—यदेवेत्यादि। गम्यस्य सतोऽभिधानमाक्षिप्योपपादयति—गम्यस्यैवेति। भङ्ग्यन्तरेणेत्येतद्विवृणोति—न हीत्यादि। ननु कार्याद्यभिधाने गम्यस्य कथमभिधानमित्यत आह—कार्यादेरपीति[20]। अप्रस्तुतप्रशंसातो भेद[21] निरूपितचरमनुस्मारयति—एतच्चेति।

---

1 C. वक्तव्यत्वेनाप 2. A. C. D. E. त्वेनेनापति 3. A. C. F. पतितत्वं 4 Omitted in C. 5. D. E. F. G. K. I. मवं दृष्ट्वा 6. A. D. omit त C. गच्छन्ति ताः 7. E. मद्दिदं यो 8 C. कर्तृकेति 9. D. E. G. आयुष्कर्तृ 10. A. प्रक्षय 11. D. अर्थकः, 12. D. repeats कार्यकारण 13. A साम C. समर्थ 14. A's alt. द्वेन 15. C. यत् 16. A. C. F. G. ऽष्टधा. 17. D. omits अ. 18. A. स्तावे 19. A. C. G. करणान्त 20. A. इत्यादि 21. C. भेद

स्पृष्टास्ता नन्दने शच्याः केशसंभोगलालिताः ।
सावज्ञं पारिजातस्य मञ्जर्यो यस्य सैनिकैः ॥

अत्र हयग्रीवस्य कार्यमुखेन स्वर्गविजयो वर्णितः । प्रभावातिशयप्रतिपादनं च कारणादिव कार्यादपि भवतीति कार्यमपि वर्णनीयमेवेति पर्यायोक्तस्यायं विषयः । गम्यत्वविच्छित्तिप्रस्तावाद्व्याजस्तुतिमाह—

स्तुतिनिन्दाभ्यां निन्दास्तुत्योर्गम्यत्वे व्याजस्तुतिः ॥३७॥

यत्र स्तुतिरभिधीयमानापि प्रमाणान्तराद्बाधितस्वरूपा निन्दायां पर्यवस्यति, तत्रासत्यत्वाद्व्याजरूपा स्तुतिरित्यर्थानुगमेन तावदेका व्याजस्तुतिः । यत्रापि निन्दाशब्देन प्रतिपाद्यमाना पूर्ववद्बाधितरूपा स्तुतिः पर्यवसिता भवति सा द्वितीया व्याजस्तुतिः । व्याजेन निन्दारूपेण स्तुतिरिति कृत्वा । स्तुतिनिन्दारूपस्य विच्छित्तिविशेषस्य भावादप्रस्तुतप्रशंसातो भेदः । क्रमेण यथा—

हे हेलाजितबोधिसत्त्व ! वचसां किं विस्तरैस्तोयधे !
नास्ति त्वत्सदृशः परः परहिताधाने गृहीतव्रतः ।
तृष्यत्पान्थजनोपकारघटनावैमुख्यलब्धायशो–

---

स्पृष्टास्ता[1]इति । व्याख्यातं प्राक्[2] । यो[3]जयति—अत्र हयग्रीवस्येति । कार्यं मञ्जरीस्पर्शः ।

पर्यायोक्तं तु कार्यादिद्वारा गम्यस्य वर्णनम् ।
अप्रस्तुतप्रशंसातो वाच्यस्य प्रस्तुते[4] भिदा ॥

व्याजस्तुतेस्सङ्गतिमाह—गम्यत्वेति । सूत्रम्—स्तुतिनिन्दाभ्यां निन्दास्तुत्योर्गम्यत्वे व्याजस्तुतिः । स्तुत्या[5] निन्दाया[6] गम्यत्वे एका निन्दया[7] स्तुतेस्त्वन्या । अतो व्याज[8]रूपा स्तुतिः व्याजेन स्तुतिरिति च विग्रहः । व्याचष्टे—यत्र[9] स्तुतिरित्यादि । प्रमाणान्तरात् आभासीकरणक्षमात् । अनुगमेन अर्थान्वयेन द्वितीया तु निन्दाव्याजेन स्तुतिरिति प्राह—[10]यत्रापीति । अतो योगविभागात् व्याजस्तुतिद्वयम् ।

ननु स्तुतिनिन्दयोर्गम्यांशस्य प्रस्तुतत्वाद[11]प्रस्तुतप्रशंसातः को भेद इत्यत आह—स्तुतिनिन्देति । हे [12]हेलेति । बोधिसत्त्वो[13] जीमूतवाहनः । स हि कदाचिदेव[14] परस्य हितमाधात्[15] त्वं तु ये[16] यावन्तस्तृ[17]ष्यन्ति, तेभ्यस्सर्वेभ्य एव वैमुख्यलब्धानामयशोभाराण[18]

---

1. D. अन्ता 2. Omitted in A. H 3. A. H. अयो 4. C. स्तुतो 5. A. C. त्या निन्दायां स्तुतेस्तु 6. D. निन्दया 7. Except D all mss. निन्दाया 8. A. C. D. जस्तुतिरूपा 9. A. C. अत्र पुनरित्या 10. A. यत्तवेति 11. A. C. स्तुतस्याप्र 12. A's alt. निन्देति 13 A's alt. ससहत्वात जी 14. C. एवं 15. A's alt. तमनुदधाति 16. Omitted in A. C. D. 17. All except D. तुष्य 18. H. भाराणां तदेतदाह (P. 143)

भारप्रोद्वहने करोषि कृपया साहायकं यन्मरोः ॥

अत्र विपरीतलक्षणया वाच्यवैपरीत्यप्रतीतिः ।

इन्दोर्लक्ष्म त्रिपुरजयिनः कण्ठमूलं मुरारि-
दिङ्नागानां मदजलमषीभाञ्जि गण्डस्थलानि ।
अद्याप्युर्वीवलयतिलक ! श्यामलिम्नानुलिप्ता-
न्युद्भासन्ते वद धवलितं किं यशोभिस्त्वदीयैः ॥

अत्र धवलत्वहेतुयशोविषयानवक्लृप्तिप्रतिपादनेन "विशेषप्रतिषेधे शेषाभ्यनुज्ञानम्" इति न्यायात्कतिपयपदार्थवर्जं समस्तवस्तुधवलताकारित्वं नृपयशसः प्रतीयते ।

किं वृत्तान्तैः परगृहगतैः किन्तु नाहं समर्थ-
स्तूष्णीं स्थातुं प्रकृतिमुखरो दाक्षिणात्यस्वभावः ।
गेहे गेहे विपणिषु तथा चत्वरे पानगोष्ठ्या-
मुन्मत्तेव भ्रमति भवतो वल्लभा हन्त कीर्तिः ॥

अत्र प्रक्रान्तापि स्तुतिपर्यवसायिनी निन्दा "हन्त कीर्तिः" इति भणित्या उन्मीलितेव न प्ररोहं गमितेति क्लिष्टमेतदुदाहरणम् ॥

गम्यत्वमेव प्रकृतं विशेषविषयत्वेनोररीकृत्याक्षेपालङ्कार उच्यते—

---

भोद्वहने मरोस्साहायकं[1] करोषि । अतो हेलाजितबोधिसत्त्वे त्वयि स्तुतिवचो[2]विस्तरो[3] (न) पर्याप्नो[4]तीत्यर्थः । स्तुतेर्निन्दागमकत्वं दर्शयति—अत्र विपरीतेति ।

इन्दोर्लक्ष्मेति । उर्वीवलयतिलक[5] इन्दुलक्ष्मा[6]दिषु श्यामलेषु सत्सु[7] त्वद्यशोभिर्न किञ्चि[8]द्धवलित इति स्तुतिर्गम्यते । तदेतदाह—अत्र धवल[9]त्वेति[10] । अनवक्लृप्ति[11] [12]अपर्याप्ति । यत्र तु गम्याशस्य[13] न्यग्भावस्तत्र नास्यास्सामञ्जस्यमिति दर्शयितुमाह—किं वृत्तान्तैरिति । अत्र वल्लभा[14] भ्रमति हन्तेत्युक्त्या निन्दायास्स्तुतिपर्यवसायित्वं न स्फुटीभवति[15], अनौचित्यादिति क्लिष्टता । तदेतदाह—अत्र [16]प्रक्रान्तापीति ।

व्याजेन व्याजरूपा वा स्तुतिर्व्याजस्तुतिर्द्वयम् ।
अप्रस्तुतप्रशंसात स्तुतिनिन्दात्मिका भिदा ॥

आक्षेपार्थं[17] [18]सङ्गतिमाह—गम्यत्वमेवेति । विशेषोऽतिशय । विशेषप्रतिपत्ति[19]-

---

1 All except E हायक 2. A C. F. वाचो 3 D E. स्तरा 4 D. आप्नुयत्ता 5 D इन्दुः 6 A C D F H I. लक्ष्म्यादि 7. A. सत्यं 8. C. किञ्चिदंमिल 9 A धवलितमिति C धवलितेति 10 A. इति स्तुतिर्गम्यते पुन अत्र 11. A. अनवक्लृप्ति 12. A omits अ 13 A गम्या धीस्य न्य 14 A. C D F विभ्रम G. किं भ्रम 15. A C. F. अवर्तान्यनो D अवतीप्यरूपा वा 16 A's alt. प्रक्रान्तोऽपीति C. प्रकान्तोऽपीति 17 C. क्षेपार्थो सुगम्य 18 A. H. सङ्गम्यत्व 19. C. पत्तिगम्य

**उक्तवक्ष्यमाणयोः प्राकरणिकयोर्विशेषप्रतीत्यर्थं निषेधाभास आक्षेपः ॥२८॥**

इह प्राकरणिकोऽर्थः प्राकरणिकत्वादेव वक्तुमिष्यते। तथाविधस्य विधानार्हस्य निषेधः कर्तुं न युज्यते। स कृतोऽपि बाधितस्वरूपत्वान्निषेधायत इति निषेधाभासः संपन्नः। तस्यैतस्य कारणं प्रकृतगतत्वेन विशेषप्रतिपत्त्यर्थम्। अन्यथा गजस्नानतुल्यता स्यात्। स चाभासमानो निषेध उक्तस्य वा स्यादासूत्रिताभिधानत्वेन वक्ष्यमाणस्य वा स्यादित्याक्षेपस्य द्वयी गतिः। उक्तविषयत्वेन कैमर्थ्यपरमालोचनमाक्षेपः। वक्ष्यमाणविषयत्वेनानयनरूपमागूरणमाक्षेपः। एवञ्चार्थभेदादाक्षेपशब्दस्य द्वावाक्षेपाविति वदन्ति। तत्रोक्तविषये यस्यैवेष्टस्य विशेषस्तस्यैवाक्षेपः। वक्ष्यमाणविषये त्विष्टस्य विशेषः इष्टसंबन्धिनोऽन्यस्य सामान्यरूपस्य निषेधः। तेनात्र लक्षणभेदः। विशेषस्य चात्र शब्दानुपात्तत्वाद्गम्यत्वम्। तत्रोक्तविषये आक्षेपे क्वचिद्वस्तु निषिध्यते क्वचिद्वस्तुकथनमिति द्वौ भेदौ। वक्ष्यमाणविषये तु कथनमेव निषि-

---

गम्यविषये[1]त्यर्थः। तत्र सूत्रम्—उक्तवक्ष्यमाणयोः[2] प्राकरणिकयोः विशेषप्रतीत्यर्थं निषेधाभास आक्षेपः[3]। उक्तस्य वक्ष्यमाणस्य वा प्राकरणिकस्य विशेषप्रतीत्यर्थं आभासतो निषेधनम् आक्षेपः। विजातीयमिदम् आक्षेपद्वयं ज्ञेयम्। व्याचष्टे—इह प्राकरणिक इत्यादि। तथाविधस्य विवक्षितस्य। अत एव विधेयस्य स कृतः अविषये प्रवर्तित[4] इत्यर्थः। अत, एव[5] बाधित[6]स्वरूपः[7] आभासीभवति। ननु किमेतेन प्रयासेनेत्यत आह—[8]तस्यैतस्येति[9]। अन्यथेति। विशेषप्रतिपत्त्यर्थताभावे पुनर्विधि[10]पर्यवसानाद् गजस्नानतुल्यता स्यात्। गजो हि स्नात एव सन्[11] सद्यो धूलिधूसरो भवति। तस्य द्वैरूप्या[12]याह—स चेति। आसूत्रिताभिधानत्वेन अभिधातुमुपक्रान्ततयेत्यर्थः। तत्र[13] कस्य कः प्रकार इत्यत आह—उक्तविषयत्वेनेत्यादि। कैमर्थ्यं निर[14]र्थकता[15]। आगू[16]रणम्, सामर्थ्यात् साधनम्। अतो विजातीयत्वमित्यत आह—एवं चेति। उभयत्र निषेध्यांशो[17]विभिन्न इत्याह—[18]तत्रोक्तेति। अतो वैलक्षण्यमित्याह—तेनात्रेति। शब्दानुपात्तत्वादिति। निषेधाभासबलाय[19]त्तत्वात् [20]शब्दानुपात्तता। उक्तविषय इति। वस्तुनो वस्तुकथनस्य निषेधाद्द्वैविध्यम्। वक्ष्यमाणेति। वस्तुनोऽनुक्तत्वात्[21]कथनस्यैव निषेध[22]।

---

1. A. C. F. पयेत्यनौचित्यात् क्लिष्टार्थः। अत्र सूत्रं 2. C. माणयोर्विशेष 3. A. C. H. आक्षेपः। विजाती 4. D. पूर्वं 5. A. C. F. G. प्रवृत्तिः कृत ▪ 6. E. K. omit स्व 7. A. C. D. रूपं 8. H. तस्यैतमिमं प्रस्तुतविरोधे (under विरोधालङ्कार) 9. A. C. F. G. इति विशे 10. D. omits धि 11. A's alt. C. घनं 12. A. रूप्याभासः चेति C रूप्याभावश्चेति 13. A. C. तद्यत्र 14. C किमर्थता 15. E. अर्थकता 16. A. आगूकारणं C. आमकारणं 17. E. F. अंशोऽपि भि 18. E. G. अत्र 19. E. आयातत्वा 20. A. C. F. G. तत. शब्दा 21. C. कथं नास्येव 22. C. षेध वस्तुता अन्य

ध्यते। तत्र सामान्यप्रतिज्ञायां क्वचिद्विशेषनिष्ठत्वेन क्वचित्पुनरंशोक्तावंशान्तरगतत्वेनेत्यत्रापि द्वौ भेदौ। तदेवमस्य चत्वारो भेदाः। शब्दसाम्यनिबन्धनं सामान्यविशेषभावमवलम्ब्य चात्र प्रकारप्रकारिभावप्रकल्पनम्। क्रमेण यथा—

बालअ ! णाहं दूई तीए पिओ सि त्ति णम्हवावारो।
सा मरइ तुज्झ अयसो एअं धम्मक्खरं भणिमो॥

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे॥

सुहअ विलंबसु थोअं जाव इमं विरहकाअरं हिअअं।
संठविऊण भणिस्सं अहवा वोलेसु किं भणिमो॥

ज्योत्स्ना तमः पिकवचः क्रकचस्तुषारः
क्षारो मृणालवलयानि कृतान्तदन्ताः।

---

तत्रान्यथा द्वैविध्यमाह—तत्र सामान्येति। इत्थं चातुर्विध्यम्। अत्र च[1] [2]प्रकारप्रकारि[3]भावहेतु[4]स्सामान्यविशेषभावो अर्थानपेक्ष इत्याह—शब्दसाम्येति। बालअ[5] इति।

बालक[6] ! नाहं दूती तस्याः प्रियोऽसीति नास्माकं[7] व्यापारः।
सा म्रियते तवायश एतद्धर्माक्षरं भणामः॥

प्रसीदेति। यदि प्रसीदेति ब्रूयामसति कोप इदं [8]वचो न घटते। एवं न पुनः करिष्यामीति चेद्ब्रूयां तथा[9] विद्यमानस्याभ्युपगमः, न मे दोषोऽस्तीति चेद्ब्रूयां त्वं पुनरिदं दोषाभाववचो[10] मृषेति ज्ञास्यसि। अतः किं वक्तुं क्षममिति[11] न वेद्मि[12]। सुहअ[13] इति।

सुभग ! विलम्बस्व स्तोकं यावदिदं विरहकातरं हृदयम्।
संस्थाप्य भणिष्या[14]म्यथवाप(व्यति)[15]क्राम किं भणाम[16]॥

मम विरहकातरहृदयं संस्थाप्य भणिष्यामीत्यनेन जीवितसंशयहेतुरूपद्रव[17]-रूपद्रव ?) प्राभूच्छित[18]। अथवा [19]व्यति[20]क्राम किं भणाम इति [illegible] तस्यैव प्रत्यासन्नतरत्वाद्गणनयनर्हता।

ज्योत्स्नेति। अत्र विरहवेदना[21]वशात् ज्योत्स्ना[22]पिकवच[23]प्रभृतीनां तम-

---

1. Omitted in C. D. 2. C. प्राकरणिकप्रकार 3 A. C. प्रकारी 4 G तु सा 5. A. C. बालते यदि 6. A. C बाह बाह दूती 7. C. नास्यां कुल्या 8 A. F. वचनं ॥ C. इदं च वचो च 9. D. E. तथा अपि 10. A. वचनं 11. D. इति मुह 12. C. चदि 13. D शुभगेति 14. D. णिष्यामिष्यनेन 15. A. C. व्यतिकरं D. K. अपक्राम 16. A. C. D. F. भणामि 17. C. द्रव 18. A's alt. मूर्छितः 19. A. C. व्यतिक्राम 20. D. क्रम 21. A C. दनाज्यो 22. A. पिकवच. C. पिकः कूचः 23. A. महर्तां

सर्वं दुरन्तमिदमद्य शिरीषमृद्वी
सा नूनमाः किमथवा हतजीवितेन ॥

आद्ये उदाहरणद्वये यथाक्रमं वस्तुनिषेधेन भणितिनिषेधेन चोक्तविषय आक्षेपः। तत्र चोक्तस्य दूतीत्वस्य वस्तुनो निषेधमुखेनैव सत्यवादित्वादि-विशेषः तथा भण्यमानस्य प्रसादस्य निषेधमुखेनैव कोपोपरागनिवर्तनेनाव-श्यस्वीकार्यत्वं विशेषः। उत्तरस्मिन्पुनरुदाहरणद्वये यथाक्रमं सामान्यद्वारेणेष्ट-स्यांशोक्तावंशान्तरस्य स्वरूपेण च भणितिनिषेधे वक्ष्यमाणविषय आक्षेपः। तत्र च वक्ष्यमाणस्येष्टस्य "भणिस्सं" इति प्रतिज्ञातस्य सातिशयकोपजनकत्वादि-विशेषः। तथा च ज्योत्स्नेत्याद्यांशोक्तावंशान्तरस्य "म्रियत" इति प्रतिपाद्य-स्याशक्यवचनीयत्वादिविशेषः। एवञ्च आक्षेपे इष्टार्थस्तस्यैव निषेधः, निषेध-स्यानुपपद्यमानत्वादसत्यत्वं, विशेषप्रतिपादनं चेति चतुष्टयमुपयुज्यते। तेन न निषेधविधिः, नापि विहितनिषेधः। किन्तु निषेधेन विधेराक्षेपः। निषेधस्या-

ककचाग्निरूपापत्त्या यतो[1] दुरन्तता। अतो सा न्यूनमित्यर्थो[2]ऽचित्या प्राणसंशयदशोप[3]-क्षिप्ता। आः किमथवा जीविते[4]नेत्यनेन तु तद्विपत्तेरर्वाक् प्राणोपेक्षा[5]त्वरा। एषु क्रमतो[6] योजयितुमाह—आद्य इत्यादि। "नाहं[7] दूती"ति [8]दूतीत्वरूपवस्तुनिषेधः। किमे-[9]तस्मिन् वक्तुं क्षममिति तूक्तिनिषेधः। तदुभयमपि [10]उक्तविषयम्। उभयत्र निषेधाभास-योरयं विशेषमुद्घाटयति—तत्र चेति। वस्तुवाचित्वं यथार्थवाचित्वम्। विशेषो गम्यत इति शेषः[11]। भण्यमानस्य[12] ([13]प्रसादे)ति। उदीर्यमाणस्य[14] इदं न[15] घटत इति निषेध-मुखेनैव। उत्तरस्मिन्निति। किं भणाम इति सामान्य[16]द्वारेण वक्तुमिष्टस्य जीवितमंश[17]-यादेः स्वरूपत एव भणितिनिषेध इत्यर्थवशादागू[18]रणम् इत्यर्थः। सा नूनमित्यं[19]शोक्तौ[20] जीवितुं न शक्नोमीत्यशान्तरस्य स्वरूपतो भणितिनिषेधादागूरणम्। उभयत्र द्योत्य-विशेषणोद्घाटनायाह—तत्र चेति। अतिशयकोपजनकत्व[21] प्रस्थाना[22]ध्यवसायात्। अत्र सामग्री निष्कर्षति—एवञ्चेति। अत[23] आक्षेपस्वरूपमीदृगित्याह—तेनेति[24]। ननु निषे-धेन[25] विध्याक्षेपः कथम् इत्यत आह—निषेधस्यासत्यत्वादिति। ननु विध्या[26]भासान्निषे-धाक्षेपः[27] किं[28] न स्यादित्यत आह—विधिना त्विति। विधिना विध्याभासेनेत्यर्थः। वक्ष्यते

1. C. यते 2. A's alt. C. अर्थो 3. C. उपक्लृप्तो 4. A. C. D. F. वितेति नेत्य E. G. जीवितेतीति ने 5. C. पेक्षन्यरा 6. A. C. क्रमशो 7. C. नाहशाती 8. A. दूती अनूपवस्तु C. पूतित्वरूपस्तु D. F. दूति 9. A. D. न तस्मि 10 A. अन्क 11. A. C. शेषमाभ 12. D. स्य तु 13. All mss. प्रमीदेति 14. D. मानस्य 15. Omitted in D. 16. C. यथारंण 17. D. संयोगादेः 18. D. आगु 19. D. अयोभ-यत्र 20. All except E. उक्तो 21. क omitted in D. 22. C. स्थानाद् अध्यव 23. F. अत्र 24. F. इति। ननु विध्याभासात् 25. न omitted in D. 26. C. विध्यतासां नि D. विध्याक्षेपाधि 27. A. आक्षेपं D. D. F. आक्षेपं 28. A. F. omit किं

सत्यत्वाद्विधिपर्यवसानात्। विधिना तु निषेधोऽस्य भेदत्वेन वक्ष्यते। ततश्च हर्षचरिते—"अनुरूपो देव्या इत्यात्मसंभावना" इत्यादौ, तथा "यामीति न स्नेहसदृशम्" इत्यादावुक्तविषय आक्षेपः। "केवलं बाल इति सुतरामपरित्याज्योऽस्मि। रक्षणीय इति भवद्भुजपञ्जरं रक्षास्थानम्" इत्यादावाक्षेपबुद्धिर्न कार्या। बालत्वादेरुक्तस्य निषेध्यत्वेनाविवक्षितत्वात्। प्रत्युतात्र बाल्यादिः परित्यागनिषेधकत्वेन प्रतीयते। तेन नायमाक्षेपः। कस्तर्ह्ययं विच्छित्तिप्रकारोऽलंकार इति चेद्, व्याघाताख्यस्यालंकारस्यायं द्वितीयो भेदो वक्ष्यते।

> तदिष्टस्य निषेध्यत्वमाक्षेपोक्तिनिबन्धनम्।
> सौकर्येणान्यकृतये न निषेधकता पुनः॥

इह तु—

> साहित्यपाथोनिधिमन्थनोत्थं काव्यामृतं रक्षत हे कवीन्द्राः।
> यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचोराः प्रगुणीभवन्ति॥
> गृह्णन्तु सर्वे यदि वा यथेच्छं नास्ति क्षतिः कापि कवीश्वराणाम्।
> रत्नेषु लुप्तेषु बहुष्वमर्त्यैरद्यापि रत्नाकर एव सिन्धुः॥

इति। तथा—

---

सूत्रान्तरेणेति शेष। यत इत्थ[1] निषेधेन विधेराक्षेप. अत ईदृशि[2] विषये[3] [4]नालङ्कान्तरमित्यत[5] आह—ततश्चेति। यस्मादात्मसभावनमत आनुरूप्योक्तिर्न[6] युज्यत इत्युक्तिनिषेध। इत्थ न[7] स्नेहसदृशमित्यत्रापि याननिषेध॰। अतोऽयमुक्तविषय आक्षेप। अविषय दर्शयति—केवलमित्यादि। अत्र ह्यपरित्याज्यतादि बाल्यादेर्न[8] निषेधकमपि तु तस्य [9]साधकमेवेति नाक्षेपबुद्धि कार्या। किन्तु व्याघातविशेषेत्यनुयोगपुरस्कारेण दर्शयति—कस्तर्हीत्यादि। अत्र निष्कर्षाय श्लोक—[10]तदिष्टस्येति। तस्मात् कारणात् सौकर्येण विशेषसिद्ध्यर्थं तस्य निषेधाभास आक्षेपोक्ते.[11] निमित्त, न तु वस्तुतो निषेध[12]कता।

अतो[13] यत्र निषेधो वास्तवो न तत्राक्षेप इति सोदाहरण दर्शयति[14]—इह त्वित्यादि। अत्र पूर्व श्लोके दैत्या इव काव्यार्थचोरा[15] लुण्टनाय यत्प्रगुणीभवन्ति, अत काव्यामृत [16]रक्षतेति रक्षण विहितम्। उत्तर[17]श्लोके तु सर्वे यथेच्छ गृह्णन्तु[18] लोपेऽपि न क्षतिरिति, पूर्वविहित काव्यरक्षण साक्षान्नि[19]षिध्यते। तथा वायोः काराग्रहक्लृप्त्यं[20]

---

1 C. विधेयेषा नि 2. E. ईदृग्विष 3 D विषयेन 4 A. C F नो अलं 5 C. इत्याह 6 D. उक्तिर्नियु 7. A's alt C. सस्नेहः omitted in D 8. D. omits न 9. E. साध्यम 10. A C यदिष्ट 11. All except E. read उक्तिः 12 D. षेधकृता 13 A. F अतोऽय नि C. अतो यत्र D. यत्र यत्र 14. A. यति कस्तर्हीत्यादि। इह 15 C चोर 16 C. गित्त 17. A. उत्त(र) श्लो 18 D. गृह्णतु 19. A. C. D F. निषिध्य 20 A's alt. त्प्ये सुधारासु

देया शिलापट्टकवाटमुद्रा श्रीखण्डशैलस्य दरीगृहेषु ।
वियोगिनीकण्टक एष वायुः कारागृहस्यास्तु चिराद्भिज्ञः ॥
बाणेन हत्वा मृगमस्य यात्रा निवार्यतां दक्षिणमारुतस्य ।
इत्यर्थनीयः शबराधिराजः श्रीखण्डपृथ्वीधरकंदरस्थः ॥
यद्वा मृषा तिष्ठतु दैन्यमेतन्नेच्छन्ति वैरं मरुता किराताः ।
केलिप्रसङ्गे शवराङ्गनानां स हि श्रमग्लानिमपाकरोति ॥

इति नाक्षेपबुद्धिः कार्या । विहितनिषेधो ह्ययम् । न चासावाक्षेपः । निषेधविधौ तस्य भावादित्युक्तत्वात् । चमत्कारोऽप्यत्र निषेधहेतुकन् एवेति न तत्सद्भावमात्रेणाक्षेपधीः कार्या । अयं चाक्षेपो ध्वन्यमानो भवति । यथा—

गणिकासु विधेयो न विश्वासो वल्लभ ! त्वया ।
किं किं न कुर्वतेऽनर्थमिमा धनपरायणाः ॥

अत्र हि गणिकाया उक्तौ तद्दोषोक्तिप्रस्तावे नाहं गणिकेति प्रतीयते । न चासौ निषेध एव, गणिकात्वेनावस्थितयैव गणिकात्वस्य निषेधनात् । सोऽयं प्रस्खलद्रूपो निषेधाभासरूपो वक्तुर्गणिकायाः शुद्धस्नेहनिबन्धनत्वेन धनविमुखत्वादौ विशेषे पर्यवस्यतीत्युक्तविषय आक्षेपध्वनिरयम् । न तु—

स वक्तुमखिलाञ्शक्तो हयग्रीवाश्रितान्गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं ज्ञातुं शक्तो महोदधेः ॥

इत्याक्षेपध्वनावुदाहार्यम् । निषेधस्यैवात्र गम्यमानत्वात् । न निषेधाभासस्य । महोदधेरम्भः कुम्भपरिच्छेदशक्तिनिदर्शनेन हयग्रीवगुणानां वक्तु-

---

कन्दरासु शिलाकवाटदानं[1] विहित, उत्तरश्लोके एव[2] चिन्तारूपं दैन्यं[3] मृषा किराता मरुता[4]सह निरोधन[5]वैरं नेच्छ[5]न्तीति कवाट[6]दानं साक्षान्निषेध्यत इति नैतद्युगलक[7]युगमाक्षेपोदाहरणम् । आक्षेपाभावे युक्त्यन्तरमाह—चमत्कारोऽपीति । व्यङ्ग्यत्वेनास्य[8] संभवं दर्शयति—अयं चेत्यादि । गणिका[9]स्विति । गणिका धनपरायणाः सत्यः सर्वम् [10]असाम्प्रतमाचरन्ति यतः । [11]अतस्त्वया विश्वासो न कार्य इति गणिकाया [12]एवोक्तौ विश्वासनिषेध आभासायते । धनवैमुख्येन शुद्धस्नेहभाजन[13]मियम् इति प्रतीतेः[14] । अतो उक्तविषयोऽयमाक्षेपो व्यङ्ग्यः । एतद्दर्शयति—अत्र हि[15] गणिकाया [16]इत्यादि ।

व्यङ्ग्यताया[17]मप्यविषयं दर्शयति—न तु स वक्तुमिति । योऽम्बुनिधे [18]परिच्छेद-

---

1. A's alt. C. दावं 2. D. एवं च 3. C. दैत्यं 4. C. घनं F. omits न 5. all except. D. नेच्छ 6. A's alt. C. घानं 7. D. omits क 8. E. नाप्यसं 9. A. C. D. F. का स्थिति 10. A. C. F. omit अ 11. D. अतः स्वयं 12. A. C. हावोक्तौ 13. D. जनमिति यमिति 14. All except E. प्रतीतौ 15. C. हीति गणि A. हि काच गणि 16. A. C. जात्यादि D. हुत्यादि 17. A's alt. व्यङ्ग्यमायाः C. व्यङ्ग्यतायाः 18. A. C. परिसेदाद A's alt. परिच्छेदा

मशक्यत्व एवात्र तात्पर्यम् । तन्निमित्तक एवात्र चमत्कारो न निषेधाभासहेतुक इति नाक्षेपत्वनिर्धारत्र कार्या । सर्वथेष्टानिष्टस्य निषेधाभासस्य विध्युन्मुखस्याक्षेपत्वमिति स्थितम् । एवमिष्टनिषेधेनाक्षेपमुक्त्वा समानन्यायत्वादनिष्टविधिनाक्षेपमाह—

अनिष्टविध्याभासश्च ॥३६॥

यथेष्टस्येष्टत्वादेव निषेधोऽनुपपन्न । एवमनिष्टस्यानिष्टत्वादेव विधानं

म्बुकुम्भं.[1] ज्ञातु [2]शक्नोति, स[3] हयग्रीव[4]गुणान्साकल्येन वक्तु [5]शक्त इति उक्ति[6], उक्तेर्विपथ मेव गमयतीति नाक्षेपो व्यङ्ग्यः । तदेतदाह—निषेधस्यैवेत्यादि । निगमयति—सर्वथेति । यो हि निषधाभास इष्टोऽनिष्टो वा स विध्यु[7]न्मुखस्सन्नेव आक्षेपालङ्कारो नान्य ।

---

निषेधाभास आक्षेप प्रकृतस्येष्टसिद्धये ।
स उक्तविषये वस्तु [9]तदुक्तयो[10]र्वारणात्मक ॥
वक्ष्यमाणे[11] [12]पुनस्त्वन्यो ज्ञेय आगूरणात्मक ।
सामान्यतो [13]विशेषाभावादसाश्चेत्येष च द्विधा ॥
इष्टार्थोऽस्य निषधो[14]ऽस्य बाधोऽप्यातिशयध्वनि ।
चतुष्टयमिद ज्ञेय सभूया[15]क्षेपकारणम् ॥

आक्षेपान्तरमुपक्षिपति—एवमिष्टेत्यादि । समानन्याय[16]त्वादिति । अन्वयव्यतिरेकावस्थायिने वस्तुनो[17] न्याय्यो[18]ऽपि अन्वयव्यतिरेका[19]वस्था[20]र्थितया समान इति भाव । तत्र सूत्रम्—अनिष्ट[21]विध्या[22]भासश्च । आकरणिकस्य विशेषप्रतीत्यर्थमिति[23] अनुवर्तते, न[24] तु प्राकरणिकयोरिमि, वक्ष्यमाणैकविषयत्वात् । अस्य यथेष्टस्य निषेधाभास आक्षेप प्राक् । तथा विशेषप्रतीत्यर्थम् [25]अनिष्ट[26]विध्याभासोऽप्याक्षेप[27] । व्याचष्टे—यथेष्टस्येत्यादि । यथेति यद्वृत्तेन समानन्याय[28]तार्थं निरूपित-

---

1 A C अम्बुरत्नर्यक्षा 2 F ज्ञातु परिच्छेत्तुं 3 A सा C. य 4 C. श्रीणाम्या कर्पे 5 D शक्यत इति 6. A C. F उभय D उक्तिर्षे 7. A's alt. निदेश C संदेश दर्शयेव 8 C. विध्युन्मुखेन सर्वथा 9 Except A B C all read तदुक्तयो 10 A F युक्तोधारणा D युक्त्योन्धारणा 11 A. माणो 12. D पुनर्देव संभूय 13 A D E. G विशेष्यार्थाभावे C विशेषो भावे 14 C. षेधो तथापि 15 C. मुप क्षेप 16 D न्यायत्वमिति 17 D स्तुनो हि E. स्तुनोर्हि 18. C. न्यायो 19 D व्यतिरेको 20 Except E all mss अवस्थो थितया 21. A's alt. C. विधम्या 22 D. omits भा 23 A. D E. G. यस्तु A's alt. C मस्तु 24 D. न तु 25 E. G इष्टस्य 26 A's alt C. विधाम्या 27 C आक्षेप 28. C. न्यायपदार्थ D. न्यायता मर्थ

नोपपद्यते। तत्क्रियमाणं प्रस्खलद्रूपत्वाद् विध्याभासे पर्यवस्यति। ततश्च विधेरुपकरणीभूतो निषेध इति विधिनायं निषेधोऽनिष्टविशेषपर्यवसायी निषेधागूरणादाक्षेपः। यथा—

गच्छ गच्छसि चेत्कान्त! पन्थानः सन्तु ते शिवाः।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्॥

अत्र कयाचित्कान्तप्रस्थानमनिष्टमप्यनिराकरणमुखेन विधीयते। न चास्य विधिर्युक्तः, अनिष्टत्वात्। सोऽयं प्रस्खलद्रूपत्वेन निषेधमागूरयति। फलं चात्रानिष्टस्य प्रस्थानस्यासंविज्ञानपदनिबन्धनमत्यन्तपरिहार्यत्वप्रतिपा-

---

परमाक्षेपमनुस्मार[1]यति। एवमित्यादि तु प्रस्तुत[2]विषयम्। प्रस्खलद्रूप[3]त्वमविषयप्रवृत्तेः। विधिनायम् इति। [4]यतो विधिरय आभासमानो निषेधे व्यज्यमान उपकरणम् अतो विध्याभासेन व्यञ्जकेनायं निरूप्यमाणो निषेध इत्यर्थः। स चानिष्टविशेषे पर्यवस्यन्[5] आक्षेपालङ्कार इति योजना। नन्वाक्षेपो द्विधा दर्शितः। उक्ते[6] विषये कैमर्थक्यपरतया लक्ष्यमाणे त्वा[7]गूरकत्वेन। इह तु कतर[8] इत्यत आह—[9]निषेधागूरणादिति। निषेधो ह्यनुक्त इह विध्याभासेन आगूर्यते। अतोऽयं वक्ष्यमाणैकविषय इति[10] ज्ञातव्यः। उक्तं हि "वक्ष्यमाणविषयत्वेन आनयनरूपमागूरणमाक्षेप" इति।

गच्छेति। गच्छसि [11]चेदित्यनेन, जिगमिषास्ति चेत् [12]नाहं निराकरोमि इति गम्यते। गच्छेत्यत्र तु तेन पुरस्कृतो[13] विधिर्ममापि तत्रैव गति[14]र्भूयादिति तु प्राणनै[15]राश्याविष्कारात् निषेध[16]प्रत्या[17]यनम्। योजयति—अत्र कयाचिदित्यादि। [18]अनिराकरणमुखेनेत्यनेन गच्छसि चेदित्यर्थानुगमो दर्शितः। (प्रस्खलद्[19])रूपत्वम् इह[20] साक्षात् वाक्यानुप्रवेशः। विशेषप्रतिपत्तिरूपं फलं [21]चोपदर्शयति—फलं [22]चात्रेति। गम्यस्यात्य[23]न्तपरिहार्यत्वं[24] फलम्। तत्र किं निमित्तम् इत्याह—असंविज्ञा[25]नेति। न सम्यग्विज्ञायते येनार्थः[26] तदसंविज्ञानम्[27]। पदं[28] चेदिति निपातात्मकम्[29]। [30]गच्छसि चेदित्युक्ते हि किं तत्र[31] गमनेन मम संवि[32]ज्ञानेत्यादि प्रतीयते। इदमेवार्थ[33]प्रत्यायकं [34]सत्पदमत्यन्तपरि-

---

1. D. स्मारयेति 2. D. स्तुतरूपम् 3. D. द्वत्वं 4. A. C. अतो 5. C. पर्यवस्यं 6. C. उक्तं 7. C. आगारक D. E. आगुर 8. D. तु रत इ 9. A. C. विशेषग्रहणा 10. E. विज्ञात 11. C. च इत्य 12. C. नाहा 13. C. स्तुतो 14. A's alt. C. गतिर्मा भूदिति 15. C. नैराशय्या वि 16. D. षेधमित्यूत्या 17. A. C. F. G. प्रत्यानयनं 18. A's alt. अतिरा 19. C. प्रस्खरूप D. प्रमुपद्रूप A. G. H. I. प्रसुख्रूप 20. F. इत्याह 21. D. चापि दर्श 22. A. C. वात्रेति 23. A's alt. अत्रान्त 24. F. इर्ताह G. इह 25. E. ज्ञानेनेति 26. C. अर्थं F. अर्थः नन्वेतत् 27. D. ज्ञानः 28. A's alt. C. पदं 29. E. आत्मकः 30. A. गच्छ ग 31. F. G. त्वद्गम 32. Except C. all omit वि 33. A. C. धूर्तमन्या 34 A. C. यत्र यदमत्य

दनम् । एतच्च "ममापि जन्म तत्रैव" इत्याशीःप्रतिपादनेनानिष्टपर्यवसायिना व्यञ्जितम् । यथा वा—

> नो किञ्चित्कथनीयमस्ति सुभग ! प्रौढाः परं त्वादृशाः
> पन्थानः कुशला भवन्तु भवतः को मादृशामाग्रहः ।
> किं त्वेतत्कथयामि संततरतिक्लान्तिच्छिदस्तास्त्वया
> स्मर्तव्याः शिथिलाः सहंसरुचयो गोदावरीवीचयः ॥

अत्रानभिप्रेतमपि कान्तप्रस्थानं यदा प्रमुख एवाभ्युपगम्यमानं प्रतीयते, तदायमनिष्टविधिराभासमान आक्षेपाङ्गम् । स्मर्तव्या इत्यनेन गमननिवृत्तिरेवोपोद्बलिता । तस्मादयमपि प्रकार आक्षेपस्य समानन्यायतया अभिनयत्वेनोक्तः ॥

आक्षेप इष्टनिषेधेऽनिष्टविधौ चानुपपद्यमानत्वाद्विरुद्धत्वमनुप्रविष्टम् ।

---

हार्यत्वे निबन्धनम् इत्यर्थः । नन्वेत[1]दत्यन्तपरिहार्यं[2]स्व केन[3] व्यवस्थापितम् इत्यत आह—एतच्चेति । निषेधापगम प्रकारान्तरेण दर्शयितुमाह—यथा[4]वेति ।

नो किञ्चिदिति । प्रौढा. कथनमन्तरेणापि कथनीयार्था[5]भिज्ञा. । शिथिलेति[6] । हंसो[7] हि [8]शिथिलासस्स[9] [10]सविशेष[11] रम्यो भवति, अन्तर्यंत[12]लिमा[13]विस्तारात् । तत्सहृगरचयो [14]वीचय इति नैर्मल्यकाष्ठा[15] । योजयति—अत्रान[16]भिप्रेतमित्यादि । अनभिप्रेतस्यैव मतो गमनस्य नो किञ्चित्कथनीयमस्तीति प्रमुख एवाभ्युपगमः प्रतीयते । इत्थं च सति विधिरय [17]मनिष्टत्वेनाभासमानो निषेधागूरणात्मन आक्षेपस्याङ्गम् । स्मर्तव्या इत्यनेन [18]भूयस्तरान्निषेध एवोपोद्बलितः तथाविध[19]वीचिस्मृतौ गमनवार्ताया अप्रयोगात्[20] । निगमयति—तस्मादिति । अभिनयत्वेन अन्यं रम्यत्वाभेन ।

> अनुक्तस्य निषेधस्य विध्याभासेन सूचनम् ।
> आक्षेपो वक्ष्यमाणैकविषयस्त्वेष सम्मतः ॥

अथ विरोध[21]विच्छित्तिमधिविवक्षुराह—आक्षेप[22] इष्टेत्यादि । आक्षेपालङ्कारे हि विरुद्धत्वमनुप्रविष्टम् । इष्टनिषेधावलम्बेन अनिष्टविध्यवलम्बेन वा भूतद्वय[23]प्रवृत्ते ऽस्मिन्न[24]नुपपत्तिसद्भावात् इत्यर्थः । तमिम प्रस्तुत[25] विरोधम् अधिकुर्मः इत्याह—

---

1 C वेदनाय 2. D. हार्यंक 3. D तेन 4. A. C. यथा 5. A. C. र्थायार्थि F र्थायाभिज्ञाः 6. A C. शिशिरेति 7 A हंसे 8. A. C. शीतले स 9 D. E omit सत् 10 G. omits स 11 F. विशेषण G विशेष 12. C. यवलि 13. C. पेक्षा 14 A C. द्विर्वाच 15 A C. काष्ठा 16. A. C. नाभिप्रे 17. D. omits म 18. E. तु भूयः 19 A. विधि 20 A. हेतुत्वात् C हेतुत्वात् D योगात् 21. A's alt. C. रोधस्थिति मधि 22 D इष्टेत्या 23 D E. G द्वयं 24 D. स्मिन्नुप 25. A. C. F. स्तुत

एतत्प्रस्तावेन विरोधगर्भोऽलङ्कारवर्गः प्रक्रियते। तत्रापि विरोधालङ्कारस्तावल्लक्ष्यते—

विरुद्धाभासत्वं विरोधः ॥४०॥

इह जात्यादीनां चतुर्णां पदार्थानां प्रत्येकं तन्मध्य एव सजातीयविजातीयाभ्यां विरोधिभ्यां सबन्धे विरोधः। स च समाधानं विना प्ररूढो दोषः। सति तु समाधाने प्रमुख एवाभासमानत्वाद्विरोधाभासः। तत्र च जातिविरोधस्य जात्यादिभिः सह चत्वारो भेदाः। गुणस्य गुणादिभिः सह त्रयः। क्रियायाः क्रियाद्रव्याभ्यां सह द्वौ। द्रव्यस्य द्रव्येण सहैकः। तदेवं दश विरोधभेदाः। तत्र विड्मानेणोदाहरणं यथा—

> परिच्छेदातीतः सकलवचनानामविषयः
> पुनर्जन्मन्यस्मिन्ननुभवपथं यो न गतवान्।
> विवेकप्रध्वंसादुपचितमहामोहगहनो
> विकारः कोऽप्यन्तर्जडयति च तापं च कुरुते ॥

अत्र जडीकरणतापकरणयोः क्रिययोर्विरोधो वस्तुसौन्दर्येणाप्रातिपर्यवसानेन परिह्रियते। तथा—

---

[1]एतत्प्रस्तावेनेति। तेष्वपि अधिष्ठा[2]नभूत विरोधालङ्कार[3] प्रामुख्यात् प्रथममुपगृह्णाति— तत्रापीति[4]। तत्र सूत्रम्—विरुद्धा[5]भासत्व विरोध। [6]विरोधस्य समाधानसद्भावात् आभासत्व[7] विरोधालङ्कार[8]। व्याचष्टे—इह जात्यादीनामिति। जातेर्जातिस्सजातीय[9] अन्यद्विजातीयम्। एव गुणस्य गुण इत्यादि। भेदान्[10] सङ्ख्यष्टे—तत्र[11] चेति[12]। जातिविरोधस्य जातिनिबन्धनस्य विरोधालङ्कारस्य[13]। परिच्छेदेति। अपरिच्छेद्य[14] सववचना[15]नाम् अविषय। अत्र[16] जन्मनि[17] पुनरित्थम् अनु[18]भूतमनस्त्वमिह न [19]प्राक्कोटपेक्ष [20]पूर्वमित्यथ। विवेकस्य विशयतो ध्वसादु[21]पचितेन [22]मोहान्धकारेण दुरु[23]त्तर कोऽपि विरहविकारो अन्तर्जडयति तापयति च। योजयति[24]—अत्र जडीकरणेति। अप्राप्ति[25]विरह [26]तद्धेतुकोऽय विरुद्ध[27]क्रियोपनिपात इत्यय।

---

1 D omits ए 2 A ष्ठानात्त C ष्ठानोक्त 3 A C F H अलङ्कार 4 A C G H इति 5 A s alt रुध्या 6 A. C D विरुद्धस्य 7 Except E. all mss भासमानत्व 8 D अलङ्कार 9 D तीय एव 10 A भदार्थं व्याचष्ट 11 A F अत्र 12 H चेति। बलविरोध सत्त्वातिनिबन्ध विरोधालङ्कारस्य द्वयोरपि श्लिष्टच विरोधिनो श्लिष्टच कुल्पतिमिति। After this unconnected passage is found एकतरस्य पृथ्वीपति etc (P 153) 13 A. C कारस्यापि अपरिच्छेदेति 14 Except E all mss छेद्य 15 A.C D E. वचनास्य 16 A C G तत्र 17 A C जन्मनि 18 A C D अननुभू 19 D प्रा–प्यपेक्ष 20 E अपूर्व 21 D ध्वसादुप 22 E महामो 23 D दुरुत्त E दुरन्तर 24 A C यति च 25 F सि पूर्वानुराग विप्रलम्भ त 26 A C विरहे D विरहहेतु 27 E. विरोधि

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिमकरमापास्यति मुनि. ॥

अत्र जलनिधि. पीत इति द्रव्यक्रिययोर्विरोधो मुनिगतेन महाप्रभावत्वेन समाधीयते । एवमन्यदपि ज्ञेयम् ।

विविक्तविषयत्वेन चास्य हृद्येः श्लेषगर्भत्वे विरोधप्रतिभोत्पत्तिहेतुः श्लेष औद्भटानाम् । दर्शनान्तरे तु संकरालकारः । यथा—"सन्निहित-बालान्धकारा भास्वन्मूर्तिश्च" इत्यादौ विरोधिनोर्द्वयोरपि श्लिष्टत्वे । एकस्य तु श्लिष्टत्वे "कुपतिमपि कलत्रवल्लभम्" इत्यादौ । एकविषयत्वे चायमिष्यते । विषयभेदे त्वसगतिप्रभृतिर्वक्ष्यते ।।

एव विरोधमुक्त्वा विरोधमूला अलकारा. उच्यन्ते । तत्रापि कार्य-कारणभावमूलत्वे विभावना तावदाह—

---

अय वारामिति । तृष्णा पिपासा [1]रत्नविषया लिप्सा च[2] । क एव जानीते [?] न कस्यचिदिद सभाव्यम् इत्यर्थ । [3]योजयति—अत्र [4]जलनिधिरिति । भेदान्तर सुशान-मित्याह—एवमिति ।

इह[5] श्लेषगर्भत्वे किं वृत्तमित्यत आह—विविक्तेति । श्लेषतो विविक्त[6]विषय-तयोक्तोदाहरणादौ दृश्यते यत । अत श्लेषगर्भत्वे श्लेषो [7]बाधक [8]उद्भटमताव-लम्बिनाम् अन्येषा तु सङ्कर[9] । उदाहरणम्—सन्निहितेति[10] । बालान्धकारा[11] [12]केश-कालिमा नूतन[13]तिमिर च । भास्वन्मूर्ति[14] भास्वतो रवे[15]मूर्तिश्च । इद द्वयोरपि विरोधिनो श्लिष्टत्वे[16] । [17]कुपतिमिति एकतरस्य । पृथ्वीपति कुत्सितपतिश्च । अत्र विशेषमाह[18]—एकविषयेति । विरोधस्यैकविषयत्वे विरोधालङ्कार । विषयभेदे त्वसङ्ग-त्यादिर्वक्ष्यते[19] ।

विरोधस्तु तदाभासो जात्याद्यर्थसमाश्रय ।
तद्वैचित्र्या[20]द्दशविधो विष[21]यैक्ये व्यवस्थित ॥

अथ[22] विरोधमूला[23] । तत्रापि कार्यकारणविरोधालङ्कारत्वेन विभावनोच्यते । तत्र सूत्रम्—

---

1 C रत्नानधिष्टया 2 C एक एव 3 A आयोन 4 D E. जन्मनि 5 Omitted in C 6 D E विविक्त 7 D बोध 8 D उपभट 9 A C सङ्कर 10 E. हित बा G हितबालेति 11 A C D कार 12 A's alt C. केशकल्मिमात्र 13 A. C F तनुस्तिमि 14 A's alt मुक्ति 15 A. मुनिश्च 16 A. अविषयत्वे 17 A कलत्र C कम्पायति 18 H विरोध 19 C वक्ष्यन्ते 20 D चित्र्य 21 H विषय स्य A C. विपर्ययैक्यैकव्यंतच्छिता 22. A G. विभावना विरो 23 A C F H मूल

## कारणाभावे कार्यस्योत्पत्तिर्विभावना ॥४१॥

इह कारणान्वयव्यतिरेकानुविधानात्कार्यस्य कारणमन्तरेणासंभवः। अन्यथा विरोधो दुष्परिहरः स्यात्। यदि तु कयाचिद्भङ्ग्या तथाभाव उपनिबध्यते, तदा विभावनाख्योऽलङ्कारः। विशिष्टतया कार्यस्य भावनात्। सा च भङ्गिर्विशिष्टकारणाभावोपनिबद्धा। अप्रसिद्धं तु कारणं वस्तुतोऽस्तीति विरोधपरिहारः। कारणाभावेन चोपक्रान्तत्वाद्बलवता कार्यमेव बाध्यमानत्वेन प्रतीयते, न तु तेनात्र कारणाभावः इत्यन्योन्यबाधकत्वानुप्राणिताद्विरोधालङ्काराद्भेदः। एवं विशेषोक्तौ कार्याभावेन कारणसत्ताया एव बाध्यमानत्वमुन्नेयम्। येन सापि विरोधाद्भिन्ना स्यात्। इह लक्षणे यद्यप्यन्यैः कारणपदस्थाने क्रियाग्रहणं कृतं, तथापीह कारणपदमेव विहितम्। न हि सर्वैः क्रिया-

---

कारणाभावे कार्यस्योत्पत्तिर्विभावना[1] ॥ [2]प्रसिद्धकारणाभावे सूक्ष्मकारणवशात् कार्योत्पत्ति[3]र्विशिष्टतया कार्यभावनात् विभावना। व्याचष्टे—इह[4] कारणेति[5]। कार्यं हि कारणमन्तरेण न संभवतीति तदन्वयव्यतिरेकानुविधानात् तदभावेऽपि यदि कार्यसंभवः, तदवास्त[6]वत्वात्[7] विरोधो दुष्परिहरः[8]। यदि केनचिदुक्तिवैचित्र्येण कारणाभावेऽपि कार्यसंभव[9] उपनिबद्धः[10] तदा [11]वैशिष्ट्येन कार्यभावना[12]द्विभावना। क (या[13]) चिदित्युक्तम्[14]। सा[15] केत्यत आह—सा[16]चेति। प्रसिद्ध[17]स्यैव कारणस्य अनुपनिबन्ध.[18] [19]अप्रसिद्धकारण[20]संभवात्तु [21]विरोधि। विरोधाद्वैलक्षण्यायाह—कारणाभावेनेति। प्रामाणिकत्वात् बलिना कारणाभावेन कार्यमेव बाध्यते, न तु कारणाभावः, अत उभयविरोधानुप्राणितात् विरोधात्[22] विशेषः। एतद्व्यतिरेकरूप[23]या नीत्या[24] वक्ष्यमाणस्य विशेषोक्त्यलङ्कारस्यापि विरोधतो भेद इत्याह—एवं विशेषोक्तावित्यादि। तत्र हि कार्याभावः कारणसत्ताया[25]बाधकः। अतः [26]साऽपि विरोधाद्विभिन्ना[27]। लक्षणांशे विमतिमुपन्यस्य दूषयति—इह लक्षण इति। क्रियाग्रहणं कृतम्। क्रियाभावे कार्योत्पत्तिः विभावनेति तथाऽपि कारणपदविधानार्हत्वान्निवेशितम्[28]। तत्र हेतुः[29]—न हि सर्वैरिति। क्रियाफल[30]मेव कार्यमिति न हि सर्वेषामभ्युपगमः, किन्तु वैयाकरणानामेव। अतः

---

1. D. वना व्याच 2. C. Omits प्र 3. Except C. all mss. पत्ति वि 4 Omitted in A. C. D. 5. H. इति प्रसिद्धकारणा (P. 156) 6 C. तदर्थत्वात् 7. A. C. वात् इ 8. E. हारः 9. A. C. भवो नि 10. D. E. F. निबन्धः 11. A. C. G. तद्वैशि 12. A. C. भावना क 13. All mss. कदाचित् 14. D. उक्ता 15. A. C. साद्वेत्य 16. A's alt. साद्विरोधो चेति 17. A. सिद्धविधानात्तदभावेऽपि का 18. A. C. F. G. निबद्धात् 19. C. omits अ 20. A. C. F. G. सद्भावात् 21. F. न वि 22. D. F. omit त् 23. C. रूपाया C. 24. नित्या 25. D. E. omit या 26. A's alt. C. काऽपि 27. E. भिन्नां 28. A's alt. C. शितः 29. F. हेतुः क्रिया 30. A. C. D. F. फलत्वे का

फलमेव कार्यमभ्युपगम्यते । वैयाकरणैरेव तथाभ्युपगम्यत्वात् । अतो विशेषमनपेक्ष्य सामान्येन कारणपदमेवेह निर्दिष्टम् । यथा—

> असंभृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
> कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साथ वयः प्रपेदे ॥

अत्र द्वितीये पादे मदस्य प्रसिद्धं यदासवाख्यं कारणं तदभावेऽपि यौवनहेतुत्वेनोपनिबन्धः कृतः । मदस्य च द्वैविध्येऽप्यभेदाध्यवसायादेकत्वमतिशयोक्त्या । सा चास्यामव्यभिचारिणीति न तद्बाधेनास्या उत्थानम्, अपि तु तदनुप्राणितत्वेन । इयं च विशेषोक्तिवदुक्तानुक्तनिमित्तभेदाद्द्विधैव । तत्रासंभृतमिति उक्तनिमित्तोदाहृता । अनुक्तनिमित्ता यथा—

> अङ्कलेखामकाश्मीरसमालम्भनपिञ्जराम् ।
> अनलक्तकताम्राभामोष्ठमुद्रां च बिभ्रतीम् ॥

अत्र सहजत्वं निमित्तं गम्यमानम् । इयं च मालयापि भवन्ती दृश्यते । यथा—

> अनिद्रो दुःस्वप्नः प्रपतनमनद्रिद्रुमतटं
> जराहीनः कम्पस्तिमिररहितश्वाससमयः ।
> अनाघातं दुःखं विगतनिगला बन्धनधृतिः
> सजीयं जन्तूनां मरणमवनीशाश्रयरसः ॥

---

क्रिया[1]व्यतिरेकिणोऽपि कारणस्य सम्भवात् सामान्यत. कारणग्रहणमेव कृतम् ।

अत्र द्वितीयेति । मदस्या[2]सवकारणापोहेन यौवन[3]कारणोपनिबन्धो यौवनासवमदयोरभेदाध्यवसायात् । सा चातिशयोक्तिर्विभा[4]वना न व्यभिचरतीति न बाध्यते । अपि त्वनुग्राहकत्वेनावतिष्ठते । [5]तद्द्वैविध्यमाह—इयं चेति । अनेन विशेषोक्तेरपि द्वैविध्यं सूचितम् । तत्रासंभृ[6]तमिति । इयमेवोक्तनिमित्ता वयसो निमित्तत्वात् । अङ्कले[7]खामिति । काश्मीरसमालम्भन[8] कुङ्कुमालेप[9] निमित्तानुक्तिं दर्शयति—अत्र सहजत्वमिति । वैचित्र्यान्तरम् आह—इयं चेति । अनिद्र इति । प्रपतन मरणाध्यवसायेन पात. । तिमिर[10]सहितश्वाससमयो निद्रा अत्र तु तद[11]भावात्मक: । [12]आघातो [13]वधस्थान, धूनिर्धारणं अन्वयोऽनु[14]वृत्ति ।

---

1 D. क्रियाया ध्य 2. C. आसाव 3 C. कारणोपि D. करण 4. D. भावना 5. [5] Omitted in all except D 6. A. मधममि 7. A C. रेखा 8 A. C. मनं कालागरुकु 9 C लेपाने 10 A महिम 11 A. C. मद्भावा 12 A C. अयातो A's alt. कम्पातो F आघातो 13 A's alt पदस्थानं. C अवस्था D. E. वध 14. C. अनुसा आ

असंभृतं मण्डनमिति, कामस्य पुष्पव्यतिरिक्तमस्त्रमिति च। अत्र विवदन्ते—इयमेव विभावनेति केचित्। सभरणस्य पुष्पाणां च मण्डनमस्त्र प्रत्यकारणत्वाद्वाङ्मात्रमेतत्। एकगुणहानौ विशेषोक्तिरित्यन्ये। रूपकमेवाधिरोपितवैशिष्ट्यमिति त्वपरे। आरोप्यमाणस्य प्रकृते सभवात्परिणाम इत्यद्यतना। विभावना लक्षयित्वा तद्विपर्ययस्वरूपा विशेषोक्तिं लक्षयति—

कारणसामग्र्ये कार्यानुत्पत्तिर्विशेषोक्तिः ॥४२॥

आद्योदाहरणे द्वितीयतृतीयपादयोर्विमतिरित्याह—*असभृतमि[1]ति। सभरणपुष्पकारणाभावेऽपि मण्डनकामास्त्रकार्योत्पत्तेरियमेव विभावनेति केचित्। अन्ये तु सभरण[2]पुष्पयोर्मण्डनास्त्रे प्रत्यासत्रमदन्यायेन साक्षादकारणत्वाद्वा[3]ङ्मात्र[4] विभावनात्ववचनम्। किञ्च[5] एकगुणहा[6]निकल्पनाया साम्यदार्ढ्यं विशेषोक्तिरित्युक्तलक्षणविशेषोक्तिरियम्। सभरणाद्येकगुणहान्या मण्डनादे वयसा सह साम्यदा[7]र्ढ्यादित्याहु[8]। अपरे तु वयसि मण्डन[9]त्वाद्यारोपात्[10] रूपकमेव यत्त्व[11]सभरणादि वैशिष्ट्य तद[12]त्रैव अधिरोपितमित्याहु। अथ सिद्धान्त—आरोप्यमाणस्येति। आरोप्यमाणस्य मण्डनत्वादेर्वयोरूप प्रकृते[13]प्रतिपत्तिरुपादुपयोगात् परिणामोऽयम्। मण्डनादिकं हि[14] वयोरूपो[15]पप्राहिप्रतिपत्तिकत्वेन उपयुज्यते। रूपकत्वे हि वयसो मण्डन रूपोपग्राहितया[16] मण्डनमेवेदमित्यादि प्रसजेत्। अत परिणाम एव। अद्यतना इति आचार्य स्वात्म[1] प्रमुखान्वक्ति।

अप्रसिद्धकारणाभावे कार्योत्पत्तिर्विभावना।
कार्योत्पादनवैशिष्ट्याद्द्विधा सेय निमित्तत ॥

विशेषोक्त्यै सङ्गतिमाह—विभावनामिति। तत्र सत्रम्—कारण[18]सामग्र्ये कार्या[19]नुत्पत्तिर्विशेषोक्ति ॥ विभावनावैपरीत्येन विशेषमभिव्यङ्क्तु प्रयुज्यमाना

1 E इतीति 2 D Repeats भरण 3 A C F वार्ता 4 D E F मात्रक 5 A C किन्तु 6 A C हानि 7 A F दार्ढ्य 8 A F आह 9 E omits न 10 A C F शेषापारमेऽस्त्रत्वस्य मत्र 11 D यत्स्व 12 A C F G तत्रैव 13 E प्रकृति 14 D हि वयसो वयो 15 A C E F G H रूपो वयसो 16 A ग्राहिकतया 17. A C F स्वाम्यात्म F सवादात्म 18 F कारणेति 19 A कार्योत्पत्ति

* A The passage असभृतमिति परिणाम इति अद्यतना discussing the figure in the verse असभृत मण्डनमङ्गयष्टे etc. is found in different places in the three editions of the Sarvasva In the N S Ed (p 151) it occurs after the line अत्र सहजत्र निमित्त गम्यमान explaining the verse "अङ्गलेखां" etc In the T.S S Ed (p 154) it follows the line ending in तदनुप्राणितत्वेन which is the Vṛtti explaining the verse असभृत etc In the present edition, Vidyācakravartin has it after the verse "अनिद्रा दु स्वप्नो" etc., an illustration for serial Vibhāvanā

इह समग्राणि कारणानि नियमेन कार्यमुत्पादयन्तीति प्रसिद्धम्। अन्यथा समग्रत्वस्यैवाभावप्रसङ्गात्। या तु सत्यपि सामग्र्ये न जनयति कार्यं सा कञ्चिद्विशेषमभिव्यङ्क्तु प्रयुज्यमाना विशेषोक्ति। सा च द्विविधा उक्तनिमित्ता अनुक्तनिमित्ता च। अचिन्त्यनिमित्ता त्वनुक्तनिमित्तैव। अनुक्तस्य चिन्त्याचिन्त्यत्वेन द्वैविध्यात्। क्रमेण यथा—

कर्पूर इव दग्धोऽपि शक्तिमान्यो जने जने।<br>
नमोऽस्त्ववार्यवीर्याय तस्मै कुसुमधन्वने॥<br>
आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि।<br>
गन्तुमना अपि पथिक सङ्कोच नैव शिथिलयति॥<br>
स एकस्त्रीणि जयति जगन्ति कुसुमायुध।<br>
हरतापि तनु यस्य शम्भुना न हृत बलम्॥

अत्र सत्यपि दाहलक्षणेऽयिकले कारणेऽशक्तत्वाख्यस्य कार्यस्यानुत्पत्ति

---

विशेषोक्ति। व्याचष्टे—इह समग्राणीत्यादि। अन्यथेति। सामग्र्य हि[1] कार्यनिष्पत्त्यव सानकम्। तदेव चेत्कार्य न[2] जन[3]येत(त्) तदा किमेषा समग्रत्वम्। अत [4]कारणानि चेत् समग्राणि तदा नियमेन[5] कार्योत्पत्तिरिति स्थितम्। अनेन व्याप्तिर्दर्शिता[6]। अत्राभासतो विरोधमु[7]त्थापयति[8]—यत्त्विति। [9]कञ्चिदिति। यदि कारणसाम[10]ग्र्य कार्यानुत्पत्ति स्तदा विशेष कश्चिदभिव्यङ्ग्यस्स्यात्। इत्थ च सति विशेषमभिव्यङ्क्तुम् उक्तिरिति[11] विशेषोक्ति। तद्भेदार्थमाह—सा चेति। अचिन्त्यत्वम[12]तर्किता। तद[13]नुक्तेर्निमित्तमित्य नुक्तनिमित्तैव।

कर्पूर[14]इवेति। अत्र निर्भ[15]स्मान्त दाह[16]शक्तिवैकल्ये सामग्री। अथापि जने जने शक्तिमानिति कार्यानुत्पत्ति। आहूतो[17]ऽपीति। [18]आह्वानप्रत्युक्ति[19]जिगमिषा ( ) [20]सङ्कोचशैथिल्य[21]कारणसामग्री। नैवेति[22] तु कार्यानुत्पत्ति। तत्र हेतु [23]कान्ता-स्वप्नादि चिन्तितु शक्यम्।

स एक इति। [24]तनुहरण बलहरणे [25] सामग्री। न हृतमिति तु कार्यानुत्पत्ति। तत्र हेतु अनुक्तश्चिन्तितुमशक्य श्चिप्यपि योजयति—अत्र सत्य[26]पि दाहेति। स्वरूपेण

---

1 A C D G हि नाम 2 C नान्न 3 D E G जनयेयु 4 D आकार 5 A C न कार्यं 6 H दर्शिता लक्षणान्तर (P 159) 7 C उत्पादयति 8 D यति कश्चिद् 9 A C D किश्चि 10 C सामग्र्ये 11 A C उक्ति तद्भेद 12 E अतर्क्यता 13 D E तदथनु 14 A's alt C रपेति 15 A C भस्मकान्त-दाह 16 E दाह 17 A C आहूता 18 E किम् आ 19 F G उक्ति निद्रा विमुक्ति जि 20 A s a'‘t सचारते दी C सरोषते दी 21 D थिल्ये मा 22 D इति हृता का 23 D F हेतु अनुक्त 24 C न तु 25 A C हरण 26 A यपिदाहे

शक्तिस्वरूपेणाविरुद्धेन धर्मेणोपनिबद्धा। अवार्यवीर्यत्वं चात्रोक्तं निमित्तम्। तथाह्वानादयः संकोचशिथिलीकारहेतव इति तेषु सत्स्वपि तस्यानुत्पत्तौ कान्तास्वप्नसमागमाद्यनुक्तं सत् चिन्त्यं निमित्तम्। तथा तनुहरणकारणे सत्यपि बलहरणस्य कार्यस्यानुत्पत्तौ निमित्तमनुक्तमप्यचिन्त्यमेव, प्रतीत्यगोचरत्वात्। कार्यानुत्पत्तिश्चात्र क्वचित्कार्यविरुद्धोत्पत्त्या निबध्यते। एवं विभावनायामपि कारणाभावः कारणविरुद्धमुखेन क्वचित्प्रतिपाद्यते। तथा च सति,

> यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
> स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।
> सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
> रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥

इत्यत्र विभावनाविशेषोक्त्योः सन्देहसङ्करः। तथा ह्युत्कण्ठाकारणं विरुद्धं "यः कौमारहर" इत्यादि निबद्धमिति विभावना। तथा "यः कौमारहर" इत्यादेः कारणस्य कार्यं विरुद्धं "चेतः समुत्कण्ठत" इत्युत्कण्ठाख्यं निबद्धमिति विशेषोक्तिः। विरुद्धमुखेनोपनिबन्धात्केवलमस्पष्टत्वम्। साधकबाधकप्रमाणा-

---

शक्तिमानिति स्वशब्देन[1] विरुद्धेन धर्मेण क्वचिदपि विभावनया सङ्कीर्यत इति दर्शयितुमाह—कार्यानुत्पत्तिरित्यादि।

यः कौमारेति। नायिका काचिदुद्दीपन[3]विभावना(विभावा)भिरता वक्ति। यो मे प्रथमपरिभोगेन[4] कौमारं हृतवान् अद्यापि स एव वरः[5] वसन्त[6]क्षपा. अपि ता एव। उन्मीलितमालतीवत् सुरभयः कदम्बानिलाः त एव। कदम्बोऽत्र धूलीकदम्बाख्यस्तद्विशेष[7] यो वसन्ते विकसति। अहमपि सा चैवास्मि, पुरातनी प्रेमधारा[8] न[9] कुण्ठितेत्यर्थः। अथापि रेवानदीकूले तत्र वेतसीतरुतले सुरतव्यापारलीलाविधौ चेतस्समुत्कण्ठते। योजयति[10]—अत्र विभावनेत्यादि। कौमा[11]रहरादि[12]सद्भावोऽनुत्कण्ठा[13]कारणसाम[14]ग्रयम्। अथापि चेतस्समुत्कण्ठत इति विरुद्धोपनिबन्धेनानुत्कण्ठानुत्पत्तिरुक्ता। अतो विशेषोक्तिः। तथा कौमारहराद्ययोगरूपकारणाभावे तत्सद्भाव[15]रूपविरोधिमुखेनोपनिबद्धेरुत्कण्ठाकार्योत्पत्तिर्विभावना। तयोश्च साधकबाधकाभावात्[16] सन्देहसङ्करः। कार्यकारण[17]-

---

1. D omits न 2 D इति 3 A's alt C उद्यन 4 C. भोगेऽपि स एव 5 A. परः 6 All mss वसन्ताः 7 C. शेषयार्त्रि सन्ते ■ A's alt. प्रमथाधारा नकु 9 Omitted in A's alt F G 10 D योजयति अत्रेति नायक (under सम p. 162)* 11 C. कुमार 12 D. स्वभावो 13 A C F कराठासा 14. D. सामान्य 15. A C. भाव यद्रूप 16 C. भादतस्स 17 D. कारणा

* The omitted portion is found later under अर्थापत्ति after व्याचष्टे as व्याचष्टे (a gap) अत्र विभावनेत्यादि to योजयति अत्रेयादि (under सम p. 162) After this the ms ends abruptly.

भावाच्चात्र सदेहसकर । या तु "एकगुणहानिकल्पनायां साम्यदार्ढ्यं विशेषोक्ति." इति विशेषोक्तिर्लक्षिता सा अस्मद्दर्शने रूपकभेद एवेति न पृथग् वाच्या ।

अतिशयोक्तौ लक्षितायामपि कश्चित्प्रभेद. कार्यकारणप्रस्तावेनेहोच्यते—

**कार्यकारणयोः समकालत्वे पौर्वापर्यविपर्यये चातिशयोक्तिः ॥४३॥**

इह नियतपूर्वकालभावि कारण नियतपश्चात्कालभावि च कार्यमिति कार्यकारणयोर्लक्षण प्रसिद्धम् । यदा तु विशेषप्रतिपादनाय तयोरेतद्रूपापगम. क्रियते तदातिशयोक्ति । एतद्रूपापगमश्च कालसाम्यनिबन्धन. कालविपर्यासनिबन्धनश्चेति द्विधाभवन्नतिशयोक्तिमपि द्वैधे स्थापयति । क्रमेण यथा—

पश्यत्सूद्गतसान्द्रविस्मयरसप्रो.फुल्लनेत्रोत्पल

भूपालेषु तवात्र सूक्ष्मनिशिते निस्त्रिंशधाराध्वनि ।

---

भावयोश्च विरोधिसद्भावायातत्वादस्फुटत्वम् । अनयोश्च न सर्वदा सङ्कर । कार्योत्पत्त्य[1]नुत्पत्त्योरन्यतर[2]विवक्षणे शुद्धत्वात् । प्रकृतोदाहरणे तु उत्कण्ठो[3]त्पत्त्यनुत्कण्ठानुत्पत्त्योर्द्वयोरपि विवक्षा[4] । अत्र श्लोक —

कार्यांशस्य यदा भावाभावौ[5] वक्तुमपे[6]क्षितौ ।

विभावनाविशेषोक्त्योस्तदा सन्देहसङ्कर. ॥

लक्षणान्तरमस्या पीत्याह—या[7]त्वेकगुणेत्यादि ।

विशेषोक्तिर्भवेत् कार्यानुत्पत्तिस्सति कारणे ।

अन्ये[8]न[9]गुणहान्या तु[10] साम्यदार्ढ्यमलक्षणम् ॥

प्रतिज्ञातचरायातिशयोक्त्यन्तराय सङ्गति —अतिशयोक्ताविति । तत्र सूत्रम्—[11]कार्यकारणयो समकालत्वे पौर्वापर्यविपर्यये चातिशयोक्ति । कार्यकारण[12]विरोधमूलत्वादिह[13] कथनम् । प्रपञ्चाय व्याचष्टे—इह नियतेति । एतद्रूपापगम[14] पौर्वापर्य नियमभङ्ग[15] । द्वैविध्यमाह—एतद्रूपेति[16] ।

पश्यत्सूद्ग[17]तेति । राजसु विस्मेरेषु पश्यत्सु तव खड्गे युगपदरीणां निरुपमेन[18] श्रिया प्रवेशेन चेन्द्र[19]जाल कृतम् । अत्र[20] श्रीप्रवेश[21] कीर्ति[22]निर्गमहेतौ समकालोपनिबन्ध[23] ।

---

1 D त्त्यानु 2 A C D अविव 3 C कण्ठात् पत्त्यनु 4 A विवक्षामात्र श्री A's alt. विवक्षामत्र C वक्षामात्र 5 C भावा 6 A F. अपेक्षते C. अपेक्षते 7 H omits त्या 8 D E यत्रैक 9 A C H एकहान्या 10 I तुन्दार्ढ्यं 11. F. कार्येति 12 A C कारणयो E. G कारणादि H कारणमूल 13 G इह पुन 14 D गम 15 D भङ्ग 16 H रूपति आभा 17. E. omits द 18. D गमनन 19 C omits च A's alt न्मान्द्र 20 Except G all read तत्र 21 A. C. D प्रवेशो 22 A. C D लक्ष्मीनि 23 C निबद्ध

कीर्त्या च द्विषतः श्रिया च युगपद्राजन्यचूडामणे
हेलानिर्गमनप्रवेशविधिना पश्येन्द्रजालं कृतम् ॥
पथि पथि शुकचञ्चूचारुराभाङ्कुराणां
दिशि दिशि पवमानो वीरुधां लासकश्च ।
नरि नरि किरति द्राक्सायकान्पुष्पधन्वा
पुरि पुरि च निवृत्ता मानिनीमानचर्चा ॥

पूर्वत्र प्रौढोक्तिनिर्मितेऽर्थे शत्रुश्रीप्रवेशः कीर्तिनिर्गमनस्य हेतुरिति भिन्नकालयोस्तुल्यकालत्वं निबद्धम्[1]। उत्तरत्र तु माननिवृत्तिः स्मरशरप्रकिरणकार्येति तयोरुपपन्नं पौर्वापर्यं व्यत्ययेन निर्दिष्टमित्यतिशयोक्तिः । कार्यस्य चाशुभावाख्यो विशेषः प्रतिपाद्यते ।

तयोर्विभिन्नदेशत्वेऽसंगतिः ॥४४॥

तयोरिति कार्यकारणयोः । यद्देशमेव कारणं, तद्देशमेवकार्यं दृष्टम् । न हि महानसस्थो वह्निः पर्वतदेशस्थं धूमं जनयति । यदा त्वन्यदेशस्थं कारणमन्यदेशस्थं च कार्यमुपनिबध्यते, तदोचितसंगतिनिवृत्तेरसंगत्याख्योऽलंकारः । स च विरोधिकार्यकारणभावप्रस्तावादिह लक्ष्यते । यथा—

प्रायः पथ्यपराङ्मुखा विषयिणो भूपा भवन्त्यात्मना
निर्दोषान्सचिवान्भजत्यतिमहांल्लोकापवादज्वरः ।
धन्याः श्लाघ्यगुणास्त एव विपिने संतोषभाजः परं
बाह्योऽयं वरमेव सेवकजनो धिक्सर्वथा मन्त्रिणः ॥

---

पथि पथीति । आभा प्रभा । लासको[1] नर्तकः । नरि नरि पुसि पुंसि[2] । अत्र सायककिरणकार्यभूता मान[3]निवृत्तिः प्राक् सिद्धत्वेनोक्ता । उभयत्र योजयति[4]—पूर्वत्रेत्यादि । प्रौढोक्तिनिर्मित[5]मिन्द्रजालात्मकं व्यङ्ग्यम् । विशेषमाह—कार्यस्य चेति[6] ।

कार्यकारणयोर्यो[7] तु कालसाम्यविपर्ययौ ।
अन्या त्वतिशयोक्तिस्सा विरोधाद्योपजीवनात् ॥

प्रसङ्गत्यं सूत्रम्—तयोर्वि[8]भिन्नदेशत्वेऽसङ्गतिः । व्याचष्टे—तयोरिति । उचितेति[9] । समदेशत्वमुचिता सङ्गतिः । असङ्गतिमाह—विरोधीति । प्रायः पथ्येति[10] । प्रायेण भूपाः स्वतो हितपराङ्मुखा विषयाक्रान्ता भवन्ति । लोकापवादस्तु निर्दोषान्

---

1. Omits ला D. लासकौ 2. H. पुंसि उभयत्र 3 A's alt. C. मानने नि D. मानन हि चू 4. D repeats जयति 5. E. मित इ 6. A. C. F. G. त्विति 7. A. योंस्तु स्तः का C. H. योस्तुकाल 8. A. C. विरुद्ध F. तयोरिति व्या 9. A. C. चिन्तेति 10. A. पथ्ये

अथ पथ्यपराङ्मुखत्वमुपालम्भविषयत्वस्य भिन्नदेशहेतुरित्यसङ्गतिः। एवं—

सा बाला वयमप्रगल्भवचसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरभरं धत्ते सखेदा वयम्।
सा क्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यसमाश्रितैरपटवो जाताः स्म इत्यद्भुतम्॥

इत्यत्र ज्ञेयम्। अत्र बाल्यनिमित्तमप्रगल्भवचनत्वमन्यदन्यत्तु स्मरनिमित्तकमित्यनयोरभेदाध्यवसायः। एवमन्यत्र ज्ञेयम्।

विरूपकार्यानर्थयोरुत्पत्तिर्विरूपसङ्घटना च विषमम् ॥४५॥

विरोधप्रस्तावेनेह लक्षणम्। तत्र कारणगुणप्रक्रमेण कार्यमुत्पद्यत इति प्रसिद्धौ यद्विरूपं कार्यमुत्पद्यमानं दृश्यते तदेकं विषमम्। तथा कश्चिदयं साधयितुमुद्यतस्य न केवलं तस्यार्थस्याप्रतिलम्भो, यावदनर्थप्राप्तिरपीति द्वितीयं विषमम्। अत्यन्ताननुरूपसङ्घटनयोर्विरूपयोश्च सङ्घटना तृतीयं विषमम्। अननुरूपसंसर्गो हि विषमम्। क्रमेण यथा—

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते॥
तीर्थान्तरेषु मलपङ्कवतीर्विहाय दिव्यास्तनूस्तनुभृतः सहसा लभन्ते।

---

सचिवानेति। विपिने सन्तोप[1]भाजो मुनय[2]। यद्वा[3] वाह्यो[4] मन्त्रा[5]नधिकृतस्सेवक[6]जनो [7]वर मन्त्रिणस्तु [8]धिक्। योजयति—अत्रेति। लोकापवादस्य[9] पथ्यविमुखत्व विभिन्नाश्रयो हेतु[10]। इत्य वैचित्र्यान्तरेऽपि दर्शयति—एवमिति। सा बालेति। योजयति—अत्र चेत्यादि[11]। निगमयति—एवमिति[12]। अन्यत्र विच्छित्यन्तरे।

कार्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गति[13]।
अभेदाध्यवसायादि विच्छित्त्या दृश्यते च सा॥

विषमार्थं सूत्रम्—विरूप[14]कार्यानर्थयोरुत्पत्ति[15]विरूपसङ्घटना च विषमम्[16]। कारणविरूप[17]कार्योत्पत्तिरेक, अनर्थोत्पत्तिरन्यत् अननुरूपयो सघटना तृतीयमिति त्रिधा विषमम्[18] [19]सङ्गति—विरोधेति। व्याचष्टे—तत्र कारणेति। निर्वक्ति—अननुरूपेति। सद्य इति। करस्पर्शः पाणिग्रहः। नीलाया पाण्डुरूप कार्यम्।

तीर्थेति[20]। तीर्थान्तरेषु [21]पातकपङ्किला[22] तनूर्विहाय दिव्यास्तनूर्लभन्ते।

---

1, D तोऽपि 2. H मुनय. मोताप 3. C यथा 4. A. C वाह्य 5 A. माग्रानधि C माग्रानधि 6 D. सेवज 7 E. G. पर. 8. A's alt. C. अधिकं 9. H. वादस्तु 10. H. हेतुः स्यान्त 11. च omitted in A C. 12 H इति कार्यं 13. सङ्गम 14. F रूपेति 15 A C पत्तिर्वा वि 16 H. चमं विरूप 17. C. विरूद्र-पकार्यां 18. D. विषममग 19 A. C. H मन्त्र सुनं वि 20 A. C omit इति 21 A. C. उपपात 22. A पङ्किलान् तु पुनर्विहा पङ्किलास्तु लभ

वाराणसि ! त्वयि तु मुक्तकलेबराणां लाभोऽस्तु मूलमपि यात्यपुनर्भवाय ॥

अरण्यानी क्वेयं धृतकनकसूत्रः क्व स मृगः
क्व मुक्ताहारोऽयं क्व च स पतगः क्वेयमबला ।
क्व तत्कन्यारत्नं ललितमहिभर्तुः क्व च वयं
स्वमाकूतं धाता किमपि निभृतं पल्लवयति ॥

अत्र कृष्णवर्णाच्छुक्लवर्णोत्पत्तिः, कलेवरात्यन्तापहारलक्षणानर्थान्तरोत्पत्तिरिति, अत्यन्ताननुरूपाणां चारण्यान्यादीनां परस्परसङ्घटनं क्रमेण मन्तव्यम् । केवलमनर्थोत्पत्तिरत्र व्याजस्तुतिपर्यवसायिनीति शुद्धोदाहरणमभ्यूह्यम् ।

## तद्विपर्ययः समम् ॥४६॥

विषमवैधर्म्यादिह प्रस्तावः । यद्यपि विषमस्य भेदत्रयमुक्तं, तथापि तच्छब्देन सम्भवादन्त्यो भेदः परामृश्यते । पूर्वभेदद्वयविपर्ययस्यानलङ्कारत्वात् । अन्त्यभेदविपर्ययस्तु चारुत्वात्समाख्योऽलङ्कारः । स चाभिरूपानभिरूपविषयत्वेन द्विविधः । आद्यो यथा—

वाराणसि[1] ! त्वयि तु त्यक्ततनूनां दिव्यतनुलाभस्तावदास्तां मूलं[2] प्राचीनां[3] तनुरप्यपुनर्लाभाय याति[4] । अत्र मूलनाशलक्षणानर्थोत्पत्ति[5] ।

अरण्यानीति । आकूतं हृदयम् । निभृतं[6]गूढं पल्लवयति प्रकाशयति । अत्रारण्या[6]न्यादीनां विरूपाणां असङ्घटनीयानां सङ्घटना । त्रिष्वपि योजयति—अत्र कृष्णे[8]त्यादि । ननु मध्यमोदाहरणे व्याजस्तुतिपर्यवसानम् इत्यत आह—केवलमिति । स्तुतिनिन्दा[9]च्छायापरित्यागे शुद्धं [10]सुज्ञातत्वादभ्यूहितुं शक्यम् ।

विरूपानर्थयोर्हेतोरुत्पत्तिर्विषमं मतम् ।
तथा [11]विरूपघटना तेनेदं त्रिप्रभेदकम् ॥

[12]समार्थं सूत्रम्—तद्विपर्यय[13]स्समम्[14] । तृतीयभेदापेक्षया विषमविपर्ययस्समम् । सङ्गतिपुरस्कारेण व्याचष्टे—विषमेत्यादि । अनलङ्कारत्वा[15]दिति । सरूपकार्यस्यायस्योत्पत्तौ न हि विच्छित्तिः । [16]द्वैविध्यमाह—स चेति[17] । स[18]चान्त्यो भेदः ।

1. A C. णसीत्यक्त D णसि त्य 2 A अल 3. D प्राचीन 4 A C F G H भवति 5 A's alt. C H. इद 6. A C F. G H I. अरण्यादी 7 C. घटनयाना 8 H कृष्णे विरूप 9 A C निन्द्योश्च परि 10. D मज्ञानत्वा A सुज्ञानपदभ्यू C सुज्ञानादभ्यू 11 H त्रिरूप 12 Omitted in A C 13 F पर्ययेति 14 D सम भे 15 A C F G H omit इति 16 D द्वैविध्य 17 H स चेति योजयति 18 D चाभेद

त्वमेवं सौन्दर्या स च रुचिरतायाः परिचितः
कलानां सीमानं परमिह युवामेव भजथः ।
अयि द्वन्द्वं दिष्ट्या तदिह सुभगे ! संवदति वा-
मतः शेषं यत्स्याज्जितमिह तदानीं गुणितया ॥

अत्राभिरूपस्यैव नायकयुगलस्योचितं सङ्घटनमाशंसितम् । द्वितीयो यथा—

चित्रं चित्रं बत बत महच्चित्रमेतद्विचित्रं
जातो दैवादुचितरचनासंविधाता विधाता ।
यन्निम्बानां परिणतफलस्फातिरास्वादनीया
यच्चैतस्याः कवलनकलाकोविदः काकलोकः ॥

अत्रानभिरूपाणां निम्बानां काकानां च समागमः प्रशंसितः । आनुरूप्यात्समत्वव्यपदेशः ।

विरोधमूलं विचित्रं लक्षयति—

## स्वविपरीतफलनिष्पत्तये प्रयत्नो विचित्रम् ॥४७॥

यस्य हेतोर्यत्फलं, तस्य यदा तद्विपरीतं भवति, तदा तद्विपरीतफल-

त्वमेवमिति । त्वमेवंविधसौन्द[1]र्या[2] स च रुचिरताया[3] परिचितः युवा कला[4]भिज्ञो च । शेष पाणिग्रहणम् । तदा गुणत्व[5] विश्वोत्कर्षी स्यात् । योजयति—अत्रेति । नायकेत्येकशेषः नायको नायिका चेति ।

चित्र[6] चित्रमिति । स्फातिः स्फीतता । कोविदो निपुणः । [7]योजयति—अत्रेति । द्वयोरन[8]भिरूपत्व मानुरूप्यम् ।

सरूपयोस्सघटना समालङ्कार इष्यते ।
श्लाघ्या श्लाघ्यत्वयोगेन द्वौ[10]भेदावस्य सङ्ग[11]तौ ॥

विचित्राय[12]सङ्गति[13]—विरोधेति । सूत्रम्—स्वविपरीतफल[14] निष्पत्तये प्रयत्नो विचित्रम्[15] । विपरीतफलाय प्रयत्नो विचित्रम् । व्याचष्टे—[16]यस्येति[17] । तद्वि[18]परीतेति । तस्य विपरीतफलस्येत्यर्थः ।

1. D. सौक्यों 2. C. यदि च 3. A C. D. F. तायां 4. D. कालाभि 5 A C. F. पत्नमपि स्यात् तर्हि स्यात् यो 6. A. C. G. चित्राचि 7. A. C. स्फातिः स्फीतता [illegible] H. त्रिरूपं यो 9. A. C. अनल्परूप D. अभिरू 10. D. यो 11. a. b. c. समतौ 12. A E. H विचित्रार्थमं A's alt. C विचित्राय 13 A. C. संगति बोधयति सूत्रं 14. F. फलाय प्र 15. A. विचित्रः व्याचष्टे 16. H यस्येति 17. C इति विपर्ययं तु व्यत्ययः भेदा 18. A C. भेदाद्वि G तदा तद्वि

निष्पत्त्यर्थं कस्यचित्प्रयत्न उत्साहो विचित्रालङ्कारः। आश्चर्यप्रतीतिहेतुत्वात्। न चायं प्रथमो विषमालङ्कारप्रकारः। स्वनिषेधमुखेन वैपरीत्यप्रतीतेः। विपरीतप्रतीत्या तु स्वनिषेधस्तस्य विषयः। यथा—'तमालनीला शरदिन्दुपाण्डु' इत्यादौ। इह त्वन्यथा प्रतीतिः। यथा—

घेत्तुं मुच्चइ अहरो अण्णंतो वलइ पेक्खिउं दिट्ठी।
घडिदुं विहडंति भुआ रआअ सुरअम्मि वीसामो॥

अत्र मोचनवलनविघटनविश्रमाणां यथाक्रमं ग्रहणप्रेक्षणघटनरमणानि विपरीतफलानि प्रयत्नविषयत्वेन निबद्धानि। यथा वा—

उन्नत्यै नमति प्रभुं प्रभुगृहान्द्रष्टुं बहिस्तिष्ठति
स्वद्रव्यव्ययमातनोति जडधीरागामिवित्ताशया।
प्राणान्प्राणितुमेव मुञ्चति रणे क्लिश्नाति भोगेच्छया
सर्वं तद्विपरीतमेव कुरुते तृष्णान्धदृक्सेवकः॥

अत्र विपरीतफलनिष्पादनप्रयत्नः सुज्ञानः।

आश्रयाश्रयिणोरनानुरूप्यमधिकम् ॥४८॥

विरोधप्रस्तावादिह निर्देशः। अनानुरूप्यस्य विरोधोत्थापकत्वात्।

---

निर्वक्ति—आश्चर्येति। विषम[1]प्रकाराद्विलक्षण्या[2]ह—न चायमिति। इह हि स्वनिषेधो वैपरीत्य[3] गमयति। विषमे तु व्यत्ययः। उदाहरणतो [4]द्रढयति—तमालेति[5]। इह[6] त्वन्यथा—[7]घेत्तुमिति।

([8]ग्रहीतु) मुच्यतेऽध[9]रोऽन्यतो वल[10]ति ([11]प्रेक्षितु[12]) दृष्टिः।
घटितु विघ[13]टेते भुजौ (रताय[14]सुरतेषु) विश्रम॥

योजयति—अत्रेत्यादि। उन्नत्या इति। भोगेच्छया[15] भोक्तुमित्यर्थः। योजनं स्फुटमित्याह—अत्रेति।

प्रयत्नस्तु विचित्र[16] स्याद्विपरीतफलाप्तये।
निषेधतो[17] वैपरीत्याद्विषमालङ्कृतेर्भिदा॥

अधिकार्थं सूत्रम्—आश्रयाश्रयिणोरना[18]नुरूप्यमधिकम्[19]॥ आश्रयाश्रयिणोरयथार्थ्यम् अधिकम्। [20]सङ्गतिं व्याचष्टे—विरोधेत्यादि। आश्रयाश्रयित्वात्[21] आश्रय्या-

---

1 H विस्य 2. A. C. H. क्षण्यं 3. C. रीत्यं 4 A C दृढय 5 H. इति प्रयत्नस्तु 6 A अत्र अन्य F. omits इह तु 7. A. इत्यादेत्तुकुम्मिति C ए था घेतु कुम्मिति F घेत्तु 8. All mss. गृहीतु 9 D. अधरं 10. A C. प एतुं इ 11 D. E. F. G. वर्तते 12. All mss एतुं 13 A. C. घटयते F घटते 14 All read रतस्य सुरते पि 15. D भोगे वा भोक्तुं 16 A's alt विचित्र 17 C D निषेधतो 18. C आनुरू H अयथार्थं 19. A. C. कम् सम्प्रति 20. D. सङ्गतिं व्या 21. C. H. स्यात् इति

तत्रानानुरूप्यमाश्रयस्य वैपुल्येऽप्याश्रितस्य परिमितत्वाद्वा, आश्रितस्य वैपुल्येऽप्याश्रयस्य परिमितत्वाद्वा स्यात् । क्रमेण यथा—

द्यौरत्र क्वचिदाश्रिता प्रविततं पातालमत्र क्वचि-
त्क्वाप्यत्रैव धराधराधरजलाधाराविधिर्वर्तते ।
स्फीतः स्फीतमहो नभः कियदिदं यस्येत्थमेवंविधै-
र्दूरे पूरणमस्तु शून्यमिति यन्नामापि नास्तं गतम् ॥

दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टङ्कारध्वनिरार्यबालचरितप्रस्तावनाडिण्डिमः ।
द्राक्पर्यस्तकपालसंपुटलसद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति ॥

पूर्वत्र नभस आश्रयस्य वैपुल्येऽप्याश्रितानां द्युप्रभृतीनां पारिमित्यं चारुत्वहेतुः । उत्तरत्र तु टङ्कारध्वनेराश्रितस्य महत्त्वेऽपि ब्रह्माण्डस्याश्रयस्य स्तोकत्वम् ।

## परस्परं क्रियाजननेऽन्योन्यम् ॥४६॥

इहापि विरोधप्रस्ताव एव निर्देशकारणम् । परस्परजननस्य विरुद्ध-

---

धित्वाच्च द्वैविध्यमाह—तत्रेत्यादि[1] ।

द्यौरत्रेति । द्यौस्स्वर्गं, धरा पृथ्वी, जलाधारास्समुद्रास्त[2]दवधिरिति [3]निरुपेप-त्वोक्ति अहो कियत्, इयत्तैव नास्तीत्यर्थः । पूरण[4]दूरेऽस्तु वा पूरणकतयेत्यर्थः । यावता[5] शून्यमिति नाम्नोऽपि नास्ति गति काचित् ।

दोर्दण्डेति - आञ्चि[6]तं आया[7]मितम्[8] । नत्वञ्चितमिति पाठ[7] । गतिपूजनयोरनुप-योगात् । [9]आङ्गिराया[10]मार्यो धातु । भ्राम्य[11]त्पिण्डितचण्डिमा च । योजयति—पूर्वत्रेति ।

अना[12]नुरूप्यमधिकमाश्रयाश्रयिणोर्मतम् ।
आश्रयाश्रयिवैपुल्यवशतो द्विप्रभेदकम्[13] ॥

अन्यो[14]न्यार्थं सूत्रम्—परस्परं[15] क्रियाजननेऽन्योन्यम् । क्रिया[16]व्यतीहारेऽन्योन्या-लङ्कारः । सङ्गतिकं व्याचष्टे—इहापीत्यादि[17] । स्व[18]रूपेति । स्व[19]रूपापेक्षया परस्पर-

---

1. H आदि अना नु 2. D. तदवधिरिति 3 A C. D F निरोप 4. A. C पूरणाद्रन 5 A C. D. यावन्याम्नाऽस्त्यमिति ना 6. A. C. घञ्चि 7. Except F all mss. आयमि 8. F. आदि आयाम इति धातु न त्व 9. A. C. अङ्गि 10. C. आयामर्यौ 11. C. म्यपि D भ्राम्य च E. भ्राम्य ब 12. C. अमनु 13. C. भेदकः 14. C अन्योऽन्या 15. F. स्परं इति 16. E. G व्यति 17. H यादि विपाशुग 18. A. रूप स्वरूपा 19 C रूपो स्वरू

त्वात्। क्रियाद्वारकं यत्र परस्परोत्पादकत्वं, न स्वरूपनिबन्धनं, स्वरूपस्य तथात्वोक्तिविरोधात् तत्रान्योन्यालङ्कारः। यथा—

> कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तलस्य।
> अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः॥

अत्र शोभाक्रियामुखकं परस्परजननम्।

अनाधारमाधेयमेकमनेकगोचरमशक्यवस्त्वन्तरकरणं च विशेषः ॥५०॥

इहाधारमन्तरेणाधेयं न वर्तत इति स्थितावपि यस्तत्परिहारेणाधेयस्योपनिबन्धः, स एको विशेषः। यच्चैकं वस्तु परिमितं युगपदनेकत्र वर्तमानं क्रियते स द्वितीयो विशेषः। यच्च किंचिदारभमाणस्यासंभाव्यवस्त्वन्तरकरणं स तृतीयो विशेषः। आनुरूप्यपरिहाररूपविरोधप्रस्तावादिहोक्तिः। क्रमेण यथा—

> दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्।
> रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः॥

> प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरः सा
> पर्यङ्के सा दिशि दिशि च सा तद्वियोगाकुलस्य।
> हंहो चेतः प्रकृतिरपरा नास्ति ते कापि सा सा
> सा सा सा सा जगति सकले कोऽयमद्वैतवादः॥

> निमेषमपि यद्येकं क्षीणदोषे करिष्यसि।
> पदं चित्ते तदा शम्भो ! किं न संपादयिष्यसि॥

---

जननम्यासभवेन[1] सम्यग्विरोधित्वात् क्रियाद्वारकमेवेह परस्परजननम्। कण्ठस्येति। तनुत्वरम्यत्वे देवीकण्ठस्य [2]आत्मोत्कृष्ट[3]त्वे सामग्री मुक्ताकलापस्य च वृत्तत्वात् निस्तलत्वमामोचनीयत्वं। इत्य द्वयोरपि सम्पन्नसामग्रीकत्वात् भूषणभूष्यभावसाधारण[4]। योजयति—अत्र शोभेति। क्रियामुख[5]क क्रियाद्वारकम्।

क्रियाजननमन्योन्य[6]मन्योन्यालङ्कृतिर्मता।

विशेषार्थं सूत्रम्—अनाधारमाधेयमेकमनेकगोचरमशक्यवस्त्वन्तरकरणं च विशेष[8]। दिवमपीति। दिवमुपयातानामपि गिरो रमयन्ति जगन्तीत्यनाधाराधेयता[9]। [10]प्रासादेति—अत्रैकस्यानेकगोचरता[11]। निमेषमपीति। अत्र सर्वसम्पादनात्तनोऽशक्य-

1. D. भवेन म 2 E. G. आत्मोत्कृष्टे 3. D. omits इ 4 A. F. साधारणं 5 A. C. मनं क्रियाजनन 6 C. योन्यालंकृ 7. F. धारेति 8 A. C F. H. शेषः गिरो D. शेषः दिवमुप 9 H देयत्वात् अ 10 A C. H. प्रसादे सति 11. H. चरता व्याख्यानार्थं (p 167)

अत्र कवीनामाधाराणामभावेऽप्याधेयाना गिरामवस्थितिरन्यत्रभावो विषयार्थ इति विषयत्वेन तेषामाधारत्वात्। एकस्या एव योषितः प्रासादादौ युगपदवस्थानं, तथा चित्तविषये पदकरणे प्रस्तुतेऽपि भावि लोकोत्तरवस्तुसंपादन क्रमेण ज्ञेयम्।

यथा साधितस्य तथैवान्येनान्यथाकरणं व्याघातः ॥५१॥

कश्चिदुपायविशेषमवलम्ब्य केनचिद्यन्निष्पादितं वस्तु तत्ततोऽन्येन केनचित्तत्प्रतिद्वन्द्विना तेनैवोपायविशेषेण यदन्यथा क्रियते स निष्पादितवस्तुव्याहतिहेतुत्वाद्व्याघातः। यथा—

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुमश्चारुलोचनाः॥

अत्र दृष्टिलक्षणेनोपायेन स्मरस्य हरेण दाहविषयत्वं निष्पादितम् मृगनयनाभिः पुनस्तेनैवोपायेन तस्य जीवनीयत्वं क्रियते। तच्च दाहविषयत्वस्य प्रतिपक्षभूतम्। तेन व्याघाताख्योऽयमलङ्कारः। सोऽपि व्यतिरेकनिमित्तत्वेनात्रोक्तः। विरूपाक्षस्येति चारुलोचना इति च व्यतिरेकगर्भविव वाचकौ। जयिनीरिति व्यतिरेकोक्तिः। पूर्ववदिह प्रकरणस्य लक्षणम्। प्रकारान्तरेणाप्ययं भवतीत्याह—

---

यस्त्वन्तरस्य[1] करणम्। निष्पपि योजयति—अत्र कवीनामिति। येषाम् इति षष्ठीनिर्देशेऽपि न[2] गीर्भिस्सह सम्बन्धमात्रम्[3], अपि तु विशिष्ट[4] सम्बन्ध इत्याह—अन्य[5]त्रेति। भावि लोकोत्तरेति। विशब्देन[6] नञा चाक्षिप्तोऽयं।

अनाधारादिभेदेन विशेषोऽपि त्रिधा मत।

व्याघातार्थं सूत्रम्—यथा[7] साधितस्य तथैवान्येनान्यथा[8]करण व्याघात[9]। एवेन यद्यथा साधित तस्य तथैवान्यथीकरण व्याघात। व्याचष्टे—[10]कश्चिदिति। दृशेति। दृशा दग्धस्य दृशैव जीवनाधारुलोचना विरूपाक्षस्य जयिन्य। योजयति—अत्र दृष्टी[11]ति। जीव[12]नीयत्वमिति। प्राणितव्य[13] जीवनमित्यर्थं। अथ चात्र व्यतिरेकहेतुरित्याह—सोऽपीति। विरूपाक्षचारलोचनाशब्दौ हि[14] व्यतिरेकगर्भौ। जयेन च व्यतिरेक उक्त। तद्गतिमाह—पूर्ववदिति। अनानुरूप्य[15] इह लक्षण प्रकरणस्य।

---

1. D. करणस्य कर 2. Omitted in all except E. 3 A. D. E. मात्र 4. A C विशिष्ट 5 C. E अनन्यत्र D. अन्यत्रेति 6. A नाशब्दाक्षि C माक्षिप्तो 7. F. यथेति 8 E. अन्यथा 9 A C घात व्याचष्टे 10 A. C. D. F किञ्चि 11 H. इति यात दृशेति (P 168) 12 A. C. जीवयन्तीति F जदनीयत्व 13. A C. F माणचयुतः जी F तत्पत्व जी 14 Omitted in D. 15. C. रूप्यं रूप

## सौकर्येण कार्यविरुद्धक्रिया च ॥५२॥

व्याघात इत्येव । किञ्चित्कार्यं निष्पादयितुं संभाव्यमानः कारणविशेषस्तत्कार्यविरुद्धनिष्पादकत्वेन यत्समर्थ्यते सोऽपि संभाव्यमानकार्यव्याहतिनिबन्धनत्वाद्व्याघातः । कार्यविरुद्धकार्यनिष्पत्तिश्च कार्यापेक्षया सुकरा । तस्य कारणस्यात्यन्तं तदानुगुण्यात् । न त्वत्र कार्याभिमतस्य कार्यत्वाभावः । तद्विरुद्धस्यात्र सौकर्येण कार्यत्वात् । अत एव द्वितीयाद्विषमाद्भेदः । तत्र हि कार्यस्यानुत्पत्तिरनर्थस्य चोद्गमनम् । इह तु कार्यमकार्यमेव न भवति । तद्विरुद्धस्यानर्थस्य व्यतिरेकिणोऽप्यत्र सुष्ठुकार्यत्वात् । यथा हर्षचरिते राज्यवर्धनं प्रति श्रीहर्षोक्तिषु—

"यदि बाल इति सुतरामपरित्याज्योऽस्मि । रक्षणीय इति, भवद्भुजपञ्जरमेव रक्षास्थानम्" इत्यादि ।

अत्र राज्यवर्धनेन श्रीहर्षप्रस्थाने कार्ये बाल्यरक्षणीयत्वादिकारणत्वेन यत्संभावितं तत्प्रत्युतप्रस्थानकारणत्वेन सुकरतया श्रीहर्षेण राज्यवर्धनस्य समर्थितमिति व्याघातोऽलङ्कारः ।

एवं विरोधमूलानलङ्कारान्निर्णीय शृङ्खलाबन्धोपचिता अलंकारा लक्ष्यन्ते । तत्र—

---

यथा साधकमेकेन तथैवा[1]न्येन बाध[2]नम् ।
व्याघातोऽस्य [3]विरुद्धस्य सौकर्येण क्रिया तथा ॥

तत्र सूत्रान्तरम्—सौकर्येण कार्य[4]विरुद्धक्रिया च । [5]कार्यापेक्षया सुक[6]रस्य विरुद्धस्य करण कार्यव्याहतिहेतुरिति व्याघातान्तरम् । व्याचष्टे—व्याघात इत्यादि । अथ [7]लक्ष्यपदानुषङ्ग । कार्यार्थं संभावितस्य कारणविशेषस्य तद्विरुद्ध[8]निष्पादन व्याघात । विरुद्धनिष्पत्तिश्च सुकरा कारणस्य विशिष्टा[9]नुगुण्यात् । इत्थ च सति अनर्थोत्पत्तिलक्षणाद्विषमात्[10] भेद इत्याह—न [11]त्वत्रेति । न ह्यत्र कार्यम[12]कार्यं किन्तु तद्विरुद्ध [13]सुकर कार्यम् । अतो द्वितीयविषमाद्भेद । यतस्तत्र कार्यम[14]कार्यं[15] विरुद्धस्तु अनर्थ । इहोभयमपि कार्यमिति ।

यदि[16] बाल इतीति । अत्र[17] बाल्य रक्ष्य[18]त्व चाप्रस्थाने[19] हेतु[20]त्वेन सम्भावित प्रत्युत[21] सौकर्येण प्रस्थान साधयति । सङ्गत्यन्तरमाह—एवमिति ।

---

1 A C F. अन्यस्य 2 E. बोध A. B. C. माघन 3 A's alt. विरोधस्य 4 D repeats कार्य 5 C व्याघात इत्येन कार्या 6 C सकर 7. A C लक्षण 8 C. रुद्ध 9 A गिष्टा D शिष्टस्यानु 10. A G अत्र को भेद C अत्र भ 11 A मन्यत्रे 12 D कार्याकार्यमका 13 A. सकर 14 C कार्य का 15. A C. F मकार्य 16 Omitted in A C D. F 17 A E. इह 18. A. C D F. रक्ष्यत्वे 19. Except H all read स्थाने च 20 A. हेतुमत्वेन 21 H प्रस्तुत

पूर्वपूर्वस्योत्तरोत्तरहेतुत्वे कारणमाला ॥५३॥

यदा पूर्वं पूर्वं क्रमेणोत्तरमुत्तरं प्रति हेतुत्वं भजते तदा कारणमाला-ख्योऽयमलङ्कारः। यथा—

जितेन्द्रियत्वं विनयस्य कारणं गुणप्रकर्षो विनयादवाप्यते।
गुणप्रकर्षेण जनोऽनुरज्यते जनानुरागप्रभवा हि संपदः॥

कार्यकारणक्रम एवात्र चारुत्वहेतुः।

यथापूर्वं परस्य विशेषणतया स्थापनापोहने एकावली ॥५४॥

यदि पूर्वपूर्वं प्रति क्रमेण परं परं विशेषणत्वमनुभवति स एकावल्य-लङ्कारः। विशेषणं च स्थापनेन निवर्तनेन वा। स्थापनेन यथा—

पुराणि यस्यां सवराङ्गनानि वराङ्गना रूपपुरस्कृताङ्गचः।
रूपं समुन्मीलितसद्विलासमस्त्रं विलासाः कुसुमायुधस्य॥

अत्र वराङ्गनाः पुराणां विशेषणं स्थापनीयत्वेन स्थितम्। एवं वरा-ङ्गनानां रूपमित्यादि ज्ञेयम्। निवर्तनेन यथा—

न तज्जलं यन्न सुचारुपङ्कजं न पङ्कजं तद् यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं न गुञ्जितं तन्न जहार यन्मनः॥

---

तत्र कारणमालायां सूत्रम्—[1]पूर्वपूर्वस्योत्तरोत्तरहेतु[2]त्वे कारणमाला[3]। यदा पूर्वमित्यादि। जितेन्द्रिय[4]त्वमिति। जितेन्द्रियत्वाद्विनय, विनयाद्गुणप्रकर्षं ततो जनानुराग। अत्र[5] सारादिविच्छित्त्यन्तरसभवेऽपि नालङ्कारान्तर[6]मित्याह[7]—कार्य-कारणेति।

कार्यं कारणमालाया[8] प्राच[9] प्राच पर परम्॥

एकावल्यां सूत्रम्—यथा[10]पूर्वं परस्य विशेषण[11]तया स्थापनापोहने एकावली[12]। [13]यदि पूर्व[14]पूर्वस्य पर पर विशेषणतया स्थाप्यते,[15] सैका[16] एकावली यथापोह्यते मान्या[17]। पुराणीति। अत्र पुराणा वराङ्गनास्तासां रूप तस्य[18] विलास स[19] कुसुमा-युधस्य विशेषणतया स्थाप्यते। योजयति—अत्र वराङ्गना इति। न तज्जलमिति। अत्र जलादे [20]पूर्वं पूर्वस्य पङ्कजाद्युत्तरोत्तर विशेषणमपोह्यतया [21]स्थितम्।

---

1. F पूर्वेति 2. E हेतुश्च 3 D मालां 4 A C यथादिन 5 Omitted in D 6 D अनकार 7 D इत्यत आह 8 a. b c मालायां 9. D. प्राच प्राच H वाच वाच 10 F यथेति 11 D. शेषणा उपाहनतया स्था 12 D एकावली 13 A D F. यदा 14 D F. G परपरस्य 15 D प्येते। योजयति F. प्यते अन्य विन्याम 16 A C G. मेकावली 17 H मन्या। एका वल्यां 18 F अस्य 19 Omitted in C 20 A C-F पूर्वस्य 21. Except E. all read उपस्थित

अत्र जलस्य सुचारुपङ्कजत्वं विशेषणम् अपोह्यतया स्थितम्। एवं पङ्कजादीनामलीनषट्पदत्वादि ज्ञेयम्।

पूर्वपूर्वस्योत्तरगुणावहत्वे मालादीपकम् ॥५५॥

उत्तरोत्तरस्य पूर्वं पूर्वं प्रत्युत्कर्षहेतुत्वे एकावली। पूर्वस्य पूर्वस्योत्तरोत्तरोत्कर्षनिबन्धनत्वे तु मालादीपकम्। मालात्वेन चारुत्वविशेषमाश्रित्य दीपकप्रस्तावोल्लङ्घनेनेह लक्षणं कृतम्। गुणावहत्वमुत्कर्षहेतुत्वम्। यथा—

> सङ्ग्रामाङ्गणमागतेन भवता चापे समारोपिते
> देवाकर्णय* येन येन सहसा यद्यत्समासादितम्।
> कोदण्डेन शराः शरैररिशिरस्तेनापि भूमण्डलं
> तेन त्वं भवता च कीर्तिरतुला कीर्त्या च लोकत्रयम्॥

अत्र कोदण्डादिभिः क्रमेण शरादीनामुत्कर्षो विहितः। समासादनलक्षणक्रियानिबन्धनं च दीपकं दीपनविषयाणामुत्तरोत्तराभिमतत्वेन कृतम्।

उत्तरोत्तरमुत्कर्षः सारः ॥५६॥

पूर्वपूर्वापेक्षयोत्तरोत्तरस्योत्कर्षनिबन्धनं सारः। यथा—

---

एकावल्या यथापूर्वं भेदक [1]मुत्तरोत्तरम्[2]।
स्थाप्यतेऽपोह्यते चैव तेनेय द्विविधा मता॥

मालादीपकार्थं सूत्रम्—[3]पूर्वपूर्वस्यो[4]त्तरोत्तरगुणावहत्वे मालादीपकम्। एकावल्यामुत्तरोत्तरस्य पूर्वपूर्वगुणावहत्वम् इह तु व्यत्यय। व्याचष्टे—[5]उत्तरोत्तरस्येति। प्रस्तावो[6]ल्लङ्घने हेतुमाह—मालात्वेनेति[7]। सङ्ग्रामेति। अत्र[8] कोदण्डादे पूर्वपूर्वस्य शराद्युत्तरोत्तर[9]समासादन दीपनेन गुणावहत्वम्[10]। व्याचष्टे—अत्र कोदण्डादिभिरिति।
मालादीपनमा[11]द्यस्योत्तरोत्तरदीपनम्[12]।

सारार्थं सूत्रम्—[13]उत्तरोत्तरमुत्कर्षस्सारः। व्याचष्टे—पूर्वपूर्वेति[14]। निबन्धन

---

1. A C. F G पोत्तरो 2 D त्तर (विशेषणमपोह्यतया स्थित) स्था 3 F. पूर्वेति 4 D omits उत्तर 5 D E omit उत्तर 6 A C. E स्थानो 7. H. इति मालादीपक 8 Omitted in A C 9 A C E F. त्तरस्य पूर्वपूर्वसमा 10 A C. E. F इत्यन्यत्यय तद्व्याच 11 D E a b c घाद्याद्यस्योत्तरदी 12. A दीपनात् 13 F. उत्तरेति 14 A C E पूर्वस्येति

* This line is read in the T. S S edition as "समरे परिपन्थियोधनिवहै साम्मुख्यमासादिता". Vidyacakravartin does not help in fixing the reading here In his Sampradāyaprakā'sinī, he comments on the verse twice (P 72, 315) In his first explanation there is an evidence of his having accepted the reading देवाकर्णयति The two manuscripts of the Sarvasva that were consulted adopt the reading as in the N S. ed

राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥

अत्र राज्यापेक्षया वसुधायाः सारत्वम्, एवं वसुधापेक्षया तदेकदेशस्य पुरस्येत्यादि योजनीयम् ।

एवं शृङ्खलाविच्छित्त्यालङ्काराः प्रतिपादिताः अधुना तर्कन्यायाश्रयेणालङ्कारद्वयमुच्यते । तत्र—

हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गम् ॥५७॥

यत्र हेतुः कारणरूपो वाक्यार्थगत्या विशेषणद्वारेण वा पदार्थगत्या लिङ्गत्वेन निबध्यते तत्काव्यलिङ्गम् । तर्कवैलक्षण्यार्थं काव्यग्रहणम् । न ह्यत्र व्याप्तिपक्षधर्मतोपसंहारादयः क्रियन्ते । वाक्यार्थगत्या च निबध्यमानो हेतुत्वेनैवोपनिबद्धव्य., नोपनिबद्धस्य हेतुत्वम् । अन्यथार्थान्तरन्यासान्नास्य भेदः स्यात् । क्रमेण यथा—

यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये ! तव मुखच्छायानुकारी शशी ।

---

ग्रथनम्[1] । राज्य इति । सारमित्यत्र वस्त्वित्यध्याहर्तव्यम् । इतरथा [2]लिङ्गासङ्गति । योजयति—अत्र राज्येति ।

उत्तरोत्तरमुत्कर्षावहत्वे सार इष्यते ।

सङ्गत्यन्तरमाह—एवं शृङ्खलेति । तत्र[3] काव्यलिङ्गार्थं सूत्रम्—हेतो[4]र्वाक्य-पदार्थत्वे[5] काव्यलिङ्गम् । वाक्यार्थपदार्थरूप[6]हेतौ द्विधा[7] काव्यलिङ्गम् । व्याचष्टे—यत्र हेतुरिति[8] । [9]तर्कवैलक्षण्य दर्शयति—[10]न ह्यत्रेति । अनुपाधिक सम्बन्धो व्याप्ति । हेतो [11]पक्षेऽवस्थिति पक्षधर्मता । उपसहारो निगमनम् । आदिनान्वाद्युप[12]थादि । वाक्यार्थत्वे विशेषमाह—वाक्यार्थगत्येति[13] । अनेन हेतुत्वस्य शाब्दत्वनियम उक्त । [14]थार्थत्वे अर्थान्तरन्याम[15]प्राप्ति इत्याह—अन्यथेति । अर्थान्तरन्यासे हि अर्थादनुन समर्थनम्, इह तु शब्दत[16] इति विभाग ।

यत्त्वन्नेत्रेति । नेत्र[17]स्थिमानस्य [18]इन्दीवरस्य [19]सलिले निमज्जनम्, मुखच्छायानुका[20]रिण शशिनो मेघैराच्छादन, गमनानुकारिणीनां हंसानां पलायन चेति वाक्यार्थत्रयमेव वाक्यतापन्नार्थां सादृश्यविनोदा[21]दान्तौ हेतु ।

---

1 C H ग्रन्थनं 2 D लिङ्ग 3 C अत्र omitted in H. 4 F. हेतोरिति 5 E. अर्थता 6 D अर्थ अनुरूप C omits रूप 7. E. द्विविधा 8 H. इति काव्यलिङ्गं (P. 172.) 9 A अत्र 10 A अन्यत्र 11 A. C. G पक्षस्थितिः 12 D. E. F. G H. I. नयनादि 13 A C D गतेति F. गम्येति 14. E. अर्थ 15. Except D all mss न्यासस्य 16 A. C. F. शब्दात् 17 A C. F. G नेत्रसमानदर्शीति इ D नेत्रसमानस्य इ 18 A's alt. पद्मस्य म C पद्मस्य 19 C. सलिले 20 D कारस्य 21. C. मोदात्

येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गता-
स्त्वत्साहश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥

मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षास्तवागतिज्ञं समबोधयन्माम् ।
व्यापारयन्त्यो दिशि दक्षिणस्यामुत्पक्ष्मराजीनि विलोचनानि ॥

पूर्वत्र पादत्रयार्थोऽनेकवाक्यार्थरूपश्चतुर्थपादार्थे हेतुत्वेनोपन्यस्त । उत्तरत्र तु सबोधने "व्यापारयन्त्य" इति मृगीविशेषणत्वेनानेकपदार्थो हेतुरुक्त ।

एवमेकवाक्यार्थपदार्थगतत्वेन काव्यलिङ्गमुदाह्रियते । यथा—

मनीषिता सन्ति गृहेषु देवतास्तप क्व वत्से ! क्व च तावक वपु ।
पद सहेत भ्रमरस्य पेलव शिरीषपुष्प न पुन पतत्रिण ॥

यद्विस्मयस्तिमितमस्तमितान्यभाव-
मानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्सन्निधौ तदधुना हृदय मदीय-
मङ्गारचुम्बितमिव व्यथमानमास्ते ॥

पूर्वत्र वरप्राप्तिहेतुभूततपोनिषेधस्य "मनीषिता" इति वाक्यार्थरूपो हेतुर्निर्दिष्ट । उत्तरत्र पुन "अस्तमितान्यभावम्" इत्यत्र विस्मयस्तिमितमिति विशेषणद्वारेण पदार्थ ।

## साध्यसाधननिर्देशोऽनुमानम् ॥५८॥

यत्र शब्दवृत्तेन पक्षधर्मान्वयव्यतिरेकवत्साधन साध्यप्रतीतये निर्दिश्यते

---

मृग्य[1] इति । [2]दर्भनिर्व्यपेक्षत्व[3]लोचनव्यापारणे[4] पदार्थो[5] सबोधन हेतु[6] । उभयत्र योजयति—पूर्वत्रेत्यादि । अत्र वाक्यार्थपदार्थयोरेवैक[7]हेतुत्वेनोदाजिहीर्षुराह—एवमेकेति । मनीषिता इति । अत्र तपोनिवारणे गृहेष्वपेक्षितदेवतासद्भावो[8] वाक्यार्थो[9] हेतु । यद्वि[10]स्मयेति । अत्रान द[11]मन्दत्वे विस्मयस्तिमितत्व पदार्थो हेतु । योजयति—पूर्वत्रेत्यादि ।

काव्यलिङ्गत्व तु[12] हेतुत्वनोक्तिर्वाक्यपदार्थयो ।
[13]नायमर्थान्तरन्यासो हेतो[14]श्शाब्दत्वसश्रयात् ॥

अनुमानाय सूत्रम्—साध्य[15]साधननिर्देशोऽनुमानम् । साध्यसिद्ध्यर्थं[16] साधननिर्देशो ऽनुमानम् । व्याचष्टे—यत्र शब्देत्यादि । शब्दवृत्तेन[17] नत्वर्थस्य । वस्तुतस्तथा भावन

---

1 A C दृश्यत इति 2 A C मन्दर्भेति 3 A C. घास्त्व 4 A C पारया D पाराक्षेप 5 G यथा 6 E F G हेतू 7 D E ण्वया हे 8 D E. भाया 9 D अर्थे 10 D स्मरय F विषय 11 D मयत्वे 12 Omitted in A. C 13 C न्याय 14 C शब्द 15 F साध्यति 16 H. सिद्धौ 17 A मार्ये C न तकस्य

सोऽनुमानालङ्कारः । विच्छित्तिविशेषश्चात्रार्थादाश्रयणीयः । अन्यथा तर्कानुमानात्कि वैलक्षण्यम् ? उदाहरणम्—

यथा रन्ध्रं व्योम्नश्चलजलदधूमः स्थगयति
स्फुलिङ्गानां रूपं दधति च यथा कीटमणयः ।
यथा विद्युज्ज्वालोल्लसनपरिपिङ्गाश्च ककुभ-
स्तथा मन्ये लग्नः पथिकतरुषण्डे स्मरदवः ॥

अत्र धूमस्फुलिङ्गकपिलदिक्त्वानि वह्निलिङ्गानि त्रिरूपत्वाद्यथाशब्दप्रतिपादितं वह्निं गमयन्तीत्यनुमानम् । रूपकमूलत्वेनालङ्कारान्तरगर्भीकारेण विच्छित्त्याश्रयणात्तर्कानुमानवैलक्षण्यम् । क्वचित्तु शुद्धमपि भवति । यथा—

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति संततममी मर्मस्पृशो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरप्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥

अत्र योषितां भ्रूव्यापारेण मार्गणपतनं स्मरपुरोगामित्वे साध्येऽनलङ्कृतमेव साधनमिति शुद्धमनुमानम् । प्रौढोक्तिमात्रनिष्पन्नार्थनिष्ठत्वेन च विच्छित्तिविशेषाश्रयणाच्चारुत्वम् ।

अयमत्र पिण्डार्थः—इहास्ति प्रत्याय्यप्रत्यायकभावः । अस्ति च समर्थ्य-

---

पक्षधर्मा[1]न्वयेति त्रैरूप्यमुक्तम् । [2]तर्कानुमानवैलक्षण्यायाह—विच्छि[3]त्तीति । अर्थात् कविकल्पितवैचित्र्यात् । यथा रन्ध्रमिति । जलदधूमस्य व्यो[4]मस्थगन खद्योतानां स्फुलिङ्गायमानता, ककुभां [5]विद्युज्ज्वालापिङ्गता च । पथिकतरुषण्डे स्मरदवानललग्न[6] लिङ्गम् । योजयति—अत्र धूमेत्यादि[7] । रूपक[8]मूलत्वमेवालङ्कारान्तरगर्भीकार । अलङ्कारान्तरविविक्ततयाऽपि दर्शयितुमाह—क्वचित्त्विति । यत्रैता इति । लहरीव[9]-च्चलाचलदृशो यासां ता । यत्र [10]भ्रूव्यापारस्तत्रैव मार्गणपतनम् । स्मरस्याग्र[11]गमने शुद्धतया लिङ्गम् । तदेतदाह—अत्रेति । [12]अनलङ्कृतमेव रूपकाद्यसंकीर्णमेव[13] ।

तर्कानुमाना[14]द्वैलक्षण्यायाह—प्रौढोक्तीति । मात्रग्रहणादलङ्कारान्तरापोह । चारुत्व न तु तर्कानुमानवद्विभ्रमलारता[15] । अथानुमानकाव्यलिङ्गार्थान्तरन्यासानां विषयं विवेचयति—अयमत्रेत्यादि[16] । पिण्डार्थ अवान्तरविशेषनिरपेक्षो[17] निष्कृष्टार्थः । अप्रतीत.

---

1 A. C धर्मतान्व F. धर्मादन्वयेति 2. A. तर्कपार्थं C तर्कन्यायचे 3. C. च्छित्तिरिति 4 D गगन 5. H विद्यु 6 D लगन E लगनं 7. H आदि अपानुमान 8. D. एक गर्भत्वमेवालं 9 A F. G. चचलाश्च C E. चचलाद H. चपचलाद 10. A. भ्रयोव्या 11. D स्यागम 12 F. omits अ 13 A. C. omit एव 14. E. मानरै 15. D कारतां 16 H आदि अप्रतीत अर्नातां (P. 175) 17. A. व्यपेक्षा

समर्थकभावः। तत्राप्रतीतप्रत्यायने प्रत्याय्यप्रत्यायकभावः। प्रतीतप्रत्यायने तु समर्थ्यसमर्थकभावः। तत्र प्रत्याय्यप्रत्यायकभावेऽनुमानम्। समर्थ्यसमर्थकभावे तु यत्र पदार्थो हेतुस्तत्र हेतुत्वेनोपादाने, "नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात्कदलीविशेषाः," इत्यादाविव न कश्चिदलङ्कारः। यत्र तूपात्तस्य हेतुत्वं यथोदाहृते विषये "मृग्यश्च दर्भाङ्कुरनिर्व्यपेक्षा" इत्यादौ, तत्रैव काव्यलिङ्गम्। यत्र तु वाक्यार्थस्य हेतुत्वं, तत्र हेतुत्वप्रतिपादकमन्तरेण हेतुत्वेनोपन्यासे काव्यलिङ्गमेव। ताटस्थ्येनोपन्यस्तस्य तु हेतुत्वेऽर्थान्तरन्यासः। एवं चास्या प्रक्रियायां कार्यकारणवाक्यार्थयोर्हेतुत्वे काव्यलिङ्गमेव पर्यवस्यति। समर्थ्यवाक्यार्थस्य सापेक्षत्वात्ताटस्थ्याभावात्। ततश्च सामान्यविशेषभाव एव अर्थान्तरन्यासस्य विषयः यत्पुनरर्थान्तरन्यासस्य कार्यकारणगतत्वेन समर्थकत्वमुक्तं, तदुक्तलक्षणं काव्यलिङ्गमनाश्रित्य तद्विषयत्वेन लक्षणान्तरस्याङ्गीकृतत्वात्। उक्तलक्षणाश्रयणे तु "यत्वन्नेत्रे"-त्यादिर्विविक्तो विषयः काव्यलिङ्गस्यार्थान्तरन्यासे पूर्वं दर्शितमितीयं गति आश्रयितव्या।

---

प्रत्याय्यते चेत् प्रत्याय्यप्रत्यायकभाव तदा[1]नुमानम्, प्रतीतस्समर्थ्यते चेत् समर्थ्यसमर्थकभाव तदा पदार्थस्य स्वत[2] स्तादिदिशिरस्कतया हेतुत्वेनोपादाने न कश्चिदलङ्कार। यथा नागेन्द्रहस्ता इत्यादौ। [3]कर्कशत्वात् ऊर्वोरुपमानबाह्या इति[4] हेतु[5]भङ्गावस्य लौकिकत्वात्। यदा[6] स्वतलाद्यसस्पर्शेनोपात्तस्य[7] पदार्थस्य[8] हेतुत्व तदा "मृग्यश्च दर्भाङ्कुरे' त्यादौ पदार्थनिबन्धन[9]मेक काव्यलिङ्गम्। यदा पुनर्वाक्यार्थो हेतुत्वप्रतिपादक[10]-मच्छब्दादिप्रयोगमन्तरेण हेतुत्वेनोपादीयते, तदा वाक्यार्थनिबन्धनमन्यत्काव्यलिङ्गम्। यदा ताटस्थ्येनोपात्तस्य वाक्यस्य अर्थपर्यालोचनया[11] हेतुत्व तदार्थान्तरन्यास। इत्थ च सति वाक्यार्थनिबन्धन काव्यलिङ्ग कार्यकारण एव भवति[12]। समर्थ्य[13] वाक्यार्थ[14]स्यानया क्रियया सापेक्षत्वेन ताटस्थ्याभावात्। अर्थान्तरन्यासस्तु सामान्यविशेषभाव एव भवति। तथात्व एव ताटस्थ्यसम्भवात्। यत्पुन [15] कार्यकारणगतत्वेनार्थान्तरस्य समर्थकत्व तदुक्त[16]लक्षण काव्यलिङ्गमप्यन[17]पेक्ष्यैव। आचार्यैर्लक्ष[18]णान्तरकरणात्। इत्थ च सति उक्तलक्षणाश्रयणे, "यत्वन्नेत्रे"त्यादौ अर्थान्तरन्यासविविक्त काव्यलिङ्गमेव। कार्य[19]कारणयोस्तु समर्थकत्व अर्थान्तरन्यासे[20] दर्शितपरमिति गतिरियती विषयविभागा[21]थाश्रयितव्या।

---

1 A F G तस्तु C तदामान 2. C D. E G H स्यादिति 3 A. C F न चित्कर्क 4 E हेतुहे 5 C सद्भाव 6 C यदावाद्यम 7. D तस्य हेतु 8 C अर्थस्याह 9 D धनमन्यत्काव्य 10 A. पादक शब्द C पादकस 11 A C. D लोचनाया 12. D भवति तथात्व एव 13 A C F सामर्थ्य 14 A. C F वाक्यस्य 15 C. omits यत 16 G तदु यत्र यत्वन्नेत्र्यादि (under प्रत्यनीक) 17 D G H अपेक्ष्य 18 D णान्त 19 C omits कार्य 20 A. C F. न्यासेन 21 D भागाश्र

एवं तर्कन्यायमूलमलङ्कारद्वयमिह प्रतिपादितम्। अधुना वाक्यन्यायमूला अलङ्कारा उच्यन्ते। तत्र—

उद्दिष्टानामर्थानां क्रमेणानुनिर्देशो यथासंख्यम् ॥७६॥

ऊर्ध्वं निर्दिष्टा उद्दिष्टाः पश्चान्निर्देशोऽनुनिर्देशः। स चार्थादर्थान्तरगतः, संबन्धश्चात्र सामर्थ्यात्प्रतीयते, ऊर्ध्वं निर्दिष्टानामर्थानां पश्चान्निर्दिष्टैरर्थैः क्रमेण संबन्धो यथासंख्यमिति वाक्यार्थः। अन्ये त्विममलङ्कारं क्रमसंज्ञयाभिदधिरे। तच्च यथासंख्यं शाब्दमार्थं चेति द्विधा। शाब्दं यत्रासमस्तानां पदानामसमस्तैः पदैरर्थद्वारकः संबन्धः। तत्र क्रमसंबन्धस्यातिरोहितस्य प्रत्येयत्वात्। आर्थं तु यत्र समासः क्रियते तत्र समुदायस्य समुदायेन सह संबन्धस्य शब्दत्वादर्थावगमपर्यालोचनया त्ववयवगतः क्रमसंबन्धः प्रतीयते। तयात्र यथासंख्यार्थत्वम्। आद्यस्योदाहरणम्—

अनुमानं तु साध्या[1]य साधनस्योपवर्णना।
तत्संकीर्णत्व[2]शुद्धत्वविच्छित्त्यान्यविलक्ष[3]णात् ॥
अप्रतीतप्रतीतौ स्यादनुमानव्यवस्थिति।
पदार्थाद्वाप वाक्यार्थात् निर्देशे सति हेतु[4]त ॥
समर्थन प्रतीतस्य काव्यलि[5]ङ्गद्वय मतम्[6]।
भवेदर्थान्तरन्यास तात्स्थ्ये हेतुभावत ॥
कार्यकारणभावे तु तस्योक्त लक्षणान्तरम्।

सङ्गत्यन्तरमाह—एव तर्केति। तत्र यथासंख्यार्थं सूत्रम्—[7]उद्दिष्टानामर्थानां क्रमेणानु[8]निर्देशो यथासंख्यम्। प्राङ्निर्दिष्टाना पश्चान्निर्दिष्टैः क्रमेण सम्बन्धो यथासंख्यालङ्कार। व्याचष्टे—[9]ऊर्ध्वमित्यादि। ऊर्ध्वं प्रागित्यर्थ[10]। स चेति। अनु[11]निर्देशोऽर्थान्तरगत[12] न तु उद्दिष्टार्थगत। सामर्थ्यादुद्दिष्टा[13]नुनिर्देश्ययो सापेक्षत्वलक्षणात्। सम्बन्धप्रतीति[14] निष्कर्षति—ऊर्ध्वनिष्ठानामिति। वाक्यार्थं[15] सूत्रात्मनो[16]वाक्यस्यार्थं। अत क्रमविशेष[17]। अन्ये तु क्रम इत्येवाभिदधिरे।

द्वैविध्यमाह—तच्चे[18]ति। आद्य[19]स्य लक्षणमाह—शाब्दं यत्रेति। अस[20]स्तानां अस[21]मस्तैरर्थादभिसम्बन्धे शाब्दक्रमावलम्बिन सम्बन्धस्यातिरोधान[22]प्रतीतिनिरन्तराय[23]।

1. A, C F साध्यता 2. A C F संकीर्णविच्छि 3 E, G लक्षणं 4 D हेतुक 5 A C, लिङ्गान्वयी स 6 A C मत 7 F उद्दिष्टेति H. उद्दि 8 अनुर्देशो 9 C. पूर्व 10. H. इत्यर्थः प्रागुक्तानां (P. 176) 11. D. अन्यनिर्दे 12. A. C. F गत न तदुद्दि 13. C. दिष्टानुदिष्टानुदृश्य 14 D E प्रतीति 15 A, C अर्थं 16 C. मनोयां 17. E, G. चेतोऽयम् 18 D तच्चेति 19 A. अमस्य 20 A समस्तानां 21. A D F, व्यस्तेरर 22. A C धाव D धन 23 C राय

"लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव ! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा ।
इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः" ॥

अत्र लावण्यौकस्त्वप्रभृतीनामिन्द्वादिभिः क्रमसंबन्धस्याव्यवहितत्वेन प्रतीतेः शाब्दं यथासंख्यम् । द्वितीयस्य यथा—

"कज्जलहिमकनकरुचः सुपर्णवृषहंसवाहनाः शं वः ।
जलनिधिगिरिकमलस्था हरिहरकमलासना ददतु" ॥

अत्र कज्जलादीनां सुपर्णादिभिः संबद्धानां जलनिध्यादिभिः सह संबन्धः श्रुत्या समुदायनिष्ठः प्रतीयते । अर्थानुगमानुसारेण त्ववयवानां क्रमसंबन्धावगतिरित्यार्थं यथासंख्यम् ॥

एकमनेकस्मिन्ननेकमेकस्मिन् वा क्रमेण पर्यायः ॥६०॥

क्रमप्रस्तावादिदमुच्यते । एकमाधेयमनेकस्मिन्नाधारे यत्तिष्ठति स एकः पर्यायः । नन्वनेकगोचरमिति प्रागुक्तेन लक्षणेन विशेषालङ्कारोऽत्रोक्तः । तत्किमर्थमिदमुच्यते इत्याशङ्क्योक्तं—क्रमेणेति । इह च क्रमप्रतिपादनादर्था-

---

व्दता । द्वितीयं लक्षयति—आर्थं[1]त्विति । समुदायस्य समुदायेन[2] सम्बन्धे शाब्दे पर्यालोचन[3]या अवयवगमसम्बन्ध इत्यार्थता[4] । लावण्येति । लावण्यप्रभा [5]त्यागावनीभर[6]क्षम[7]त्वशालिनि त्वयि सति इन्दुपूष[8]चिन्तारत्नकुलक्ष्माभृतां नैरर्थक्य । योजयति—अत्र लावण्यौकस्त्वेत्यादि । कज्जलेत्यनाऽऽर्थत्व योजयति—अत्र[9] कज्जला[10]दीनामिति । श्रुत्या शब्देन[11] समुदायगतस्सम्बन्ध ।

"प्रागुक्तानामनूक्तैस्तु सम्बन्ध.[12] क्रमिको[13] यदा ।
यथासङ्ख्य तथा शाब्दम् आर्थं चेति द्विधा मतम्[14]" ॥

पर्यायार्थं सूत्रम्—एक[15]मनेकस्मिननेकमेकस्मिन् वा क्रमेण पर्यायः[16] । एकस्यानेकाधारत्वे एक पर्याय । अनेकस्यैकाधारत्वे द्वितीय । समङ्गतिक व्याचष्टे—क्रमप्रस्तावादित्यादि । क्रमग्रहणस्य प्रयोजनायाह—[17]नन्वेकमित्यादि । एकस्याने-

---

1. A अर्थम् 2 A. C. E. F G. H. I. दायेस 3. A C. F. लोचनं यावत्क्रम D. लोचने यायन्वयक्रम 4 D omits ता 5 A. C भाव्यामाय निमरत 6 F. भरन्यत 7 C. मय 8 A C. F G पूर्व 9. E. omits अ 10 A C F. जलानां 11. A C. F. शब्द 12. A C D क्न्यं 13 A C क्रमकोविदा 14 A. C F. विदुः 15 F. एकमिति 16. C य· अनेकस्यैक 17 H omits ननु

त्र यौगपद्यप्रतीतिः । तेनास्य ततो विविक्तविषयत्वम् । तथा एकस्मिन्ना-धारेऽनेकमाधेयं यत्स द्वितीयः पर्यायः । नन्वत्र समुच्चयालङ्कारो वक्ष्यत इत्येत-दर्थमपि क्रमेणेति योज्यम् । अत एव "गुणक्रियायौगपद्यं समुच्चय" इति समुच्चयलक्षणे यौगपद्यग्रहणम् । अत एव क्रमाश्रयणात्पर्याय इत्यन्वर्थमभि-धानम् । विनिमयाभावात्परिवृत्तिवैलक्षण्यम् । तस्या हि विनिमयो लक्षणत्वेन वक्ष्यते । तत्रानेकोऽसंघातरूपः संघातरूपश्चेति द्विविध. । तच्च द्वैविध्यमाधारा-धेयगतमिति चत्वारोऽस्य भेदाः । क्रमेणोदाहरणानि—

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥

विसृष्टरागादधरान्निवर्तितः स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलि. कृतोऽक्षसूत्रप्रणयी तया करः ॥

---

क्रमोत्तरत्वलक्षणविशेषालङ्कारव्यावृत्त्यर्थं[1] क्रमग्रहण मित्यर्थ[3] । एवं[4] तर्हि विशेषा-लङ्कारे यौगपद्य[5]ग्रहण किं न कृतमित्यत आह—इह चेति । इह क्रमप्रतिपादनात्तत्र यौगपद्य लक्षणत्वेन अर्थात् सिद्ध्यति इत्यर्थ । अतो विविक्तविषयतया द्वितीयमाह—तथा[8] एकस्मिन्निति । तत्र[9] क्रमग्रहणात् समुच्चयालङ्कारव्यावृत्तिरित्याह—नन्वत्रेति । वक्ष्यमाणे समुच्चये यौगपद्य लक्षणत्वेन गृहीष्यत इत्याह—अत एव गुणेति । लक्ष्यपद निर्वक्ति—अत एव क्रमेति । पर्यायस्य [9]क्रमात्मकत्वात् परिवृत्त्यलङ्कारतो वैधर्म्यमाह—[9]विनिमयेति । अस्य चातुर्विध्य दर्शयति—तत्रानेक इति । इह योऽयमनेकार्थ.[10] स पृथ-क्[?]वृत्ति सङ्घा[11]तात्मा च । द्विविधो[12]ऽप्याधारआधेय[13]श्चेति चत्वारो भेदा ।

नन्वाश्रयेति । रे कालकूट ! तवाश्रयेषु वृत्ति उत्तरोत्तरविशिष्टपदन्यासा[14] केनोप-दिष्टा यत[15] प्राक् हृदये, अथ[16] तदपेक्षयोपरि[17]कण्ठे[18] वासो [19] । सम्प्रति तु कण्ठा-दप्युपरितन्या वाचि[20] वससि । अत्रार्णवादिराधारो अनेक पृथग्वृत्ति ।

विसृष्ट[21]रागादिति । अत्राधर[22] [कन्दु[23]] कौ[24] करा[25]धारो निवृत्तिक्रिया प्रति

---

1 D वृत्त्या एतत् क 2 E F कृतम् इ 3 H अर्थ पर्याय एको (P. 178) 4 A's alt एक 5 A C पद लक्षणत्वेन गृहीष्यत 6 D तद्‌क 7. Omitted in D 8 D क्रमक 9 A C विनिमयेति 10 H नेकोऽर्थ 11 A's alt C. महत D सहात्मा E. सहात्मा 12. A C. विधोऽप्याधा 13 A. C. F. धेयश्चेति D. E. F. G H प्याधारा धेयश्चेति 14. C न्यासात 15 Omitted in A C 16 E. अग्र 17 C D. उपरितने कं 18 C कण्ठेव ससि 19 A C F G H. I. वससि 20 D ग्रमापि 21. A. C सृष्टिरा 22 C F अत्राधार D. G अमर 23 All mss कन्तु 24 All except E. omit कौ 25 A C. करा धाधा

निशासु भास्वत्कलनूपुराणां
यः सञ्चरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचिताभियाभिः
स वाह्यते राजपथः शिवाभिः ॥

यत्रैव मुग्धेति कृशोदरीति प्रियेति कान्तेति महोत्सवोऽभूत् ।
तत्रैव दैवाद्वदने मदीये पत्नीति भार्येति गिरश्चरन्ति ॥

अत्र कालकूटमेकमनेकस्मिन्नसङ्घाते आश्रये क्रमेण स्थितिर्मन्निबद्धम् । करश्चैकोऽनेकस्मिन्सहते क्रमवान् । अधरकन्दुकयोर्निवृत्त्यपादानतया सहतत्वेन स्थितत्वात् । अभिसारिकाः शिवाश्चानेकस्वभावा असहतरूपा एकस्मिन्नाश्रये राजपथे क्रमवर्तिन्यः । वदने चैकस्मिन्नाश्रये मुग्धत्वादिवर्गः पत्नीत्वादिवर्गश्च वर्गत्वादेव सहतरूपोऽनेकः क्रमवानुपनिबद्धः ।

समन्यूनाधिकानां समाधिकन्यूनैर्विनिमयः परिवृत्तिः ॥६१॥

विनिमयोऽत्र किंचित्त्यक्त्वा कस्यचिदादानम् । समेन तुल्यगुणेन त्यजमानेन तादृशस्यैवादानम् । तथाधिकेनोत्कृष्टगुणेन दीयमानेन न्यूनस्य हीनगुणस्य परिग्रहः । एवं न्यूनेन हीनगुणेन त्यज्यमानेनाधिकस्योत्कृष्टगुणस्य

---

अपादानत्वेन सहतौ । निवृत्तेरनेकत्वेनाविवक्षणात्—निशास्विति[1] । सचर[2] सचाराधिष्ठानम् । अत्राभिसारिकाशिवाख्य अनेकमाधेयं पृथग्वृत्ति[3] । यत्रैवेति । अत्र मुग्धत्वादिकं पत्नीत्वादिकं च[4] अनेकमाधेयम् । वर्गत्वावस्था इति सङ्घात[5]वृत्तिचतुष्टयेऽपि योजयति—अत्र कालकूटमित्यादि ।

पर्याय एकोऽनेकस्मिन् एकत्रानेक इत्यपि ।
द्विधा[6] क्रमवशादेतौ[7] न विशेषसमुच्चयौ ॥
नैव विनिमयाभावात् परिवृत्तिः भिदा[8]स्त्विह ।
चतस्रोऽनेकरूपस्य पृथक् सङ्घातव[9]र्तनात्[10] ॥
पृथक्सङ्घातवृत्तित्वादने[11]कोऽर्थो द्विधा मतः ।
आधाराधेयभावस्यैवतस्रोऽस्य भिदास्ततः ॥

परिवृत्त्यर्थं सूत्रम्—समन्यूनाधिकानां समा[12]धिकन्यूनैः विनिमयः परिवृत्तिः ॥ समस्य समेन सह विनिमय एका परिवृत्तिः । न्यूनस्याधिकेन द्वितीया । अधिकस्य[13]

---

1. D स्मृति 2. D सचार, 3 A F. G वृत्ते 4 E. G तु 5. A. C. सहातसु 6 E. द्विविधा 7. A एतौ A's alt एका B A C F सहाधिक 9 D वर्ष 10 A C D F H संनात् परिवृत्य 11. E. अनेकार्थो 12. A. F. H समन्यूनाधिकं 13 C करस्य

स्वीकारः। तदेवा त्रिप्रकारा परिवृत्तिः। क्रमप्रतिभासंभवात्पर्यायानन्तरमस्याः लक्षणम्। समपरिवृत्तिर्यथा—

उरो दत्वामरारीणां येन युद्धेष्वगृह्यत।
हिरण्याक्षवधाद्येषु यशः सा कं जयश्रिया॥

अत्रोरोयशसोस्तुल्यगुणत्वम्। अधिकपरिवृत्तिर्यथा—

किमित्यपास्याभरणानि यौवने
धृतं त्वया वार्धकशोभिवल्कलम्।
वद प्रदोषे *स्फुटचन्द्रतारका
विभावरी यद्यरुणाय कल्पते॥

अत्रोत्कृष्टगुणैराभरणैर्न्यूनगुणस्य वल्कलस्य परिवृत्तिः। न्यूनपरिवृत्तिर्यथा—

तस्य हि प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः॥

अत्र कलेवरेण न्यूनगुणेन यशस उत्कृष्टगुणस्य विनिमयः।

दत्वा दर्शनमेते मत्प्राणा वरतनु! त्वया क्रीताः।
किं त्वपहरसि मनो यद्ददासि रणरणकमेतदसत्॥

अत्राद्ये समपरिवृत्तिः। द्वितीयार्धे न्यूनपरिवृत्तिः।

---

न्यूनेन तृतीया। व्याचष्टे—विनिमयोऽत्रेति। सङ्गतिमाह—क्रम[1]प्रतिभासेति[2]।

उरो दत्वेति—हिरण्याक्षवधाद्येषु युद्धेषु उरो दत्वा दैत्यानां यशो गृहीतम्। योजयति—अत्र उर इति। किमितीति—अरुणायन कल्पते इत्यर्थः। योजयति—अत्रोत्कृष्टेति। तस्य[3]हीति। प्रवय[4]स्त्वात् स्वर्गमुपेयुषो न शोच्य किञ्चित्। योजयति—अत्र कलेवरेणेति। द्वैरूप्ये[5]णोदाहरति—दत्वेति। दर्शनप्राण[6]योस्समता[7]। मनो[8]ऽपेक्षया रणरणकस्य न्यूनता। योजयति—अत्राद्य इति।

---

1 A. अत्र प्रति 2 H इति योजयति—अत्राद्ये 3 A's alt अस्य C अस्य 4. A C F G प्रवयस्त्वा 5 A C. F. रूप्येति दर्श 6 D omits ण 7. A C F समा 8 E. G. मनो व्यप

* The generally accepted reading is स्फुटचन्द्रतारका and that is adopted in the N S ed The SanjIvanI does not guide us in fixing the reading The T S S ed has प्रदोषेषु विदीर्णतारका Of the two manuscripts of the Sarvasva used for consultation D 12797 follows the N S. ed while No 68530 reads it as in the T S S. ed

## एकस्यानेकप्राप्तावेकत्र नियमनं परिसंख्या ॥६२॥

एकानेकप्रस्तावादिह वचनम्। एकं वस्तु यदानेकत्र युगपत्सम्भाव्यते तदा तस्यैकत्रासम्भाव्ये द्वितीयपरिहारेण नियमनं परिसंख्या। परिवर्जनेन कुत्रचित्सङ्ख्यानं वर्णनीयत्वेन गणनं परिसंख्या। सा चैषा प्रश्नपूर्विका तदन्यथा चेति प्रथमं द्विधा। प्रत्येकं च परिवर्जनीयस्य शाब्दत्वार्थत्वाभ्यां द्वैविध्यमिति चतुः प्रभेदा। क्रमेण यथा—

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम्॥

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधि विमुक्त्यै प्रभवति॥

भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्॥

कौटिल्यं कचनिचये करचरणाधरदलेषु रागस्ते।
काठिन्यं कुचयुगले तरलत्वं नयनयोर्वसति॥

---

'परिवृत्तिर्विनिमयस्त्रिधा सम[1] समादिभिः ॥"

परिसङ्ख्यार्थं सूत्रम्—एकस्यानेक[2]—प्राप्तावेकत्र नियमनं परिसङ्ख्या। अनेकत्र[3] प्राप्तस्य[4] एकस्यैकत्र[5] नियमनं परिसङ्ख्या एकतरत्र वर्जनेन अन्यतरत्र सङ्ख्यानात्। सग्रन्थिकं व्याचष्टे—एकानेकेत्यादि[6]। असम्भाव्ये[7] स्यून[8]दृशा सम्भावयितुमशक्ये[9]। निर्वक्ति—परीति। परेरुपसर्गो[10]वर्जनवृत्तिरित्यर्थः। भेदा[11]नाह—सा चैषेति[12]। प्रश्नपूर्विका शाब्दी [13]तथैवार्थी[14] अप्रश्नपूर्विका शाब्दी[15] तथैवार्थी[[16]ति] चतुर्धा।

किं भूषणमिति—आर्यरावचरितम्[17]। इयं प्रश्नपूर्विका शाब्दोपात्तवर्ज्या[18]। किमासेव्यमिति। यदास[19]क्त्या द्युसरिदादिसमास[20]ङ्गेन। इयं प्रश्न[21]पूर्वा अर्थात्तद्वर्ज्या[22]। भक्ति[23]र्भव इति। युवतिन्ये कामास्त्रे। इयम् [24]अप्रश्ना शाब्दवर्ज्या। कौटिल्य-

---

1 Omitted in A 2 D E F. अनेकत्र 3 A अनेक प्रा C H अनेक प्रा 4 E. G प्राप्नुवत 5 C स्यै अत्र 6 H आदि निर्वक्ति 7 C भाव्ये 8 D स्थूल दशा 9 A's alt असम्भव्ये 10 D उपसर्गं 11 A भेदन C भेदनो इम चै D भेदापाह 12 A's alt C चषति 13 A C E. F तथ्य 14 C आर्थी तु चतुधा 15 A C शाब्दिका दैवार्थे 16 All mss तु 17 All except D रित उपरात्पुपसर्गा वर्जनवृत्ति रित्यर्थं इय 18 C वर्ज्या 19 A C पथ्यापुरसादि 20 A C. omit स 21 D F omit प्रश्न 22. A C वर्जा D अवज्या 23 D भक्तिभवति 24 A C. F omit अ

अत्र चालौकिक वस्तु गृह्यमाण वस्त्वन्तरव्यवच्छेदे पर्यवस्यतीति व्यवच्छेद्य वस्त्वन्तर शाब्दमार्थं चेति नियमाभाव । अलौकिकत्वाभिप्रायेणैव क्वचित्प्रश्नपूर्वक ग्रहणम् ।

विलङ्घयन्ति श्रुतिवर्त्म यस्या लीलावतीना नयनोत्पलानि ।
बिभर्ति यस्यामपि वक्रिमाणमेको महाकालजटार्धचन्द्र ॥

तथा—"चित्रकर्मसु वर्णसकरो यतिषु दण्डग्रहणानि" इत्यादौ श्लेषसपृक्तत्वमस्या अत्यन्तचारुत्वनिबन्धनम् । अत्र च नियमपरिसख्ययोर्वाक्यवित्प्रसिद्ध लक्षण नादरणीयमिति ख्यापनाय नियमन परिसख्येति सामानाधिकरण्येनोक्ति । अत एवात्र पाक्षिकप्राप्तिरपि स्वीक्रियत इति युगपत्सभावन प्रायिकम् ।

---

मिति । इयम् [1]अप्रश्ना[2] आर्थवर्ज्या । [3]योजनस्य सुधानत्वान्यायसचारायाह —अत्रालौकिक[4]मिति । अलौकिकग्रहो हि लौकिक व्यवच्छिनत्त्येव[5] विरोधात् । अतो व्यवच्छेद्य शाब्दमार्थं [6]चेति भेदद्वयोदय[7] । अलौकिकस्य[7] [8]प्रसिद्ध क्वचित्प्रश्नोऽन्यथा चेति चातुर्विध्यम । श्लेषभित्ति[9]तया, दर्शयति—विलङ्घयन्तीति । श्रुतिवर्त्म[10] कर्णो[11]पकण्ठो[12] वेदमार्गश्च । वक्रिमा अरालता दौश्शील्य च ।

चित्रकर्मस्विति[13]—वर्णा वलक्षादयो द्विजातयश्च । दण्डो[14] यष्टि शास्तिश्च[15] । अत्र श्लेष पूर्वम[16]सिद्ध इति न बाधक [17]अपि तु चारुताव‍ह इत्याह[18]—श्लेषसम्पृक्तत्वमिति । अलौकिकता दर्शयितुमाह—अत्र चेति । पाक्षिकत्व[19]नियम अनेकत्र[20] युगपत्प्राप्तौ परिसङ्ख्यति हि वाक्यवित्प्रसिद्ध लक्षणम् । तद्वैलक्षण्याय नियमन[21]सामानाधिकरण्य मत । इत्थमत पाक्षिकप्राप्तिरूप[22] नियमलक्षणमपि स्वीक्रियत[23] इति युगपत्सभावनात्मक परिसङ्ख्यालक्षणमिह[24] [प्रायिकम्[25]] ।

परिसङ्ख्या त्वनकत्र प्राप्तस्यैकत्र[26] यन्त्रणम् ।
चतुर्धा[27] प्रश्नवर्ज्योक्त्यर्थाभिधाभावादिय मता[28] ॥
न पर[29] युगपत्प्राप्ति पक्षेऽपि [30]प्राप्तिरिष्यते ।
परिसङ्ख्यानियमयोर[31]तोऽप्यलौकिकी स्थिति ॥

---

1 All except A omit च 2 D E G प्रश्नपूर्वा 3 G अत्र यो 4 A C F लौकिकी 5 D एव अता व्य 6 E चेति 7 A's alt स्यापि B D E अप्रसि 9 D omits क 10 A F वत्मय 11 D कर्णादि 12 A F G क्पठा 13 D E गवच 14 A C F G दण्डा यष्टय 15 A's alt C शास्त्रे 16 D अप्रसि 17 E बाधक 18 D omits इ 19 D कत्वन 20 A C F कत्र परि 21. C. नियमनस्य 22 D रूप 23 E. omits त 24 D इह प्रातत्प परि 25 All mss प्रायिकम् 26 A एकस्य 27 A B C चतुर्दा 28 H मता युगपत्प्राप्ति 29 A. C F. पर 30 A C F अप्रा 31 A. C E. F अतन्त्रा स्तौ

## दण्डापूपिकयार्थान्तरापतनं अर्थापत्तिः ॥६३॥

दण्डापूपयोर्भावो दण्डापूपिका। "द्वन्द्वमनोज्ञादिभ्यश्च" इति वुञ्। पृषोदरादित्वात् वृद्ध्यभावः। यथा अहमहमिकेत्यादाविति केचित्। अन्ये तु दण्डापूपौ विद्येते यस्यां नीतौ सा दण्डापूपिका नीतिः। एवमहं शक्तोऽहं शक्तोऽस्यामित्यहमहमिकेति मत्वर्थीयष्ठन्नित्याहुः। अपरे तु दण्डापूपाविव दण्डापूपिकेति "इवे प्रतिकृतौ" इति कनं वर्णयन्ति। अत्र हि मूषककर्तृकेण दण्डभक्षणेन तत्सहभाव्यपूपभक्षणमर्थात्सिद्धम्। एष न्यायो दण्डापूपिकाशब्देनोच्यते। ततश्च यथा दण्डभक्षणादपूपभक्षणमर्थादापतितं तद्वत्कस्यचिदर्थस्य निष्पत्तौ सामर्थ्यात्समानन्यायत्वलक्षणाद् यदार्थान्तरमापतति सार्थापत्तिः।

न चेदमनुमानम्। समानन्यायस्य संबन्धरूपत्वाभावात्। असंबन्धे चानुमानानुत्थानम्। अर्थापत्तिश्च वाक्यविदां न्याय इति तन्नयेनेहाभिधानम्। इयं च द्विधा। प्राकरणिकादप्राकरणिकस्यार्थापतनमेकः प्रकारः। अप्राकरणिकात्प्राकरणिकस्यार्थापतनं द्वितीयः प्रकारः। आद्यो यथा—

> पशुपतिरपि तान्यहानि कृच्छ्रादगमयदद्रिसुतासमागमोत्कः।
> कमपरवशं न विप्रकुर्युर्विभुमपि तं यदमी स्पृशन्ति भावाः॥

अत्र विभुवृत्तः प्राकरणिको लोकवृत्तान्तमप्राकरणिकमर्थादाक्षिपति। द्वितीयो यथा—

> धृतधनुषि बाहुशालिनि शैला न नमन्ति यत्तदाश्चर्यम्।
> रिपुसंज्ञकेषु गणना क इव वराकेषु काकेषु॥

---

अर्थापत्त्यर्थं[1] सूत्रम्—दण्डा[2]पूपिकया अर्थान्तरापतनं अर्थापत्तिः[3]। यथा दण्डभक्षणेनापूपभक्षणं कैमु[4]त्येनापतति[5] तयार्थान्तरस्यापतनमर्थापत्ति। व्याचष्टे—दण्डापूपयोरिति[6]। "द्वन्द्व[7]मनोज्ञे"ति वुञ्[8]सिद्धौ पृषोदरादित्वेन वृद्ध्यभावेऽहमहमिकादिनयेन[9] दण्डापूपिकेति केचित्। अन्ये तु मत्वर्थीयेन[10] रूपसिद्धिमिच्छन्ति। मतान्तरमाह—अपरे त्विति। अपरे पुनः "इवे प्रतिकृता"विति कन उपमार्थत्वेन वर्ण[11]यन्ति। निष्कर्षमाह—अत्रेति। अनुमानशङ्कां निराचष्टे—न चेदमिति। समानन्यायस्य दण्डापूपवृत्तस्य सङ्गतिमाह—अर्थापत्तिश्चेति। तत्रा[12]न्नीयेन तत्सम्बन्धिनया भेदायाह—इयं चेति।

पशुपतिरिति—उत्कः उन्मना। विप्रकुर्युः बाध[13]विकुर्युः। अमी[14]भावा वनितादयः। अप्राकरणिकापातन[15] दर्शयति—अत्र [16]वि[भ्वि]ति। धृतधनुषीति। स्थिरा[17] अपि

---

1. D पत्य सू 2. F. दण्डेति 3. D पत्ति 4 D. कैमर्थक्येन 5 D. पतित 6 H. इति अर्यांपत्तिस्तु (P 183) 7 A. C. D. repeat द्वन्द्व"'सिद्धौ 8. A. C. वुइ E. F. वुन् 9. C. मायेन 10 E. येषु G येष्वनिरूप 11. C. E. वर्णयन्ति 12. A. C. E. तत्र ज्ञाते येन 13. E. बाद् 14 A's alt. C अमि 15 C पातं. 16 A C. अत्र भ्विति Except A. C all the others read विभुमिति 17. C. राज्यापि

अत्र शैलवृत्तान्तोऽप्राकरणिको रिपुवृत्तान्तं प्राकरणिकमर्थादाक्षिपति। क्वचिन्न्यायसाम्ये निमित्तं श्लेषेण गम्यते। यथा—

> अलङ्कारः शङ्काकरनरकपालं परिजनो
> विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः।
> अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
> र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी॥

अत्र विधौ वक्रे इति श्लिष्टम्। अप्राकरणिकस्याणुवृत्तान्तात्प्राकरणिकार्थापतनम्।

## तुल्यबलविरोधो विकल्पः ॥६४॥

विरुद्धयोस्तुल्यप्रमाणविशिष्टत्वात्तुल्यबलयोरेकत्र युगपत्प्राप्तौ विरुद्धत्वादेव यौगपद्यासंभवे विकल्पः। औपम्यगर्भत्वाच्चात्र चारुत्वम्। यथा—'नमन्तु शिरांसि धनूंषि वा, कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा' इत्यादि। अत्र प्रतिराजकार्ये नमने शिरसा धनुषां च तुल्यप्रमाणविशिष्टत्वम्। सन्धिविग्रहौ चात्र क्रमेण तुल्यप्रमाणे, प्रतिराजविषयत्वेन स्पर्धया द्वयोरपि संभाव्यत्वात्। द्वौ चेमौ विरुद्धाविति नास्ति तयोर्युगपत्प्रवृत्तिः। प्राप्नुवतश्चात्र युगपत्प्रका-

अ[1]ह्वौ[2]भवन्ति, [3]श्लोकेषु मा यथा [?] अत्र प्राकरणिकार्थापात[4]। विविच्छ्दरयन्तरामाह—क्वचिदित्यादि। अलङ्कार इति। शङ्काकर विमय सेव्य[5] उत नेति शङ्काजनयम्। विधुरिन्दु, विधि[6]दिष्टम्। दर्शयति प्राकरणिकापातमाह—अत्र[8] विधाविति।

> अर्थापत्तिस्तु कैमुत्येना[9]न्यार्थापात इष्यते।
> प्रकृताप्रकृता[10]पातादियं च द्विविधा मता॥

विकल्पार्थं सूत्रम्—तुल्यबलविरोधो[11] विकल्प। विरुद्धयो तुल्य[12]बलयोर्युगपत्प्राप्तौ विकल्प। व्याचष्टे—विरुद्धयोरिति। तुल्यप्रमाण[13]विशिष्टत्व तुल्यबलत्वे हेतु। वैलक्षण्य दर्शयति—औपम्यगर्भत्वादिति[14]। लौकिक[15]विकल्पस्या[16]तथात्वात्।

नमन्त्विति[17]—[18]अन्यौ शिरसा[19] नति विग्रहे धनुषाम्। एवमाज्ञामौर्व्यौ कर्ण[20]पूरीकरणमपि। व्याचष्टे—अत्र प्रतिराजेति। नमनमिह प्रति[21]राजाना कार्यम्। तत्र

1 A. C यद्वौ 2 A C G ह्वौभाव भजन्ती 3 A. C. श्लोकेषु F. श्लोकेषु 4 A. F G पात वि 5 C सव्ये 6 C दिष्ट 7 E. शेष 8 Omitted in C. 9 A C. F G ग्रुग्यन्यार्थापा 10 A C कृतादियं 11 E F G विरोधे 12 C. बलविरोधयोयुग 13 E. वाविशिष्ट्या 14 H इति विरोधे तुल्य (P. 184) 15. A F. G. लौकिकस्य वि 16 A. C. F omit स 17 C. नमन्त्विति 18 A. विन्यौ 19 E. शिरसा 20 C पूरि 21 C. राजान

रान्तरस्यात्रानाशङ्कत्वात् । ततश्च न्यायप्राप्तो विकल्पः । नमनकृतं च तयोः सादृश्यमित्यलङ्कारता । एवं कर्णपूरीक्रियन्तामित्यादौ योजनीयम् । औपम्यगर्भत्वाच्चात्रचारुत्वम् । क्वचिच्छ्लेषावष्टम्भेनाप्ययं दृश्यते । यथा—

भक्तिप्रह्वविलोकनप्रणयिनी नीलोत्पलस्पर्धिनी
ध्यानालम्बनतां समाधिनिरतैर्नीते हितप्राप्तये ।
लावण्यस्य महानिधी रसिकतां लक्ष्मीदृशोस्तन्वती
युष्माकं कुरुतां भवार्तिशमनं नेत्रे तनुर्वा हरेः ॥

अत्र नेत्रे तनुर्वेति विकल्पः । उत्तमत्वाच्च तुल्यप्रमाणं श्लिष्टत्वम् । न चात्र समुच्चये वा शब्दः । संभवन्त्यामपि गतौ महाकविव्यवहारे प्रयोगाभावात् । ननु विरोधनिमित्तो विकल्पः । कथं चात्र विरोधः? नैतत् । तनुमध्ये नेत्रयोः प्रविष्टत्वात्तयोः पृथगभिधानमेव न कार्यम् । कृतं च तत्स्पर्धिभावं गमयति । स्पर्धिभावाच्च विरुद्धत्वम् । नेत्रे अथवा समस्तमेव शरीरमित्यर्थावगमे विकल्पस्य सुप्रत्ययत्वात् । स चात्र श्लेषाच्छिलब्धः । लिङ्गश्लेषस्य वचनश्लेषस्य चात्र दृष्टेः । तस्मात्समुच्चयप्रतिपक्षभूतो विकल्पाख्योऽलङ्कारः पूर्वैरकृतविवेकोऽत्र दर्शित इत्यवधातव्यम् ।

गुणक्रियायौगपद्यं समुच्चयः ॥६५॥

---

शिरासि धनूंषि च[1] सन्धिविग्रहप्रमाण[2]तया तुल्यबलानि विरुद्धत्वाद्युगपत्प्राप्त्ययोगेऽपि प्राप्नुवन्ति । अतस्साधनबाधनादिरूपगत्यन्तराभावात् [3]विकल्प । वैधर्म्यं योजयति—नम[4]नकृतमिति । एव कर्णपूरीकरणेऽपि । वैचित्र्यान्तरायाह—औपम्येति ।

भक्तिप्रह्वेति—प्रणयिनीस्पर्धिनीत्यादौ प्रथमाद्विवचनैकवचनयो नपुंसकस्त्रीलिङ्गयोश्च श्लेष । [5]नीतेहितेति[6]नीता ईहितेति च पदभङ्ग । निधी इति निधिरिति च । योजयति—अत्र नेत्रे[7] तनुरिति । समुच्चयभ्रमो मा भूदित्याह—न चेति । अनुशासनाद् गतिसम्भवेऽपि कविप्रयोगाभावान्न समुच्चय । अप्रयुक्तदोषापत्ते[8]र्लक्षणे न्यूनतामाशङ्कते—नन्विति । परिहरति—नैतदिति । नेत्रे अथवे[9]ति । विकल्पस्वरूपोन्मीलित श्लेषानुगमम् उद्घा[10]टयति—स चात्रेति । निगमयति—तस्मादिति । स्वो[11]पज्ञ इत्याह—पूर्वैरिति ।

विरोधे तुल्यबलयोर्विकल्पस्सन्नि[12]धानिनो ।
[13]अश्लेषश्लेषभित्तित्वाद्द्विधायमुप[14]वर्ण्यते ॥

समुच्चयार्थं सूत्रमुपगुण—[15]क्रियायौगपद्य समुच्चयः । गुणाना क्रियाणा च[16] यौगपद्य

---

1 Omitted in A C F G 2. A C प्रमाणाकतया 3. A F. G. अविक 4 A. C. नत्रुकृतं 5 A C. F G नते 6 A इति पदभङ्ग नीते इति च योग 7. A नेत्रेति तुरिति 8 C पत्तेल 9 A C अथ वेकल्पिकस्य 10 A's alt. C उघाट 11. C मोपज्ञ 12 C यानिनो 13 A s alt C मश्लेपाइने 14 A. C. उपपादितः H उपपद्यते 15. F गुणेति 16 A C. F चेत्

गुणानां वैमल्यादीनां यौगपद्येनावस्थानेन तथैव च क्रियाणां समुच्चया-लङ्कारः । विकल्पप्रतिपक्षेणास्य स्थितिः । क्रमेण यथा—

विदलितसकलारिकुलं तव बलमिदमाशु विमलं च ।
प्रखलमुखानि नराधिप ! मलिनानि च तानि जातानि ॥
अयमेकपदे तया वियोगः प्रियया चोपनतोऽतिदुःसहो मे ।
नववारिधरोदयादहोभिर्भवितव्यं च निरातपत्वरम्यैः ॥

एतद्विभिन्नविषयत्वेनोदाहरणद्वयम् । एकाधिकरणत्वेनाप्ययमलङ्कारो दृश्यते । यथा—

बिभ्राणा हृदये त्वया विनिहितं प्रेमाभिधानं नवं
शल्यं यद्विदधाति सा विधुरिता साधो ! तदाकर्ण्यताम् ।
शेते शुष्यति ताम्यति प्रलपति प्रम्लायति प्रेङ्खति
भ्राम्यत्युल्लुठति प्रणश्यति वलत्युन्मूर्च्छति त्रुट्यति ॥

एवं गुणसमुच्चयेऽप्युदाहार्यम् । केचित्पुनर्न केवलं गुणक्रियाणां व्यस्तत्वेन समुच्चयो यावत्समस्तत्वेनापि भवतीति वर्णयन्ति । उदाहरन्ति च—

न्यञ्चत्कुञ्चितमुन्मुखं हसितवत्साकूतमाकेकरं
व्यावृत्तं प्रसरत्प्रसादिमुकुलं सप्रेमकम्पं स्थिरम् ।
उद्भ्रूभ्रान्तमपाङ्गवृत्ति विकचं मज्जत्तरङ्गोत्तरं
चक्षुः साश्रु च वर्तते रसवशादेकैकमन्यक्रियम् ॥

---

समुच्चय । व्याचष्टे—गुणानामिति । विकल्पेति सङ्गतिकथनम् । विद[1]लितेति । प्र(ख[2])लमुखानि दुर्दान्तप्रचुराणि । अत्र वैमल्यमालिन्ययोः समुच्चयः । अयमिति । एकपदे युगपद्भवितव्य[3] भूत[4]मित्यर्थः । अत्र उप[5]नतिभूतिक्रिययोः । वैविध्यान्तरमाह[6]—एतद्विभिन्नेति । बिभ्राणेति । शल्यभरणं शयनादिक्रियाहेतुः । अत्र शयनादीनां एकाधिकरण[7]तया समुच्चयः । गुणसमुच्चयोऽपि मुख्यान इत्याह—एवमिति । गुणक्रिययोः सम्भू[8]तयोरपि सम्भवतीति दर्शयति—केचिदिति ।

न्यञ्चदिति—चक्षुरिह चक्षुर्विकारः । [9]एकैकं चक्षुरन्यक्रियं भिन्नव्यापारं वर्तते । [10]अतो हेतो रसवशात् । रस इह[11] शृङ्गारः, दृग्विकाराणामेषां तदेकनिष्ठत्वात् अथ भिन्नक्रिय[12] न्यञ्चितमित्यर्थः । यदपाङ्गे न्यञ्चति[13] ।

उक्तं हि[14] मया भरतसंग्रहे—

---

1 C E G विगलि 2 All mss खल 3 E G भव्य 4 A's alt C भूत 5 A C F उपनतिभि 6 A C आह विभि F आह गुणक्रिययोः 7 A C करण तया स 8 E भवत F सम्भूत 9 A's alt हाडक 10 C E कुतो 11 A F गुणग्र 12 A F G क्रियान्यप्रन्यक्रिय 13 E न्यञ्चयति 14 Omitted in E.

"स्या[1]न्नयश्चितनयश्चद[2]पाङ्ग[3]भाव" इति । 'अपाङ्गसङ्कोचित[4]कुञ्चित* स्याद्[5] उन्मुख" इत्युदञ्चितस्य लक्षणम् ।

उदञ्चित तूर्ध्वमपाङ्ग[6]वृत्ति निमेषशून्य[7] हसित विहासि ।
साकूतमाकाङ्क्षितभावगर्भम् आकेकर तिर्यग[8]रालतारम् ॥

व्यावृत्त वलितम्[9] ।

"तिर्यङ्निवृत्त वलित विलोक्य प्रेम्णा [10]सुदूर परिवल्ग [डुक्तम्[11]]" ।

प्रसादि प्रसन्नम् ।

"सभ्रूविलास स्मयते प्रसन्न[12] सम्मील्यमान मुकुल वदन्ति ।"

सप्रेम प्रमगर्भम् ।

"स्यात्प्रेमगर्भं असौ इवाय[13] (?)" ।

कम्पमुत्कम्पितपक्ष्म[14]भारम् । स्थिर[15] विदूरान्तरितार्थनिष्ठम् ।
उद्भ्रू[16]-उद्गतित[17]तूर्ध्वविकम्पितभ्रू । भ्रान्त[18] मदमन्थर[19]स्यात् ।

अपाङ्गवृत्ति विक्षेपि ।

विक्षेपि पार्श्वे यदपाङ्गवृत्ति ।

[विकच[20]] विकासि[21] ।

विकासि हृदये सविशेषलक्ष्म् ।

मज्जनिद्रा[22]ञ्चितम् । नासाग्रनिष्ठन्तु निकुञ्चितास्यम् ।

तरङ्गोत्तर[23] तरङ्गितम् ।

"तरङ्गित यद्युतिरूर्मिकल्पा ।"

साश्रु[24] उत्कण्ठितम् ।

"उत्कण्ठित रागनिबद्धबाष्पम् ।"

---

1 A F G सान्यचि 2 C पदाङ्ग 3 F मङ्ग इति 4 E omits त 5. E स्यादिन्मुखत् इत्युद 6 D E G ग्रङ्गसङ्क्रिनिमे 7 A D E G H I. शून्योल्लसित C भूत्य हसित 8 A F दराल 9 A C लित विलोक्या प्रमाद वृत्त प्रेम्णा 10 A's alt सपूर C सुपूर 11 All mss डुल्क 12 A F G प्रपन्न 13 A. C F यत्मुत्कम्पसु 14 C पक्ष 15 Omitted in C 16 A F G उद्भ्रु 17 A F वनिलदकम्पित 18 C D E G H I भ्रान्त 19. E G भर विभ्रान्त मन्त मदमन्थर स्या 20 Omitted in all mss 21 A C विस्मत् 22 A C इहमिमास्रा 23 A C F उत्तरङ्गितरङ्गित 24 A C माश्र

* The lines and readings here are not clear ; particularly regarding the definitions of कुञ्चित and उन्मुख. The former is अपाङ्ग सङ्कोचि or अपाङ्गसङ्कोचित whilst the latter is otherwise called उदञ्चित which is defined as ऊर्ध्वमपाङ्गवृत्ति With regard to the other words प्रसादि, व्यावृत्त, अपाङ्गवृत्ति, विकच, तरङ्गोत्तर etc they are first explained and then the corresponding definitions given

अत्राकेकरादयो गुणशब्दा न्यञ्चदित्यादय क्रियाशब्दा इति समस्तत्वेन गुणक्रियायौगपद्यम् । प्रसादिसप्रेमेत्यादीनां समासकृत्तद्धितेषु सबन्धाभिधानमिति सबन्धस्य वाच्यत्वात् । तस्य च सिद्धरूपत्वेन गुणत्वाद्गुणशब्देन गुणयौगपद्य द्रष्टव्यम् । एवमय त्रिधा समुच्चय । एक समुच्चय त्रिप्रकारभिन्न लक्षयित्वा द्वितीय लक्षयति—

एकस्य सिद्धिहेतौ अन्यस्य तत्करत्वं च ॥६६॥

समुच्चय इत्येव । यत्रैक कस्यचित्कार्यस्य सिद्धिहेतुत्वेन प्रक्रान्तस्तत्रान्योऽपि यदि स्पर्धया तत्सिद्धि करोति तदायमपर समुच्चय । न चाय समाध्यलङ्कारेऽन्तर्भवति । तत्र ह्येकस्य कार्यं प्रति पूर्णं साधकत्वम् । अन्यस्तु कार्याय काकतालीयेनापतति तत्र समाधिर्वक्ष्यते । यत्र तु खलेकपोतिकया बहूनामवतारस्तत्र समुच्चय । अत महान्भेदोऽनयो । एष समुच्चय सद्योगे-

---

योजयति—अत्राकेक[1]रेत्यादि । नन्वाकूतप्रसादप्रेम्णा गुणवचनत्वे[2]ऽपि समासतद्धिताद्यर्थैस्तिरोधानमित्यत आह – प्रसादिसप्रेमेत्यादि । समासादयो[3] हि सम्बन्धाभिधायिन । *सम्बन्धश्च सिद्धरूपो गुणात्मा । न गुणवचनाना स्वभाव भिनत्ति*[4] । साकूत सप्रेम इति समास । प्रसादीति तद्धित । निगमयति—एवमयमिति । व्यस्त[5]त्वेन उभौ समस्तत्वेन एकेति त्रिधा ।

'गुणक्रियायौगपद्ये[6] त्रिविधस्स्यात्समुच्चय[7] ।'

समुच्चयान्तरायाह—एक[8]मिति । सूत्रम्—एकस्य[9] सिद्धिहेतौ अन्यस्य तत्करत्व च । एकस्मिन् कस्यचित् सिद्धिहेतौ[10] स्पर्धया अन्यस्यापि तत्करत्व [11]समुच्चय[12] । व्याचष्टे—समुच्चय[13] इत्यादि । इत्यवत्यनुपङ्गकथनम् । समाधिवैधर्म्यायाह—न चायमिति । एक[14] पर्याप्त[15] साधक । अन्य काकतालीयवृत्त्या चेत्समाधि । यथा खले कपोता स्पर्धया प्रतिस्व अहमहमिकयाऽवतरन्ति । तथा भाव समुच्चय इति महान् भेद । *खल कपोता अस्या सन्ति[16] नीतावितिति खलेकपोतिका । मत्वर्थीय ठन्* । ननु काकतालीय इति किमुच्यते । काकस्यागमन यादृच्छिक[17] तालस्य च[18] पात । तेन[19] पतता काकस्य वध । एव देवदत्तस्य आगमन दस्यूनाञ्चोपनिपातस्तैश्च तस्य वध । तत्र देवदत्तदस्युसमागम काकतालसमागम इवेति एक उपमार्थ । तद्वध काकवध इवेति द्वितीय । आद्य[20]

---

1 F करेत्यस्या 2 C अपि स्वभाव 3 A C योऽपि 4 A C नभि समास इत्यसाद्मिति नद्धित 5 A C व्यस्ते त्वेकेति 6 A B C पद्ये 7 H च्चय । निगमयति (P 190) 8 A F किमिति 9 F कस्येति 10 A हेतो तथा चान्य C हेता तथा सिद्धिहेतो तथा च 11 A F च समु 12 C य समुच्चयान्तरायाह एकमिति व्या 13 F एव इ 14 A एका 15 E G पर्याप्त 16 A C सन्तीति तावितिति 17 C. च्छिक 18 Omitted in A C 19 A E F तेन च 20 G अन्य

ऽसद्योगे सदसद्योगे भवतीति त्रिधा भिद्यते । सत. शोभनस्य सता समुच्चीयमानेन योगे यथा—

> कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
> भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।
> प्रकृतिसुभगा ह्येते भावा अमीभिरय जनो
> व्रजति नितरा दर्पं राजंस्त एव तवांकुशाः ॥

अत्रामालिन्येन शोभनस्य कुलस्य मूर्त्यादिभिः शोभनैः समुच्चयः । एकैकं च दर्पहेतुतायोग्यं स्पर्धया निबद्धम् । असतोऽशोभनस्यासता समुच्चीयमानेन योगे यथा—

> दुर्वाराः स्मरमार्गणाः प्रियतमो दूरे मनोऽत्युत्सुकं
> गाढ प्रेम नवं वयोऽतिकठिनाः प्राणा. कुलं निर्मलम् ।
> स्त्रीत्वं धैर्यविरोधि मन्मथसुहृत्कालः कृतान्तोऽक्षमो
> नो सख्यश्चतुराः कथं नु विरहः सोढव्य इत्थ शठ. ॥

अत्र स्मरमार्गणानां दुर्वारत्वेनाशोभनाना तादृशैरेव प्रियतमादिभि. समुच्चयः । नववयःप्रभृतीनां च यद्यपि स्वतः शोभनत्व तथापि विरहविषयेनात्राशोभनत्वं ज्ञेयम् । सदसत. शोभनाशोभनस्य तादृशेन सदसता समुच्चीयमानेन योगे यथा—

> शशी दिवसधूसरो गलितयौवना कामिनी,
> सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।

---

ममासार्थं [1] वाकतालमिति । द्वितीयस्तद्वितार्थं [3] वाकतालीयमिति । समासदर्थायम् । अस्मादेव ज्ञापकात् "ममासाश्च तद्विषया"दाकस्मिक इवार्थच्छो[7] भवतीति । तद्विषयादिवार्थविषयादित्यर्थ । एवमर्धजरतीय अजाकृपा[8]णीय घुणाक्षरीयमित्यादौ समासतद्धितौ ज्ञेयौ ।

भेदानाह्—एष इति । कुल[9]मिति । यैर्जनो दर्पं व्रजति, त एव तवाङ्कुशा उन्मार्गनिवारका । योजयति—अत्रा[9]मालि[9]न्येति । अमालिन्य शोभनत्वहेतु । एतेन चैतन्यस्य तत्परत्व दर्शयति—दुर्वारा इति । मन्मथसुहृद्वसन्तादि [10]शठो वञ्चक । योजयति—अत्र [11]स्मरेति । नववय [12]प्रभृते कथमशोभनत्वम् इत्यत आह्—नववय इत्यादि ।

शशीति—दिवसादि[13]विशेष्य शोभन[14] धूसरत्वादि विशेषणवशादशोभनमिति

---

1 G ममासा स्फुटोऽस्तु वाक्यार्थो (under भाविक) 2. A. तालीय C ताल इति 3 E. G यर्थ 4 A तामाय इ 5 C. अर्थे अत्र 6 C इपाधि धनुगाज्ञ 7 A मक्स्य 8. A अगमा 9 C मामान्ये 10 A C शठा वञ्चक 11 A C मरेति 12. C. भूते 13 F वादि ममुर्धीयते The omitted portion is found after गलित इत्यादि (P 189) 14 Omitted in A.

प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥

अत्र शशिनः स्वतः शोभनस्यापि दिवसधूसरत्वादशोभनत्वेन सदसतस्ताद्दृशैरेव कामिनीप्रभृतिभिः समुच्चयः । न त्वत्र कश्चित्समुच्चीयमानः शोभनः, अन्यस्त्वशोभन इति सदसद्योगो व्याख्येयः । ननु "नृपाङ्गणगतः खल" इत्यशोभनोऽन्ये तु शोभना इति कथं समुच्चीयमानस्य सतस्ताद्दृशेनासता योगः ? नैतत् । "नृपाङ्गणगतः खलः" इति प्रत्युत प्रक्रमभेदाद्दुष्टमेव । न तु सौन्दर्यनिमित्तमित्युपेक्ष्यमेवैतत् ।

अत एवान्यैरेवमादौ सहचरभिन्नोऽर्थं इति दुष्ट एवेत्युक्तम् । प्रकृते तु नृपाङ्गणगतत्वेन शोभनत्वं खलत्वेनाशोभनत्वमिति समर्थनीयम् । एवमपि विशेष्यस्य शोभनत्वं प्रक्रान्तं, विशेषणस्य त्वशोभनत्वं, इह त्वन्यथेति न सर्वथा निरवद्यम् । ननु "दुर्वाराः स्मरमार्गणा" इत्यत्रोक्तोदाहरणवत्कथं न सदसद्योगः ? नैतत् । इह शोभनस्य सतोऽशोभनत्वमिति विवक्षा । तत्र त्वशोभनत्वमेवैतदिति विवक्षितमित्यस्त्यनयोर्भेदः अत एवैकत्रोपसंहृत

विशिष्टस्य द्वैरूप्यम् । तत्र तथाविधं कामिन्यादिभिस्स[1]मुच्चीयत । योजयति—अत्र शशिन इत्यादि । अन्यथा तु न योजनीयमित्यत्र[2] आह—न त्वत्रेति । न व्याख्येयस्तथा । सदसद्योगविवक्षयादिति शेष । अत्राक्षिपति—ननु नृपेति । नृपाङ्गण[3]खलयो[4]र्द्वयोरप्यशोभनत्वादन्य[5] शोभना इति कथम् । न[6] तथा[7] समुच्चय । परिहरति —नैतदिति । विशिष्ट[8]स्य द्वैरूप्यप्रक्रमे द्वयोरशोभनत्वम् । प्रक्रमभेदो[9] वाक्यदोष ॥ प्रक्रमभेदा[10]द्धनमर्थेन[11] चान्यैर्दोषान्तर उद्भावितमित्याह—अत[12] एवेति । विशेष्या[13]न्तर शोभन[14] खलत्वरूप त्व[15]शोभनमिति सहचरभिन्नोऽर्थः । अत इत्थं विवक्षणीयमित्याह—प्रकृते त्विति । तथाऽपि न दोषनि[16]वृत्तिरित्याह—एवमपीति । पूर्वोदाहरणे सद[17]सद्योगमाशङ्कते—ननु[18]दुर्वारा इति । स्मरमार्गणादीनां शोभनत्व[19] दुर्वारत्वादीनाम् अशोभनत्वमिति प्रतीते । परिहरति—नैतदिति । विवक्षाभेदं गमयमाह—अत एवेति । [20]सुन्दरत्वेनाभ्य प्रविष्टानामपि[21] शम्या[22]दीनां धूसरत्वा[23]दिना वैय[24]र्थ्यहेतुत्वमुपसंहृतम् । दुर्वारत्वप्रतिरस्य "शठ[25]" वय

1 A's alt मनश्ची 2. E इत्याह 3 C णगत नत्र 4 A C G. त्वोरपि 5 C. अन्यो 6 Omitted in C 7 A. C F तथाऽपि 8 A C F G विशिष्टद्वै 9 C भेदा 10 F भेन्म दोषा व 11 A C G र्थेनेति न था 12 C omits अ 13 A C F G विशेषान्त 14 All except F यत्र 15 A. C G त्वशोभ 16 A C G omit नि 17 C सद्योग 18 Omitted in A C E. G 19 A C. G त्वमिति 20 A सुन्दरान्तु रनेनान्य त्र 21. Omitted in C E. 22 A. शयाद्भिना C इत्यादी 23 C त्वादिना 24 A F वैयर्थ्य 25 A. C F. G शर

"मनसि सप्त शल्यानि" इति । अपरत्र तु "शठः कथं सोढव्य" इति सर्वथा वुष्टत्वाभिप्रायेण । तस्मादस्ति प्रकारत्रयस्य विविक्तविषयत्वम् ।

## कारणान्तरयोगात्कार्यस्य सुकरत्वं समाधिः ॥६७॥

केनचिदारब्धस्य कार्यस्य कारणान्तरयोगात्सौकर्यं यत्, स सम्यगाधानात्समाधिः । समुच्चयसादृश्यात्तदनन्तरमुपक्षेपः । तद्वैलक्षण्यं तु प्राक्प्रतिपादितमेव । उदाहरणम्—

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥

माननिराकरणे कार्ये पादपतनं हेतुः । तत्सौकर्यार्थं घनगर्जितस्य कारणान्तरस्य प्राक्षेप. । सौकर्यं चोपकारायेति प्रकाशितम् ।

एव वाक्यन्यायाश्रयिणोऽलङ्कारान्प्रतिपाद्याधुना लोकन्यायाश्रयिणोऽलङ्कारा उच्यन्ते । तत्र—

## प्रतिपक्षतिरस्काराशक्तौ तदीयतिरस्कारः प्रत्यनीकम् ॥६८॥

यत्र बलवतः प्रतिपक्षस्य दुर्बलेन प्रतिपक्षेण प्रतीकारः कर्तुं न शक्यत

---

सोढव्य" इति सर्वथा वष्ट[1]त्वमेवोपसहृतम् । निगमयति—तस्मादिति ।

एकक्रियाया[2]मन्यस्य[3] क्रिया त्वन्य[4] समुच्चय ।
सदसद्द्वैध[5]योगेन स[6]त्रिधा सव्यस्थित ॥इति॥

समाध्यर्थं सूत्रम्—कारणान्तरयोगात् कार्यसुकरत्व समाधिः[7] । प्रारब्धस्य कार्यस्य कारणान्तरयोगात् सम्यगाधान समाधि । व्याचष्टे—केनचिदिति । समुच्चयेति सङ्गत्युक्ति[8] । समुच्चयसंधर्म्यं स्मार[9]यति—तद्वैलक्षण्यमिति[10] । मानमिति । पादपतने कारणे गर्जित कारणान्तरम् । योजयति—माननिराकरण इति । उपकारेति सौकर्य[11]-प्रकाशनम् ।

समाधिस्सम्यगाधान कारणान्तरयोगत ।

सङ्गत्यन्तरायाह[12]—एव वाक्येति । प्रत्यनीकार्थं सूत्रम् । प्रतिपक्ष[13] तिरस्काराशक्तौ तदीयतिरस्कारः प्रत्यनीकम्[14] । बलवत तिरस्काराशक्तौ तदीयनिरस्कार: प्रत्यनीकम् । व्याचष्टे[15]—यत्र[16] बलवदित्यादि[17] । तत्सम्बन्धिन बलवत्सम्बन्धिन । त

---

1 A C F omit त्व 2. A C E. G omit यां 3 A. C E G omit स्य 4 H त्वपूज्य 5 A C क्षेदयो 6 A. C E F. G H द्विविधम्नस्य 7 H. समान 8 A C G उक्ति 9 A's alt C H. साधय 10 H इति समाधि 11. A C G प्रयोगकाश 12. A C. अन्तरमाह 13 A पक्षेऽतिबलवत्तिर F. पक्षेति 14 A C. नीकं प्रत्यनीकमदिति व्याच 15 I चष्टे अल्पवृत्तत्वेन (under भाविक) 16 Omitted in H 17. H आदि तदीयस्य तिर P (191)

इति तत्संबन्धिनो दुर्बलस्य तं बाधितुं तिरस्कारः क्रियते, तत्प्रत्यनीकम्। अनीकस्य सैन्यस्य प्रतिनिधिः प्रत्यनीकमुच्यते। तत्तुल्यत्वादिदमपि प्रत्यनीकम्। यथानीकेऽभियोक्तव्ये तत्रासामर्थ्यात्तत्प्रतिनिधिभूतमन्यदभियुज्यते, तद्वदिह प्रतिपक्षे विजेये दुर्बलस्य तिरस्करणमित्यर्थः। प्रतिपक्षगतत्वेन बलवत्त्वख्यापनं प्रयोजनम्। यथा—

यस्य किञ्चिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते॥

अत्र राहोर्भगवान्कृष्णो बलवान् प्रतिपक्षः तदीयः पुनर्वक्त्रसादृश्यमुखेन दुर्बलश्चन्द्रमाः तत्तिरस्काराद्भगवतः प्रकर्षावगतिः।

## उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपम् ॥६६॥

उपमेयस्यैवोपमानभारोद्वहनसामर्थ्यादुपमानस्य कैमर्थ्यनाक्षेप आलोचनं क्रियते तदेकं प्रतीपम्। उपमानप्रतिकूलत्वादुपमेयस्य प्रतीपमिति व्यपदेशः। यदप्युपमानतया प्रसिद्धस्योपमानान्तरप्रतितिष्ठापयिषयानादरणार्थमुपमेयत्वं कल्प्यते तत्पूर्वोक्तगत्या द्वितीयं प्रतीपम्। क्रमेण यथा—

"यत्र च प्रमदानां चक्षुरेव सहजं मुण्डमालामण्डनं भारः कुवलयदामानि" इत्यादि। यथा वा—

लावण्यौकसि सप्रतापगरिमण्यग्रेसरे त्यागिनां
देव! त्वय्यवनीभरक्षमभुजे निष्पादिते वेधसा।

---

बाधितु बलवन्त बाधितुम्। अत्र दृष्टान्तमाह—यथा अनीक इत्यादि। प्रयोजनमाह—प्रतिपक्षेति। यस्य किञ्चिदिति। यस्य कृष्णस्य। विग्रह.[1] कलह। कान्तेन वक्त्रेण सदृशाकृति[2]। योजयति—अत्र राहोरिति। [3]तत्तिरस्कारादिति प्रयोजनोक्तिः।

तदीयस्य तिरस्कार प्रत्यनीकमशक्तित।

प्रतीपार्थं सूत्रम्—उपमानस्याक्षेप उपमेयताकल्पनं वा प्रतीपम्[4]। उपमेयस्यैव पुष्कलगुणत्वविवक्षयैवोपमानस्य कैमर्थ्यस्य[5] प्रातिकूल्यात्[6]एकं प्रतीपम्। [7]यत्रोपमानान्तरार्थं[8] प्रसिद्धोऽप्युपमानस्योपमेयत्वक्लृप्तिरनादरात् तद्द्वितीयम्। व्याचष्टे—उपमेयस्यैवेत्यादि[10]।

यत्र चेति। चक्षुष एव मुण्ड[11]मालात्व[12]मिति कुवलयदाम्नो नैरर्थक्यम्। अलङ्कारान्तर[13]सम्भेदेनापरमुदाहरति—लावण्येति। लावण्यौकस्त्वादिगुणानामुप[14]मेय एव पौष्क-

---

1. A C. ग्रहकान्तस्य 2. C. कृति 3. A C. न तिर 4. A G. प्रतीपः 5. F. वयस्योपमेयस्य 6 E कूल्यात् 7 A. C. F. omit यत् 8. A. E. यथं 9. A मिद्धे उप 10. H. आदि उपमानस्य कैमर्थ्यस्य (P. 193) 11. A's alt. C. गुणस्य 12 C त्व मेय एव पौनरुक्तिः कुत्र 13 F. संभेदेना 14 C. यदत्रा ग्रणुपचः निष्कृष्यादिन्द्रामुप

इन्दुः किं घटितः किमेष विहितः पूषा किमुत्पादितं
चिन्तारत्नमहो मुधैव किममी सृष्टाः कुलक्ष्माभृतः ॥

अत्र यथासंख्यमप्यस्तीति प्राक्प्रतिपादितम् ।

ए एहि दाव सुन्दरि ! कण्णं दाऊण सुणसु वअणिज्जं ।
तुज्झ मुहेण किसोअरि ! चन्दो उवमिज्जइ जणेण ॥

अत्रोपमानत्वेन प्रसिद्धस्य चन्द्रमसो निकर्षार्थमुपमेयत्वं कल्पितम् । वदनस्य चात्रोपमानत्वेन विवक्षा प्रयोजिका । क्वचित्पुनर्निष्पन्नमेवौपम्यमनादर-कारणम् । यथा—

गर्वमसंवाह्यमिमं लोचनयुगलेन किं वहसि भद्रे ।
सन्तीदृशानि दिशि दिशि सरस्सु नीलनलिनानि ॥

अत्रोत्कर्षभाज उपमानप्रादुर्भाव एव न्यक्कारकारणम् । अनेन न्या-येनोत्कृष्टगुणत्वादुपमानभावमपि न सहते, तस्योपमानत्वकल्पनेऽपि प्रतीप-मेव । यथा—

अहमेव गुरुः सुदारुणानामिति हालाहल ! मा स्म दृप्यः ।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन्वचनानि दुर्जनानाम् ॥

---

त्यादिन्द्वाद्युपमानाना कैमर्थक्यम् । सभेदमनुस्मारयति—अत्र यथासङ्ख्यमपीति । ए[1] एहीति । ए[2] इत्यामन्त्रणे ।

अयि एहि तावत्सुन्दरि कर्णं दत्वा शृणु वच[3]नीयम् ।
तव मुखेन कृशोदरि चन्द्र उपमीयते जनेन ॥

चन्द्रस्योपमानत्व वचनीयमिति कथनात् चन्द्रस्य [4]निकृष्टत्वेनोपमेयत्वेन[5]कल्पनम् । प्रयोजन तु मुखस्यो[6]पमानता[7] । योजयति—अत्रोपमान[8]त्वेनेति । [9]क्वचित् उपमानस्य सत. उपमानत्वमेव न्यक्करणाद[10]लङ्कार समुत्थापयतीत्याह—क्वचित्पुनरिति । गर्वमिति । ईदृशानि नील[11]नलिनानि सन्तीति उपमानाविर्भाव । एव[12] निस्सामान्यस्य लोचनयुग-लस्य न्यक्कार । योजयति—अत्रोत्कर्षेति । यथात्रोपमेयस्य उपमानासहत्व, तथैव अनिग्रवर्पादुपमान[13]भूमिमप्यतिपतते ।

उपमानत्वक्लृप्तिरपि[14]प्रतीपमित्याह—अनेनेति । अहमे[15]वेति । दारुणत्वत्रा्ठा-

---

1 Omitted in A C 2 C. र्थाम्याम 3. C वचन 4 C निकृष्ट 5. D H. उपमेयत्वकल्प E. मेयत्वेनकल्पन F. मेयत्वकल्पनि 6 all mss मुखमस्य 7 A. C. मानतां 8 A मानार्थत्वेने C. माननार्थेनेति 9. F अत्र उपमानात् अपि 10. C. omits द. 11 E. omits नील 12 E. एव 13. A's alt. C मानप्रमिम-त्यतीयत 14. E. G omit अपि 15. A. अयमे

अत्र हालाहलत्व प्रकृष्टदोषत्वादसभाव्योपमानभावमप्युपमानत्वेन निबद्धम् ।

## वस्तुना वस्त्वन्तरनिगूहनं निमीलितम् ॥७०॥

सहजेनागन्तुकेन वा लक्ष्मणा यद्वस्तु वस्त्वन्तर निगूह्यते, तदन्वर्थाभिधान निमीलितम् । न चाय सामान्यालङ्कार । तस्य हि साधारणगुणयोगाद्भेदानुपलक्षण रूपम् । अस्य तूत्कृष्टगुणेन निकृष्टगुणस्य स्थगनमिति महाननयोर्भेद । सहजेन यथा—

> अपाङ्गतरले दृशौ मधुरवक्त्रवर्णा गिरो
> विलासभरमन्थरा गतिरतीव कान्त मुखम् ।
> इति स्फुरितमङ्गके मृगदृशा स्वतो लीलया
> यदत्र न मदोदय कृतपदोऽपि संलक्ष्यते ॥

अत्र दृक्तारल्यादिना स्वाभाविकेन लक्ष्मणा मदोदयकृत दृक्तारल्यादि तिरोधीयते । आगन्तुकेन यथा—

> ये कन्दरासु निवसन्ति सदा हिमाद्रे-
> स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते ।

---

प्रातस्य हालाहलस्य दुर्जनवचनो[1] उपमानतामक्लृप्ति[2]न्यक्काराय । तदतद्योजयति— अत्र हालाहलत्वमिति ।

> उपमानस्य [3]कैमर्थ्या[4]दुपमेयत्वकल्पनात्[4] ।
> द्विधा प्रतीप [5]काप्यतदुपमानत्वतोऽपि च ॥

निमीलितार्थं सूत्रम्—वस्तुना[6] वस्त्वन्तरनिगूहन निमीलितम्[7] । वस्तु[8] वस्त्वन्तर सहजेन लक्ष्मणा यन्निगू[9]हयति आगन्तुकेन वा तन्निगूहितत्वान्निमीलितम् । व्याचष्ट—सहजेनेत्यादि । सामान्यतो भेदमाह—न चायमिति[10] । तस्य हि गुणसाधारण्याद्भेदानुपलक्षणम् । अस्य पुनरुत्कृष्टेन गुणेन निकृष्टस्य स्थगनम् । अपाङ्गेति । अङ्गके लीलया[11] इति स्फुरितम्[12] इत्य लीलया[13] प्रससारे[14]त्यर्थ । दृक्तारल्या[15]दिना सहजेन लक्षणेन लीला मदोदयकृतक दृक्तारल्यादि तिरोदधाति । योजयति—अत्र दृक्तारल्येति ।

ये[16]कन्दरास्विति । त्वत्पाद[17]शङ्कितधिय त्वदा[18]पातशङ्काचकिता । अत्र हिममा

---

1 A's alt C. वचनता 2 C क्लृप्ति 3 A C अध्यम् उप 4 A C E F G H कल्पन 5 A चापेत उप C चाप्यतदुप H तीपमाक्षाक्षेप उप 6 F वस्तुनति 7 H न व्याचष्टे 8 A C वस्तुना 9 A C गूहनमिति E गूहति 10 H इति निमील्तिाग्यो 11 C omits ली 12 A स्फुरित चरित 13 A's alt C G लीलाप्र 14 C प्रसर 15 C आदि तिरादधाति 16 A C एक धरा स्विति 17 A C पादाङ्कित 18 A C F स्वगागमचकिता

अभ्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो बत भियां न बुधोऽप्यभिज्ञः ॥

अत्र हिमाद्रिकन्दरानिवाससामर्थ्यप्रतिपन्नेन शैत्येन समुद्भाविनावागन्तुकौ कम्परोमाञ्चौ भयकृतयोस्तयोस्तिरोधायकौ। तिरोधायकत्वादेव च मीलितव्यपदेशः।

प्रस्तुतस्यान्येन गुणसाम्यादैकात्म्यं सामान्यम् ॥७१॥

यत्र प्रस्तुतस्य वस्तुनोऽप्रस्तुतेन साधारणगुणयोगादैकात्म्यं अभेदेनाध्यवसायादेकरूपत्वं निबध्यते तत्सामान्ययोगात्सामान्यालङ्कारः। न चेयमपह्नुतिः। किञ्चिन्निषिध्य कस्यचिदप्रतिष्ठापनात्। यथा—

मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचोरुचिरामलांशुकाः।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः॥

अत्र मलयजरसविलेपनादीनां चन्द्रप्रभया सह अविभाव्यतां गताः इत्यभेदप्रतीतिर्दर्शिता।

---

गन्तुकलक्षणा[1]भ्यां कम्परोमाञ्चाभ्यां भय[2]कृतौ कम्परोमाञ्चौ स्थगयति। योजयति—अत्र हिमाद्रीति।

निजेनागन्तुना[3] वाऽपि लक्षणेनान्यगोपनम्।
निमीलिताख्योऽलङ्कारः द्विप्रकारः [4]प्रकाशितः॥

सामान्यार्थं सूत्रम्—[5]प्रस्तुतस्यान्येन गुणसाम्यादैकात्म्यं सामान्यम्। प्रस्तुतस्य अप्रस्तुतेन गुणसाम्यादेकरूपत्व[6] सामान्य[7]योगात्सामान्यालङ्कार। व्याचष्टे—यत्र[8] प्रस्तु[9]तस्येत्यादि। अपह्नुतेर्भेदायाह—न चेयमिति[10]। अपह्नुतौ हि प्रकृतनिषेधेनाप्रकृतप्रतिष्ठापनम् इह तु न तथा। किं तर्हि? ऐकात्म्यम्[11]। मलयजरसेति। दन्तपत्र करिदशनताटङ्कम्। [12]अविभाव्यता गतिरै[13]कात्म्य[14]लिङ्गम्। योजयति—अत्र मलयजेति।

प्रस्तुतस्यान्यतादात्म्यं सामान्यं गुणसाम्यतः[15]।

---

1 F. क्षणाकम्प 2 A. C. यत्कृतौ 3 A C आगन्तुकविघ्न 4 A. C प्रकीर्तित F प्रदर्शित. 5 F स्तुनेति 6 A C साम्य सामा 7 H साम्ययो 8 H. यत्यत्र 9 A C स्तुतस्या 10 H इति सूत्रार्थ 11 A's alt विरूप 12. A C F. omit अ. 13 F. ऐकार्थ्य 14 A C F म्यगति लिङ्ग 15. A C. G. साम्यत स्वगुण

स्वगुणत्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुणः ॥७२॥

यत्र परिमितगुणस्य वस्तुन समीपवर्तिप्रकृष्टवस्तुगुणस्वीकरण, स तद्गुण । तस्योत्कृष्टगुणस्य गुणा अस्मिन्निति कृत्वा । न चेद निमीलितम् । तत्र हि प्रकृत वस्तु वस्त्वन्तरेणाच्छादितत्वेन प्रतीयते । इह त्वनपह्नुतस्वरूपमेव प्रकृत वस्तु वस्त्वन्तरगुणोपरक्ततया प्रतीयत इत्यस्त्यनयोर्भेद । यथा—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्या परित स्फुरन्त्या ।
रत्नै पुनर्यत्र रुचा रुच स्वामानिन्यिरे वंशकरीरनीलं ॥

अत्र रविरथाश्वानामरुणवर्णस्वीकार । तस्यापि गारुत्मतमणिप्रभास्वीकार इति तद्गुणत्वम् ।

सति हेतौ तद्रूपाननुहारोऽतद्गुणः ॥७३॥

तद्गुणप्रस्तावात्तद्विपर्ययरूपोऽतद्गुण उच्यते । इह न्यूनगुणस्योत्कृष्टगुणपदार्थधर्मस्वीकार प्रत्यासत्त्या न्याय्य । यदा पुनरुत्कृष्टगुणसन्निधानाख्ये हेतौ सत्यपि तद्रूपस्योत्कृष्टगुणस्याननुहरण न्यूनगुणेनाननुवर्तन भवति सोऽतद्गुण । तस्योत्कृष्टगुणस्यास्मिन्गुणा न सन्तीति । यद्वा तस्याप्रकृतस्य

---

तद्गुणार्थं सूत्रम्—स्वगुण[1]त्यागादत्युत्कृष्टगुणस्वीकारस्तद्गुण । परिमित गुणस्य वस्तुनोऽत्युत्कृष्टगुणस्वीकारस्तद्गुण । व्याचष्टे—यत्रेति । निवक्ति—तस्येति । निमीलिताद्भेदमाह—न चेति तत्र हि वस्त्वन्तरनिगूहनम्[2] । इह स्व[3]निगू[4]हितस्य तद्गुणे नोपराग । विभिन्नेति । अरुणेन वर्णभेद नीना रथवाहा यत्र वंशाङ्कुरनीलैर्मरकतरत्न प्रभया पुन स्वा[5] प्रभा आनि[6]न्यि रे । [6]अत्राश्वानामारुण्ये तद्गुणता । आरुण्यस्य च[7] हारित्येन । योजयति—अत्र रवीति ।

तद्गुणस्स्वगुणत्यागादुत्कृष्टस्य गुणग्रह ।

सति हेतौ तद्रूपा[10]ननुहारोऽतद्गुण[11] । तद्गुणविपरीतोऽतद्गुण । सङ्गतिं व्याचष्टे—तद्गुणेति । उत्कृष्टगुणवस्तुप्रत्या[12]सत्तौ हि न्यूनगुणस्य तद्गुणस्वीकारो न्यायोपपन्न । प्रत्यासत्ता[13]वप्यननुहरण[14]मतद्गुणालङ्कार । निवक्ति—तस्योत्कृष्टस्येति । [15]यदि वेति । निरन्वय त[16]रमनुहरणहेतौ सत्यपि अननुहरणात्[17] अतद्गुण । अत्र विगृह्णाति—

---

1 F गुणेति 2 C गूह 3 F omits स्व 4 A C गूहे त 5 F स्वां 6 E G omit आ 7 A's alt निन्युरित्यत्र अश्वा 8 E F and H omit अत्र 9 Omitted in A C G 10 A E रूपान्यनिहारो 11 G गुण ससङ्गतिक व्याच 12 A C पत्तौ 13 C सत्ताव 14 C हरणमत [illegible] 15 A's alt C यन्द्रेति 16 A अन्तर अनु 17 A E हरणम् अत

रूपाननुहारः सत्यनुहरणहेतावतद्गुणः, तस्याप्रकृतस्य गुणा नास्मिन् सन्तीति कृत्वा । क्रमेण यथा—

धवलो सि जइ वि सुन्दर ! तह वि तुए मज्झ रञ्जिअं हिअअं ।
राअभरिए वि हिअए सुहअ ! णिहित्तो ण रत्तो सि ॥
गाङ्गमम्बु सितमङ्ग ! यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस ! तव सैव शुभ्रता चीयते न च न चापचीयते ॥

पूर्वत्रातिरक्तहृदयसपर्कान्नायकस्य धवलशब्दवाच्यस्य प्राप्तमपि रक्तत्वं न निष्पन्नमित्यतद्गुणः । उत्तरत्र त्वप्रकृतस्य गाङ्गयामुनजलस्य संपर्केऽपि न तथा रूपत्वमित्ययमप्यतद्गुण एव । धवलोऽसीति त्वतद्गुण एव । कार्यकारणभावस्यात्राविवक्षणान्न विषमालङ्कारः ।

उत्तरात्प्रश्नोन्नयनमसकृदसंभाव्यमुत्तरं चोत्तरम् ॥७४॥

यत्रानुपनिबध्यमानोऽपि प्रश्न उपनिबध्यमानादुत्तरादुन्नीयते तदेक-

---

तस्या[1]प्रकृतस्येति । इत्थमिय द्विधा । धवलोऽसीति—

धवलोऽसि यद्यपि सुन्दर[2] ! तथापि त्वया मम[3] रञ्जितं हृदयम् ।
रागभरि[4]तेऽपि हृदये सुभग ! निहितो न रक्तोऽसि ॥

धवलो युवा वलक्षश्च[5] । रागभरितहृदयनिधानेऽप्यरक्तत्वमतद्गुण । गाङ्गमिति । अङ्गे ति[6] सम्बोधनम् । [7]चीयते उपचीयते । अत्र [8]अप्रकृत[9]रूपाननुहार । [10]उभयत्र योजयति—पूर्वत्रेत्यादि[11] । [12]प्रथमार्धे कोऽलंकार इत्यत आह—धवलोऽसीति[13] । धवलस्यापि रञ्जने अतद्गुणत्वं स्फुटमेव । यत कार्यकारणेति । विषमवैधर्म्यं व्यक्तम् ।

न[14] तद्गुणे[15]ऽनुहारस्तु गुणताद्रूप्ययोर्द्विधा ।

उत्तरार्धं सूत्रम्—उत्तरात्प्रश्नोन्नयनमसकृदसम्भाव्यमुत्तरं चोत्तरम् । प्रश्नानुपादाने[16]ऽप्युत्तरा[17]दुन्नयनमेकमुत्तरम्[18] उपात्तस्य च प्रश्नस्य यदसम्भाव्यमसकृदुत्तरं तद्द्वितीयम् । व्याचष्टे—यत्रानुपनिबध्यमान[19]इत्यादि ।

---

1 C. तस्य प्र 2 A C सुन्दर 3 Omitted in E G 4 A C F G चरिते ह 5 A's alt श्वेतराग 6 C अङ्गेत्यम 7 A's alt C लीयते 8 Between प्रकृत & रूपा G repeats the portion इत्थमय द्विधा यद्यपि 9 A मपानरू C. सकातरू 10 A C चरणम् उभ 11 A E. आदिना 12 F ननु प्र 13 A's alt G धवलीत्यिति 14. A. omits न C तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुण 15 A E गुणाननुहार C गुणोऽनुर 16 C धाने 17 Omitted in A C F G 18 A C. F. त्तर उत्त 19 F. इति

मुत्तरम् । न चेदमनुमानम्, पक्षधर्मतादेरनिर्देशात् । यत्र च प्रश्नपूर्वकम-सम्भावनीयमुत्तरं, तत्तु न सकृत्, तावन्मात्रेण चारुत्वाप्रतीते । अतश्चासकृदुपनिबन्धे द्वितीयमुत्तरम् । न चेयं परिसंख्या व्यवच्छेद्यव्यवच्छेदकपरत्वाभावात् । क्रमेण यथा—

एकाकिनी यदबला तरुणी तथाहम्-
अस्मद्गृहे गृहपतिश्च गतो विदेशम् ।
कं याचसे तदिह वासमियं वराकी
श्वश्रूर्ममान्धबधिरा ननु मूढ ! पान्थ ॥

का विसमा देव्वगई किं लद्धं जं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ॥

पूर्वत्र मम वासो दीयतामिति प्रश्न उत्तरादुन्नीयते । उत्तरत्र दैवगत्यादि-निगूढत्वादसम्भाव्यमसकृत्प्रश्नपूर्वकमुत्तरं निबद्धम् । इत प्रभृति गूढार्थप्रतीति-परालङ्कारलक्षणम् ।

## संलक्षितसूक्ष्मार्थप्रकाशनं सूक्ष्मम् ॥७४॥

---

अति[1]व्याप्तिं परिहरति—न चेद[2]मिति[3] । त्रै[4]रूप्यनिर्देशो ह्यनुमानलक्षणम् । द्वितीयस्य[5] स्वरूपमाह—यत्र चेति । तत्र नियममाह— तच्चेति । अत्र[6] अतिव्याप्तिं परिहरति—न चेय[7]मिति । परिसंख्याया व्यवच्छेद्यव्यवच्छेदकभाव विवक्षय । अत्र त्वविवक्षा ।

एकाकिनीति—क[8] याचस वासयाचनेन किमित्यर्थ । का विसमेति ।

का विषमा दैवगति किं (लब्ध[9]) यज्जनो गुण[10]ग्राही ।
किं सौख्य सुकलत्र किं दुःख[11] मत् खलो लोक ।

अत्र दैवगत्यादि [12]गूढत्वादप्रतिसम्भाव्यम् । उत्तर योजयति—पूर्वत्रे[13]त्यादि । असकृदिति । नाना[14]त्वनियमो[15]द्घाटनम् ।

[16]उत्तर प्रश्नपिशुन असम्भाव्योत्तर द्विधा ।

अलङ्कृत्यन्तरायाह—इत प्रभृतीति । सूक्ष्मार्थं सूत्रम्—संलक्षितसूक्ष्मार्थप्रकाशन

---

1 A C अत्र व्या 2 F चेदिति 3 F इति परिसंख्या 4 A's alt ऐक रूप्य 5 A E F G omit स्य 6 Omitted in A F 7 A C चेया व्याचष्टे यद्यप्यत्र च्छेदकभावोपपत्तेः अत्र 8 A C कथया च स्वो समवाय याचरेद किमि F किं याचस इति वासा याच 9 All mss लभ्य 10 C मार्गी 11 A's alt. F दुर्माल्य खलो 12 C दृ 13 A इति 14 A C नानाथ 15 G भिय ब्रान्त तदप्यन्यथा ऽप्यवसाय (P 204 under भाविक) 16 Except C all mss प्रश्नादनुत्तर तस्मादिद चासकृदुत्तरम्

इह सूक्ष्म स्थूलमतिभिरसलक्ष्यो योऽर्थं, स यदा कुशाग्रीयबुद्धिभिरिङ्गिताकाराभ्या सलक्ष्यते, तदा तस्य सलक्षितस्य विदग्ध प्रति प्रकाश सूक्ष्मम् । तत्रेङ्गिताद्यथा—

> सङ्केतकालमनस विट ज्ञात्वा विदग्धया ।
> हसन्नेत्रार्पिताकूत लीलापद्म निमीलितम् ॥

अत्र सङ्केतकालाभिप्रायो विटसवन्धिना भ्रूक्षेपादिना इङ्गिते लक्षित रजनिकालभाविना लीलापद्मनिमीलनेन प्रकाशित । आकाराद्यथा—

> वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धैर्दृष्ट्वा भिन्न कुङ्कुम कापि कण्ठे ।
> पुस्त्व तन्व्या व्यञ्जयन्ती वयस्या स्मित्वा पाणौ खड्गलेखा लिलेख ॥

अत्र स्वेदकृतकुङ्कुमभेदरूपेणाकारेण सलक्षित पुरुषायित पाणौ पुरुषोचितखड्गलेखनेन प्रकाशितम् ।

---

सूक्ष्मम् । इङ्गितादिभिस्सलक्षितस्य सूक्ष्मार्थस्य विदग्धाय प्रकाशन सूक्ष्मम् । व्याचष्टे—इह सूक्ष्म[1] इत्यादि[2] । कुशाग्रव[3]त्तीक्ष्णा कुशाग्रीया । अत इद[4] मङ्गिताकाराभ्या द्विधा ।

> भावूतव्य[5]ञ्जिताश्चेष्टा इङ्गित बुद्धि[6]कारिता ।
> आकारा [7] पुन[8]राम्नातास्ता एवा[9]बुद्धिकारिता ॥

तथा—

> तारा[10]पुटभ्रूदृष्ट्यादेर्विकारानिङ्गित विदु ।
> आकारास्सत्त्वजा भावा आद्या[11]बुद्धया परेऽयथा ॥

सङ्केतेति—[12]कालमनस काल[13] ज्ञातुमनसमित्यर्थ । नेत्रार्पिताकूत[14] नेत्राभि[15]व्यञ्जित[16]भावमित्यर्थ । सङ्केतकालमनसा[17] ज्ञान भ्रूकटाक्षादि । तदीयेङ्गितेन[18] ज्ञात्वेति सूक्ष्मार्थ[19]सल[20]क्षणम् । पद्म[21]निमीलन तु प्रकाशनम् [22] । योजयति—अत्र सङ्केतेति ।

वक्त्रस्यन्दीति—स्वेदेन आकार[23]स्तेन कुङ्कुमभेदात् पुरुषायितज्ञान सूक्ष्मार्थ[24]सलक्षणम् खड्गलेखस्तु[25] तत्प्रकाशनम् । योजयति—अत्र स्वेदेति ।

> सूक्ष्म तु सूक्ष्म [26] सलक्ष्य विदग्धेषु प्रकाशनम् ।
> [27]इङ्गिताकारत [28]स्सूक्ष्मसलक्षणमिति द्विधा ॥

---

1 A C ममिया 2 H आदि सूक्ष्म तु 3 A's alt C वृत्तिदमा 4 E इदमपि 5 a b c व्यञ्जिका 6 A C दुर्विका 7 A C आकार 8 A C अन्तरात्मा 9 A C एषा दुर्विका 10 A ताराप्युद्भृतर 11 A अत्र परोऽन्य C अत्र बुद्धयप 12 A सङ्केतकाल 13 Omitted in A C 14 A कूतात् 15 A C omit अभि 16 E F व्यञ्जित I व्यञ्जितया 17 C न ज्ञान 18 F तेन कुङ्कुम 19 A C अर्थं 20 A सुलक्ष 21 A पद्म नतु म C पद्मं न तु 22 C प्रकाशन 23 आकारकवस्तुन 24 A अर्थसुलक्ष 25 E I omit तु 26 A सूक्ष्म omitted in C 27 C चङ्कित 28 C आकारं सु

## उद्भिन्नवस्तुनिगूहनं व्याजोक्तिः ॥७६॥

यत्र निगूढं वस्तु कुतश्चिन्निमित्तादुद्भिन्नं प्रकटतां प्राप्तं सद्वस्त्वन्तरप्रक्षेपेण निगूह्यते अपलप्यते, सा वस्त्वन्तरप्रक्षेपरूपस्य व्याजस्य वचनाद्व्याजोक्तिः। यथा—

> शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
> द्रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः।
> हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
> शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥

अत्र रोमाञ्चादिनोद्भिन्नो रतिभावः शैत्यप्रक्षेपणेनापलापितः। यद्यप्यपह्नुतोऽपि सस्मितत्वस्थापनेन पुनरप्युद्भिन्नत्वेन प्रकाशितः, तथाप्यपलापमात्रविन्तयास्यालङ्कारस्योल्लेखः। नन्वपह्नुतिग्रन्थे 'यथा सादृश्याय योऽपह्नवः सापह्नुतिः, तथापह्नवाय यत्सादृश्यं साप्यपह्नुतिः' इति स्थापितम्। व्याजोक्तौ चोत्तरः प्रकारो विद्यते, तत्कथमियमलङ्कारान्तरेण कथ्यते। सत्यम्। उद्भटसिद्धान्ताश्रयेण तत्रोक्तम्। न हि तन्मते व्याजोक्त्याख्यमलङ्करणमस्ति। इह तु तस्य सम्भवाद्व्यतिरिक्तापह्नुतिरिति पृथगयमलङ्कारो निर्दिष्टः।

---

व्याजोक्त्यै[1] सूत्रम्—उद्भिन्नवस्तुनिगूहनं व्याजोक्ति। कुतश्चिन्निमित्तात् प्रका[2]शमास्यगूढ[3]वस्तुनो व्याजवचसा निगूहनं व्याजोक्ति। व्याचष्टे—यत्र[4] निगूढमित्यादि। वस्त्वन्तरप्रक्षेपेति निरुक्ति[5]।

शैलेन्द्रेति। प्रतिपाद्यमाना दीयमाना[6]। आदिशब्दात् स्तम्भवेपथू[7]। विधिव्यासङ्ग क्रियाशक्ति। शैलान्तःपुरेण मातृमण्डलेन गणैश्च दृष्ट। योजयति—अत्र[8] रोमाञ्चेति। अस्यामङ्गस्य क्षमयितुमाह—यद्यपीत्यादि। अपलापमात्र चिन्तयेति सस्मितत्वकथनात् पुनः प्रकाशन[9] लक्षणतया न चिन्तनीयमिति भाव। उल्लेख उट्टङ्कनम्। मध्याक्षिमाशङ्कते—नन्वपह्नुतीति। उत्तर प्रकार अपह्नवाय[10] [11]सादृश्य इत्येवमात्मक[12]। परिहरति—सत्यमिति। तत्र तथोक्ति। उद्भटसिद्धान्ताश्रयेण। तन्मते व्याजोक्त्य[13]नुपवर्णनात् तथाऽपह्नुतिसम्भव। इह तु[14] व्याजोक्त्युपवर्णनात् सोऽपह्नुति प्रकार एव [15]नास्तीत्येकैवापह्नुति। अत इय व्याजोक्तिरेव।

---

1 A F H जोक्तेस्तु 2 C omits का 3 A's alt C H स्ट 4 E यत्रानि 5 H उक्ति व्याजोक्तिर्व्याज 6 A मानादि 7 A वेपथुन C E वेपथु 8 Omitted in C 9 A F शनल 10 F ह्नव एव यस्मात् ह 11 E omits सा 12 E आरम्भक 13 A जोक्तया च वर्णा F जोक्ति व्याजवचनेन 14 Omitted in E 15 A नास्तीत्याह कथापह्नुति

**अन्यथोक्तस्य वाक्यस्य काकुश्लेषाभ्यामन्यथायोजनं वक्रोक्तिः ॥७७॥**

उक्तिव्यपदेशसाम्याद्व्याजोक्त्यनन्तरमस्या लक्षणम्। यद्वाक्यं केनचिदन्यथाभिप्रायेणोक्तं तदपरेण वक्त्रा काकुप्रयोगेण श्लेषमुखेन वान्यथान्यार्थघटनया योज्यते, तदुक्तिर्वक्रोक्तिः। काकुप्रयोगेण यथा—

गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।
अलिकुलकोकिलललिते नैष्यति सखि! सुरभिसमयेऽसौ॥

एतद्वाक्यं नायिकया आगमनिषेधपरत्वेनोक्तम्। तत्सख्या च काकुप्रयोगेण विधिपरतां प्रापितम्। काकुवशाद्विधिनिषेधयोर्विपरीतार्थसंक्रान्तिः। श्लेषोऽभङ्गसभङ्गत्वेन द्विविधः। तत्राभङ्गश्लेषमुखेन यथा—

अहो केनेदृशी बुद्धिर्दारुणा तव निर्मिता।
त्रिगुणा श्रूयते बुद्धिर्न तु दारुमयी क्वचित्॥

अत्र दारुणेति प्रथमान्तं प्रक्रान्तं श्लेषभङ्ग्या तृतीयान्ततया संपादितम्। सभङ्गश्लेषमुखेन यथा—

त्वं हालाहलभृत्करोषि मनसो मूर्च्छां ममालिङ्गितो
हालां नैव बिभर्मि नैव च हलं मुग्धेऽस्मि किं हालिकः॥
सत्यं हालिकतैव ते समुचिता शक्तस्य गोवाहने
वक्रोक्त्येति जितो हिमाद्रिसुतया स्मेरोऽवताद्वः शिवः॥

---

व्याजोक्तिर्व्याजवचनेनोद्भिन्नस्य निगूहनम्।
अपह्नवाय सादृश्यम् इष्टा[1] नापह्नुतिर्यतः[2]॥

वक्रोक्त्यर्थं सूत्रम्—अन्यथोक्तस्य वाक्यस्य काकुश्लेषाभ्यां अन्यथा योजनं वक्रोक्तिः। एकाभिप्रायेणोक्तस्य वाक्यस्य काकुश्लेषाभ्यां अन्यथा[3]भिप्रायेण योजनं वक्रोक्तिः। ससङ्गतिकं व्याचष्टे—[4]उक्तिव्यपदेशेति। गुरुपरतन्त्रेति[5]। दूरतरं गन्तुमुद्यत इति नायिकोक्तिरसौ। गुरु[6]परतन्त्र[7]तया असौ गुरुपरता समयेऽस्मिन् नैष्यति न नेष्यतीति काकुगर्भं[8]सख्युक्तिः। योजयति—एतद्वाक्यमिति। ननु गमनविधिनिषेधो[9] शाब्दो[10]। तस्माद्गमननिषेधविधिर्योजितो[11]। अत आह—काकुवशेति। ईदृशि विषये काकोर्निषेधद्योतकत्वात् विपरीतार्थसंक्रान्तिः।

अहो केनेति—दारुणा घोरा काष्ठेन च। योजयति—अत्रेति। त्वं हालाहलेति। हाला[12]हलवान् मूर्छां करोषीति देवी। देवस्तु हाला[13] सुरां न बिभर्मि[14] नापि च हलं

---

1. A. इष्टा न्याप C. तुष्टा 2. a. b. c. मतः 3. A. H. अन्याभि 4. C. उक्त 5. H. इति अन्यथायोजनं (P. 202.) 6. I. omits गुरु 7. A. C. F. तन्त्रा नेष्यति काकु 8. C. सख्युक्तिः 9. A's alt. C. निषेधो 10. A's alt. C. शाब्दः 11. A. C. योजिता काकु 12. A. C. हलकरो 13. C. हालनं 14. A. F. बिभ्रति

उभयमुखेन यथा—

विजये ! कुशलस्त्र्यक्षो न क्रीडितुमहमनेन सह शक्ता ।
विजये कुशलोऽस्मि न तु त्र्यक्षोऽक्षद्वयमिदं पाणौ ॥
किं मे दुरोदरेण प्रयातु यदि गणपतिर्न तेऽभिमतः ।
क इह द्वेष्टि विनायकमहिलोकं किं न जानासि ॥
चन्द्रग्रहणेन विना नास्मि रमे किं प्रतारयस्येवम् ।
देव्यं यदि रुचितमिदं नन्दिन्नाहूयतां राहुः ॥
हा राहो शितदंष्ट्रे भयकृति निकटस्थिते रतिः कस्य ।
यदि नेच्छसि सत्यक्तः संप्रत्येषैव हाराहिः ॥
वसुरहितेन क्रीडा भवता सह कीदृशी न जिह्रेषि ।
किं वसुभिर्नमतोऽमून्सुरासुरानेव पश्य पुरः ॥
आरोपयसि मुधा किं नाहमभिज्ञा किल त्वदङ्कस्य ।
विध्यं वर्षसहस्र स्थित्वेति न युक्तमभिधातुम् ॥
इति कृतपशुपतिपेलवपाशकलीलाप्रयुक्तवक्रोक्तेः ।
हर्षवशातरलतारकमाननमव्याद्भवान्या व. ॥

---

सीरम् । किं हलवत्तया[1] हालिको[2]ऽसि इति पुनर्देवी । गोवा[3]हने शक्तस्य[4]हालिकतैव सत्यमिति । अत्र[5] हालाहलेति सभङ्गश्लेष[6] ।

विजय[7] इति । कुलकात्मक वाक्यम् । विजये इति देवीकर्तृक विजयासंबोधनम् । देवस्योक्तौ[8] जित्वरतया शक्तोऽस्मि । [8a]न तु [9]त्र्यक्षोऽहमक्षद्वयसद्भावादिति । अक्ष[10]शब्द पाशव[11]चनः । किं म[12]इति देव्याह । दुरोदरेण किं मे । देव आह—मे दुरोदरेण लम्बोदरेण [13]नार्थश्चेत् गणपतिरप[14]सरतु । देव्याह—को द्वेष्टि विनायकम् ? देव आह—अहिलोक [15]इति । इह विनायको गरुड । चन्द्रेति । चन्द्रग्रहणेन इन्दु[16]पणेन विना न[17]रमे इति देवी । देवस्तु चन्द्रग्रहणापेक्षा चेद्राहुराहूयताम् । हा [18]राहाविति । [19]राहो[20]स्थिते हा ! [21]कस्य रतिरिति देवी । देवस्तु [22]हारोर[23]गोऽपनीयतामिति । वसुरहितेनेति । वसु द्रविण [24]वसवो-ऽष्टौ च[25] । आरोपयसीति । अङ्क[26] अङ्कन[27]चलन उत्सङ्गश्च । इति (कृत[28]) पशुपतिरिति ।

---

1 C वक्तया 2 A F हालिकोऽस्मि 3 A F दह 4 C omits स्य 5 A C पुनर्हो 6 A E. श्लेष इति C श्लेष 7 F विषय 8 A's alt उक्तिश्च 8a All mss नतु 9 As alt त्र्यक्षमत्र C त्र्यक्षोऽक्षद्वि 10 C अन् 11 A C पाशपर. 12 A किं मम A's alt किं मु 13 C नात्युच्चेत् All mss except C नाथ 14 A अपापस C अपि अप 15 Omitted in A C F H 16. A's alt पाणान्तचि 17 A रुद्रे A's alt रुमे E मर्मे 18 A's alt. हालाहलाविति 19 C राहो 20 C सुस्थि 21 A कहांरति 22 F राहो हराङ्गादप 23 A रणान्दनी C रणमप 24 E. अष्टौ वसवश्च 25 Omitted in A F. 26 A अङ्कस्यङ्क 27. C नच्छलन 28 Omitted in all mss

वक्रोक्तिशब्दश्चालङ्कारसामान्यवचनोऽपीहालङ्कारविशेषे सञ्ज्ञितः।

सूक्ष्मवस्तुस्वभावस्य यथावद्वर्णनं स्वभावोक्तिः ॥७८॥

इह वस्तुस्वभाववर्णनमात्रं नालङ्कारः। तत्त्वे सति सर्वं काव्यमलङ्कारि स्यात्। न हि तत्काव्यमस्ति यत्र न वस्तुस्वभाववर्णनम्। तदर्थं सूक्ष्मग्रहणम्। सूक्ष्मः कविमात्रगम्यः। अत एव तन्निर्मित एव यो वस्तुस्वभावः तस्य यथावदन्यूनातिरिक्तत्वेन वर्णनं स्वभावोक्तिरलङ्कारः। उक्तिवचनप्रस्तावादिहास्या लक्षणम्। भाविकरसवदलङ्काराभ्यामस्या भेदो भाविकप्रसङ्गे निर्णेष्यते। यथा—

> हुंकारो नखकोटिचञ्चुपुटकव्याघट्टनोट्टङ्कित-
> स्तन्व्याः कुन्तलकण्डुकव्यपनये सीत्कारसीमन्तितः।
> पृथुश्लिष्यदवामनस्तनभरोत्सेप्याङ्कपालीसुधा-
> सेकाकेकरलोचनस्य कृतिनः कर्णावतंसोभवेत् ॥

---

[1]पाशका भक्षा.[2]। ननु[3] विच्छित्तिरूपत्वात् सर्व एवालङ्कारो वक्रोक्तिरित्यत आह—वक्रोक्तीति।

> अन्यथा[4] योजन[5] वाक्ये वक्रोक्तिरभिधीयते।
> द्विप्रकारा च[6] विज्ञेया काकुश्लेषसमा[7]श्रयात् ॥

स्वभावोक्त्यर्थं सूत्रम्—सूक्ष्मवस्तुस्वभावस्य[8] यथावद्वर्णनं स्वभावोक्तिः। कविप्रतिभा[9]गोचरस्य स्वभावस्य सम्यग्वर्णन स्वभावोक्ति.। व्याचष्टे—इह वस्त्विति। अत [10]एवेति। कविमात्र[11]गम्यत्वात्। [12]कविना [13]निर्मित एव। उक्तिवचनम् [14]उक्तिशब्द। अनेन सङ्गतिवैधर्म्यं वर्णयिष्यत इत्याह—भाविकेति।

हुङ्कारेति—कुन्तल[15]गतकण्डूव्यपन[16]यने तन्व्या हुङ्कार.[17] [18]कृतिन कर्णावतंसीभवेत्[19]। कीदृशः? चञ्चु[20]पुटाकारया[21] नख[22]कोटया यद्घाघट्टन तेनो[23]ट्टङ्कितस्सीत्कारोपशोभि च। कीदृशस्य? पृथु[24]श्लिष्यत्कुचा[25]ङ्कपालीसुखेना[26]केकर[27]दृश।

स्वभावोक्ति[28]र्बुधोन्नेयवस्तुस्वाभाव्यवर्णनम्।

---

1 C पाताः 2 E. श्रक्षाः का. 3 A's alt. तनु 4 C. यथोज 5 H. नयनं 6 Omitted in C 7. A. आश्रिता 8. E omits स्य 9 E प्रतिमंक्गो 10 A एव चेति 11 A विद्यमानत्वात् C. गद्यत्वात् 12 A. omits क 13 A. निर्मृत 14 A. श्रादिश 15 A C. H. गत 16 A C. H नये 17 C. कारञ्कृ 18. A C कृतः 19. A. भवेतन्की 20 A. चञ्चू 21. A C E काररया 22 A. न योग्या 23. A. C. तन्नाट 24 C हृष्ट 25 C कुचावपा 26 C. D. F. G H सुखेन 27. A's alt. क्तुरीदृशः 28. E. बुधं· नेय

## अतीतानागतयोः प्रत्यक्षायमाणत्वं भाविकम् ॥७६॥

अतीतानागतयोर्भूतभाविनोरर्थयोरलौकिकत्वेनात्यद्भुतत्वाद्वचस्तसबन्धरहितशब्दसन्दर्भसमर्पितत्वाद्य प्रत्यक्षायमाणत्वं भाविकम्। कविगतो भाव आशय श्रोतरि प्रतिबिम्बत्वेनास्तीति, भावो वा भावना पुन पुनश्चेतसि निवेशनं सोऽत्रास्तीति।

न चेय भ्रान्ति। भूतभाविनोर्भूतभावित्वेनैव प्रकाशनात्। नापि रामोऽभूदिति वस्तुवृत्तान्तमात्रम्। भूतभाविगतस्य प्रत्यक्षत्वादिगतस्य धर्मस्य स्फुटस्याधिकस्योपलम्भात्। नापीयमतिशयोक्ति। अन्यस्यान्यतयाध्यवसायाभावात्। न हि भूतभाव्यभूतभावित्वेनाध्यवसीयते, अभूतभावि वा भूत-

अथ प्रतीतिर्वैचित्र्यातारतम्यनिरूपणे[1]।
भाविक दूर[2]दुर्लक्ष[3] व्यक्त[4] व्याक्रियतेतमाम्॥

तत्र सूत्रम्—अतीतानागतयो प्रत्यक्षायमाणत्व भाविकम्। भूतभाविनो अर्थयो अत्यद्भुतवादनाकुल[5]सम्बन्धशब्दसमर्पितत्वाच्च प्रत्यक्षायमाणत्व भाविकम्। व्याचष्टे—अतीतेत्यादि। कविगतेति[6]। कविभावस्य श्रोतरि प्रतिबिम्बतापत्तिर्भाविक[7]मित्यर्थं[8]। भावो वेति। भावि भाविकस्य भावनैक[9]प्राणत्वात्। निरुक्त्यन्तर, सोऽत्रा(स्ती[10])ति। भाविकमित्यनुषङ्ग।

ननु मुनिजयतीत्युदाहरिष्यमाणे भूतभाविनो [11]प्रत्यक्षता भ्रान्ति किं नेष्यत इत्यत आह—न चेयमिति। भूतभाविनोर्भूतभावित्वेनैव प्रत्यक्षीभावे का भ्रा[12]न्तिरिति[13] भाव। ननु भूतभाविनोर्भूतभावित्वेन प्रकाशने वस्तुवृत्तमात्रमित्यत आह—नापि [14]रामोऽभूदित्यादि। रामोऽभूदिति वस्तुवृत्तान्तमात्रे हि न प्रत्यक्षायमाणता। इह तु स्फुटस्य प्रत्यक्षत्व[15]स्य उपलम्भ। न[16] हि प्रत्यक्षत्वेन अध्यवसायादतिशयोक्तिरित्यत आह—नापीयमिति। तत्र हेतु। अन्यस्यान्यतयेति। [17]अतिशयोक्तौ हि अन्य[18]दन्यतया [19]अध्यवसीयते[20] इह तु न तथा। [21]भूते भाविनि प्रत्यक्षत्वे च अन्यत्वाध्यवसायाभाव[22]। एतदुपदर्शयति—न[23] हि भूतभावीति। भूतम अभूत[24]त्वेन भाविन अभावित्वेन ना[25]ध्यवसीयते। एतद्विप-

1 A C निरूपणे 2 A's alt C हर 3 A C F लक्ष्य 4 A's alt अया 5 A कुनश 6 H गतेति उदात्ताय सूत्र (under उदात्त) 7 A F विक इ C विकमवन्धेत्यर्थं 8 A अर्थ प्राण 9 F प्रमाण 10 All mss अस्त्विति 11 C प्रत्यक्षत्वात् E प्रयद्यता 12 A C क्षतिरिति 13 A C स्वभा 14 A's alt. रामोऽयमित्या 15 A C त्ववस्याध्यवसादनादति 16 E तर्हि 17 A C F अत्राति 18 F अन्यान्य 19 A व्यवसी 20 A सीयते एतदिव इह C सीयते एत द्विप ■ F सीयते एतद्विपर्ययोऽपि 21 A न भूते 22 E भावात् 23 A C omit नहि 24 C omits अ 25 A चाध्य E I नात्र अध्य

भावित्वेन । न चापि प्रत्यक्षमप्रत्यक्षत्वेन, अप्रत्यक्ष वा प्रत्यक्षत्वेन ।

न हि प्रत्यक्षत्वं केवलवस्तुधर्मः । प्रतिपत्त्रपेक्षयैव वस्तुनि तथाभावात् । यदाहुः—"तत्र यो ज्ञानप्रतिभासमात्मनोऽन्वयव्यतिरेकावनुकारयति स प्रत्यक्ष" इति । केवलं वस्तुप्रत्यक्षत्वे प्रतिपत्तुः सामग्र्युपयुज्यते । सा च लोकयात्राया चक्षुरादीन्द्रियस्वभावा, योगिनामतीन्द्रियार्थदर्शने भावनारूपा । काव्यार्थविदा च भावनास्वभावैव । सा च भावना वस्तुगतात्यत्यद्भुतत्व-प्रयुक्ता । अत्यद्भुताना वस्तूनामादरप्रत्ययेन हृदि सन्धार्यमाणत्वात् । नापि

---

र्ययोऽपि नास्तीत्याह—अभूतभावि[1] वेति । यच्चात्र प्रत्य[2]क्षत्व तदप्यन्य[3]था अध्यवसीयते इत्या[4]ह—न चापीति । विपर्ययोऽपि नास्तीत्याह—अ[5]प्रत्यक्ष वेति । ननु भूतभाविनो अप्रत्यक्ष[6]यो प्रत्यक्षायमाणत्वम् अन्यथाऽध्यवसाय इत्यत[7] आह—न हि प्रत्यक्षत्वमिति । यदि प्रत्यक्षत्व केवलवस्तुधर्म तदा[8] भूतभाविनोरप्रत्यक्षता[9] । वर्तमानस्य तु प्रत्यक्ष[10]त्वम् इति भवेद्व्यवस्था । न हि प्रत्यक्षत्व केवलवस्तुधर्म । किं तर्हि ? प्रति[11]पत्त्रपेक्षयैव प्रत्यक्षस्येति वस्तुधर्मता । न हि प्रतिपत्तारमनपेक्ष्य वस्तुनि प्रत्यक्षता नाम काचित् । अत्र प्रामाणिक[12]सवादमाह[13]—यदाहुरित्यादि । यो ह्यर्थ स्वग्राहकप्रतिपत्तु[14] ज्ञान-प्रभास[15]स्यान्वयव्यतिरेकावनुकारयति । स्वयमस्ति चेत् ज्ञानप्रतिभासोऽस्ति, नास्ति चेन्नास्तीति[16] व्यवस्थापयति । स प्रत्यक्ष इत्यर्थ ।

अत प्रत्यक्षत्व न केवल[17] वस्तुधर्म प्रतिपत्तु[18]स्तु सामग्री तत्र उपयुज्यत इत्याह—केवलमिति । असामग्रीके[19] प्रतिपत्तरि[20] न[21] वस्तु प्रत्य[22]क्षीभवतीत्येतावद्वक्तु शक्यते । न तु प्रतिपत्त्रन[23]पेक्षेति भाव । ता सामग्री विवेचयति—सा चेति । लोकयात्राया लौकिकार्थ[24] प्रत्यक्षीकरणे[25] देशकालादिव्यवधानादतीन्द्रियेऽर्थे योगिनाम् ऐकाग्र्यात्मकभावनारूपा । साक्षात्कर[26]णसामग्री काव्यार्थसाक्षात्करणे[27] काव्यतत्त्वविदामपि भावना[28]स्वभावैव । ता च भावना काव्य[29]वस्तुगतमत्यद्भुतत्व योजयति—(सा [30]चेति ।) अत्यद्भुतानि हि वस्तूनि आदरप्रत्ययेन हृदि सन्धार्यमाणानि तथा भावना प्रयोज[31]यन्ति । इत्थ च सति

---

1 A. भावी 2 After प्रत्य I goes back to काक्तालमिति etc under समुच्चय 3 E F नान्यथा 4 C E इत्यत आह 5 E G omit अ 6 C यत्त य प्र 7 A F इत्या 8 A C तथा 9 A क्षत्तापत्ति मानसस्य तु 10 A C क्षता न हि 11 C प्रतिरपे 12 A णिकत्व वादा 13 A C आह यो ह्यर्थस्य ग्रा 14 A C पत्त 15 A C काश 16 C omits इति 17 A C क्वल 18 A. C पत्तिस्तु इत्याह 19 A s alt आसामग्रकेवल C श्री केवल प्र 20 A पत्तरि तिनव C पोतरिन वस्तु D E F G H I प्रतपत्ति 21 A इति All mss except A इह 22 A s alt C प्रतिपेक्षभत्र 23 C omits न 24 E G र्थी तकार्थे 25 A C करणे इन्द्रियार्थे यो 26 C कार 27 A C करणसामग्री साक्षात्काव्यार्थ साक्षात्करण कारण काव्य 28 A भावग्राह्यैव भावैव 29 A's alt काव्यस्य प्रयोजयति 30 Omitted in all mss. 31 C E जयति

*भूतभाविनामप्रत्यक्षाणां प्रत्यक्षतयैव प्रतीतेरिवार्थगर्भीकारेणायं प्रतीय-*मानोत्प्रेक्षा। तस्या अभिमानरूपाध्यवसायस्वभावत्वात्। न ह्यप्रत्यक्षं प्रत्यक्षत्वेनाध्यवसीयते। किं तर्हि? काव्यार्थविद्भिः प्रत्यक्षं दृश्यत इति। नापि वस्तुगत इवार्थ उत्प्रेक्षायाः प्रयोजकः, तस्या अभिमानरूपायाः प्रतिपत्तृधर्मत्वात्। यदाहुः—"अभिमाने च सा योज्या ज्ञानधर्मे सुखा-विवद्" इति।

काव्यविषये च प्रयोक्तापि प्रतिपत्तैव। नाप्यत्यद्भुतदर्शनादतीता-नागतयोः प्रत्यक्षत्वप्रतीते काव्यलिङ्गमिदम्। लिङ्गलिङ्गिभावेन प्रतीत्यभा-वात्। योगिवत्प्रत्यक्षतया प्रतीतेः।

---

लोकयानाया वर्तमानार्थसाक्षात्करणमामग्री चक्षु[1]रादिर्योगिना काव्यतत्त्वविदा चा[2]तीना-नागतार्थसाक्षात्करण[3]भावना। अतो योगिवत् काव्यतत्त्वविदामतीतार्थसाक्षात्कारो नान्यथाऽध्यवसाय इति नातिशयोक्ति शङ्कया।

ननु प्रत्यक्षतयैव प्रतीय[4]न्ते भूतभाविन इति प्रतीयमानोत्प्रेक्षा किं न स्यादित्यत आह—नापि भूतभाविनामिति। तत्र हेतु—तस्याभिमानेति। अभिमानसम्भावना[5] तद्रूपस्याध्यवसाय इति उत्प्रेक्षाया[6] लक्षणम्। न ह्यत्राप्रत्यक्ष[7] प्रत्यक्षतया सम्भाव्यते। किं तर्हि? प्रत्यक्ष दृश्यते। अतो नोत्प्रेक्षा[8]। अनुत्प्रेक्षात्वे गमकान्तरमाह—नापि वस्त्विति। पदार्थगतो हि इवार्थ उपमाया प्रयोजको नोत्प्रेक्षाया[9]। तत्र हेतु—तस्या अभिमानेति। उत्प्रेक्षा हि[10] अभिमानरूपा प्रतिपत्तृधर्म। तस्मादभिमानगोचर एव इवार्थ उत्प्रेक्षा-प्रयोजक इति भाव। अत्र संवादायाह—यदाहुरित्यादि। सुखादिवज्ज्ञान[11]धर्मेऽभिमाने-ऽध्यवसायोक्तिरित्यर्थ।

ननु प्रतिपत्तृ[12]धर्मो[13]ऽध्यवसायस्तर्हि प्रयोक्तुः कवे न[14] स्यादित्यत आह—काव्यविषये चेति। कविरपि खलु काव्ये [15]सहृदय एव। अतो नेयमुत्प्रेक्षा।

नन्वद्भुतदर्शनात् प्रत्यक्षत्वमिहेति काव्यलिङ्गमित्यत आह—नाप्यत्यद्भुतेति। अत्यद्भुतपदार्थसाक्षात्कारो हि प्रत्यक्षायमाणत्वे हेतु। अकाव्यलिङ्गत्वे हेतुमाह—लिङ्ग-लिङ्गीति। हेतु वै सत्यपि लिङ्गलिङ्गिभावेन नेह प्रतीति। तथात्वे पारोक्ष्य प्रसजेदिति भाव। कथं तर्हि प्रतीतिरित्यत[16] आह—योगिवदिति। नन्वत्यद्भुतत्वहेतुका [17]सचमत्कार[18]-प्रतीतिरिह पुर [19]स्फुरतीव। अतोऽत्यद्भुतत्वहेतुको रसवदलङ्कार एव इत्यत आह—

---

1 C चक्षुर्विदो 2 A स्वतीत 3. A विभावना 4 A. C प्रतीयमानोत्प्रे 5 E G भावन 6 A C F प्रेक्षान्त 7 C प्रत्यक्षते किं 8 A. F. प्रेक्षात्वे ग 9 A C F तद्वार्थ 10 Omitted in A C F. 11 A C F धर्मो 12 A. C. धर्मे 13 A ध्यवसा 14 A's alt हि तन् स्यात् 15 C. omits स 16 G. इत्यत नन्वत्र काव्य (under काव्यलिङ्ग) 17. C omits स 18 E कारा 19 A पुनर्हरतीव F परिस्फुर

नाप्ययं पुरःस्फुरद्रूपतया सचमत्कारप्रतीते रसवदलङ्कारः। रत्यादिचित्तवृत्तीनां तदनुयक्ततया विभावादीनामपि साधारण्येन हृदयसंवादितया परमाद्वैतज्ञानिवत्प्रतीतौ तस्य भावात्। इह तु ताटस्थ्येन भूतभाविनां स्फुटतया भिन्नसर्वज्ञवत्प्रतीतेः। स्फुटप्रतिपत्त्युत्तरकालं तु साधारण्यप्रतीतौ स्फुटप्रतिपत्तिनिमित्तक औत्तरकालिको रसवदलङ्कारः स्यात्। नापीयं सूक्ष्मवस्तुस्वभाववर्णनात्स्वभावोक्तिः। तस्यां लौकिकवस्तुगतसूक्ष्मधर्मवर्णनेन साधारण्येन हृदयसंवादसंभवात्। इह तु लोकोत्तराणां वस्तूनां स्फुटतया

---

नाप्ययमिति। तत्र हेतु—रत्यादीति। परिपाट्यापि सचमत्कारप्रतीते. पुर.[1]स्फुरणा[2] साधारणी, अयापि न भाविकरसवतोरभेदः। कुतः? रतिहासादिचित्तवृत्तीना[3] तदनुरञ्जनत्वेन विभावानुभावव्यभिचारिणा च यदा परमाद्वैत[4]ज्ञानिवत् ममैव शत्रोरेवेत्यादिविशेषपरिहारात् साधार[5]ण्येन [6]हृदयसवादिनी प्रतीति. [7]तदैव रसवतो भावः*। विभावादीन् रसवत्प्रस्तुतौ विवेचयिष्याम.। इह तु भूतभाविना प्रतीतिर्न साधा[8]रण्येन अपितु प्रतिपत्तुः ताटस्थ्येन। स्फुटतया ताटस्थ्य[9] हि भेदः। यथा [10]सांख्यादिसिद्धाना[11] भेदे न सर्वं जानता प्रतीति.। ननु ताटस्थ्येन प्रतीतावतीतादि[12]स्फुटत्व हेतु। स्फुटप्रतीतिश्च प्रमुखे[13] निष्पत्तौ तु साधारण्यप्रतीतिरेव। अत. कथ भाविकमित्यत आह—स्फुटप्रति-[14]पत्तीति। स्फुटप्रतिपत्तिनिमित्तकस्फुटप्रती[15]त्युत्थापितभाविकहेतुक इत्यर्थः। "मुनिर्जयती"त्यादौ हि कुम्भसम्भवादिवृत्तमादौ ताटस्थ्येन प्रतीतादिरूपतया प्रतीयते तदैव भाविकसिद्धिः। अथोत्तरकाल प्रतिपत्[16]प्रतीते. ताद्रूप्यापत्त्या विभावादीनां साधारण्ये[17] रसवान्[18] भाविकहेतुकस्स्यात्। न चैतावता भाविकापलापश्शक्यत इति यावत्।

नन्विह सुन्दरवस्तुस्वभावत्वेन[19] वर्ण्यते ततस्तदप्रत्यक्षायमाणता। अतस्स्वभावोक्तिरित्यत आह—नापीयमिति। तत्र[20]हेतुः—तस्यां[21] लौकिकेति। स्वभावोक्तौ हि लौकिकानामेव वस्तूना य[22]स्सूक्ष्मो धर्मः प्रेक्षावत्प्रतिभैक[23]समधिगम्यस्तस्य वर्णने हृदयसंवादस्साधारण्येन। इह पुनरत्यद्भुतत्वेनालौकिकाना[24] वस्तूना प्रतीतिः तटस्थतया। अतो हृदयसंवादातिरिक्तानामतानां वैलक्षण्यम्। ननु लौकिकवस्तुप्रतीतिसाधारण्ये[25] स्वभावोक्ति, अलौकिकवस्तुप्रतीतिस्फुटत्वे तु[26] भाविकमिति व्यवस्था। यदि लौकिकवस्तुप्रतीते.

---

1. A. पुनरस्वीकरणा 2. E. स्फुरत्ता 3. A's alt C नाम् अनु 4 A. C स ज्ञानी पदार्थस्योरेवेत्यादि A's alt. द्वैतं ज्ञानि 5. C. रणेन 6. A. G. मह्द 7. A. C. D. G. H. I. अतो भावः 8. C. असाधा 9. A. F. स्यात् त्रिभेदः 10. A. C F. सांख्या 11. D E. G. H. I. सिद्धान्तानां 12. A C. स्फुटत्वं 13 A. C. मुखे दोषात्समाधा 14 A. पत्तिनिमित्तक C. पत्तिरिति 15. A.F. प्रतिपत्त्यु 16 C. प्रतिपत्ति 17. E. अनुगतो रस 18. F. वदापि 19. C चेतश्चर्ये 19a All mss 20. A. C. तत्र लौकिकेषु 21. A. C. तस्या लौकिका धर्म. स्व 22. Omitted in A C. 23. A. C. समाधि 24. A. C. कानां तथा अ 25. A. F. स्वभाव 26 Omitted in A. C.

* That is तदैव रसवान् भवति।

तादस्थ्येन प्रतीतेः । क्वचित्तु लौकिकानामपि वस्तूनां स्फुटत्वेन प्रतीतौ भाविकस्वभावोक्त्योः समावेशः स्यात् । न च हृदयसंवादमात्रेण स्वभावोक्ति-रसवदलङ्कारयोरभेदः । वस्तुस्वभावसंवादरूपत्वात्स्वभावोक्तेः, चित्तवृत्ति-संवादरूपत्वान्न रसवदलङ्कारस्य, उभयसंवादसंभवे तु समावेशोऽपि घटते । यत्र वस्तुगतसूक्ष्मधर्मवर्णना स्यात्तत्र स्वभावोक्तिः । अन्यत्र तु रसवद-लङ्कार एव । नाप्ययं शब्दानाकुलत्वहेतुको झटित्यर्थसमर्पणरूपः प्रसादाख्यो गुणः । तस्य हि स्फुटास्फुटोभयरूपवाक्यार्थगतत्वेन झटिति समर्पणं रूपम्

---

स्फुटत्व तदा किं स्यादित्यत आह—क्वचित्त्विति । लौकिकवस्तुबलात् स्वभावोक्तिः । स्फुटत्वप्रतीतिबलात् भाविकमतस्सङ्करः । हृदयसंवादसाधारण्यात् स्वभावोक्ति[1]रसवतो-र्योऽय[2]मभेद प्रसङ्गात्प्रतीतस्तत्र विवेचयति—न च हृदयसंवादेति । स्वभावोक्तौ रसवति च यद्यपि साधारण्येन हृदयसंवादस्सचेतसा, तथापि नानयोरभेद. । तत्र हेतु—वस्तुस्व-भावेति । सत्यपि साधारण्ये वस्तुस्वभावस्य संवाद स्वभावोक्तौ रसवति तु चित्त[3]वृत्तेः । वस्तुस्वभावचित्त[4]वृत्तिरूपत्वात् अनयोस्संपाते[5] तु सङ्करः इत्याह—उभयसंवादेति । समावेश[6]स्सङ्करः । समावेशघटने लिङ्गमाह[7]—यत्र वस्तुगतेति । यत्र चित्तवृत्तिसंवादवति विषये[7a] वस्तुगतसूक्ष्मधर्मवर्णना स्यादित्यर्थ. । अन्यत्रत्विति । सूक्ष्मवस्तुधर्मवर्णना[8]विरहिणि चित्तवृत्तिसंवादमात्रशालिनि विषये [9]रसवानेव ।

ननु व्यस्त[10]सम्बन्धरहितसन्दर्भसमर्पितत्वमिह लक्षण तथात्वे च प्रसादाख्यो गुण एवेत्यत आह—नाप्ययं[11] शब्देत्यादि । इह यद्यपि झटित्यर्थसम[12]र्पण शब्दानाकुलत्व-हेतुक[13] तथापि नाय प्रसादः । तत्र हेतुः—तस्य हि स्फुटा[14]स्फुटेत्यादि । स्फुटोऽ[15]स्तु वाक्यार्थो अस्फुटो वा । तदुभयगतत्वेन झटिति समर्पण प्रसादस्वरूपम् ।

यदाह—

> शुष्केन्धनाग्निवत् स्वच्छजलवत् सहसैव यत् ।
> व्याप्नोत्यन्यत्[16] प्रसादोऽसौ सर्वत्र विहितस्थिति. ॥ इति ॥

अत्र शुष्केन्धनाग्निवदित्यस्फुट वाक्यार्थं प्रत्युपमोक्ति[17] स्वच्छजलवदिति स्फुट[18] प्रति । अतस्सर्वत्र विहित[19]स्थितित्वेन झटिति समर्पण रूप प्रसादस्य । अस्य तु प्रसादे[20] झटिति समर्पितस्य स्फुटत्वेन प्रतीतौ सत्या समनन्तर स्वरूपप्रतिलम्भ । स्वरूप[21] हि अस्य श्रोतरि कविगतभावप्रतिबिम्बन पौन.पुन्येन चेतसि विनिवेशस्वभावभावना-

---

1 A. उक्तिरस्वतो E. उक्तिः 2. F. यं भेदः 3. E. प्रवृत्तेः 4. E. प्रवृ 5. A. संवादेन तु 6. A. C वेशघटने 7. A's alt. C. मात्रे 7a. All mss. read here an additional संवादवति 8. E. वर्णन 9. A's alt. रतिवा 10. A. C. व्यत्यस्त 11. F. नापीति झटि 12. C. अर्पणा 13. A. हेतुः E. हेतुकं 14. F. स्फुटोऽस्तु I. स्फुटा उक्तिव्यवस्था (See towards the end of the Sarvasva) 15. A. वस्तु 16. A. omits त् 17. E G. उक्ति 18. A. C. स्फुटयत. प्रसादोऽस्य 19 F. स्थितित्वं 20. E. प्रसादेन 21. F रूपस्य श्रो

अस्य तु झटिति समर्पितस्य स्फुटत्वेन प्रतीतौ स्वरूपप्रतिलम्भः। तस्मादयं सर्वोत्तीर्ण एवालङ्कारः। लक्ष्ये चायं प्रचुरप्रयोगो दृश्यते। यथा—

मुनिर्जयति योगीन्द्रो महात्मा कुम्भसंभवः।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ॥

यथा वा—हर्षचरितप्रारम्भे ब्रह्मसदसि वेदस्वरूपवर्णने। अत्र हि प्रत्यक्षमिव स्फुटत्वेन तदीयं रूपं दृश्यते। एवं तत्रैव मुनिक्रोधवर्णने, पुलिन्दवर्णनादौ ज्ञेयम्।

---

रमकं वा। तथाविधस्य[1] तु प्रतिबिम्बन स्फुटप्रतीत्युत्तरकालमेव। अतः प्रसादोऽस्याङ्गत्वेन प्राक्सिद्धिकः[2]। अयं तु तदु[3]पकृत(स[4])मनन्तर(स्य[5])सिद्धिकः। ततोऽ[6]न्य एव। अतो न कुत्रचिदन्तर्भाव[7] इति निगमयति—तस्मादयमिति। [8]सर्वोत्तीर्णः भ्रान्त्यादिषु प्रसादगुणान्तर[9]शङ्कितेष्वे[10]कत्रापि नान्तर्भावयितु शक्य[11]इत्यर्थः। इत्थं लक्षणतोऽस्य नानुपपत्तिः काचित्।

लक्ष्यतोऽपि[12] प्राचुर्यमित्याह—लक्ष्ये चाय[13]मिति। मुनिर्जयतीति। मननात् मुनिः। योगीन्द्रत्वान्महात्मा। स्वयं तु कुम्भसंभवः। तथाविधेन येन एकस्मिन्नेव चुलुके[14] पिपा[15]-सोद्धृतनिरवशेषार्ण[16]वाम्भसि प्रसृतिगतं दिव्यौ अमानुषा[17]नुभयातिशयौ तौ विष्णोर्दशा[18]-वतारेषु प्रसिद्धापदानौ मत्स्यकच्छपौ यदृच्छया चुलुकान्तर्भावात् पर्याकुल लुठन्तौ दृष्टौ। अनातीतवृत्तोऽपि मुनिः अलौकिकत्वेनात्यद्भुतत्वसमादर[19]प्रत्ययेन हृदि सन्धार्यमाणत्वात् अनाकुलसन्दर्भसमर्पितत्वाच्च प्रत्यक्षायमाणः तथाविधं च विभाव [20]प्रतिपत्तृषु प्रतिबिम्बयति पौनःपुन्येन चेतसि भावना विनिवेशयतीति भाविकत्वम्। प्राचुर्यार्थमुदाहरणान्तराणि—यथा[21] वा हर्षचरितेत्यादिना[22]। हर्षचरितप्रारम्भे हि देवी सरस्वती अभिशप्यते क्रोधमुनये क्रुद्धाना वेदाना स्वरूपम् उपवर्णितम्। यथा—"रोषविमुक्तवेत्रासनै रोङ्कारमुखरमुखैरुत्क्षेपडोलायमानजटाभारभरितदिग्भिः परिकरबन्धभ्रमितकृष्णाजिनपटच्छायाश्यामायमानदिवसैः रमर्षनिःश्वासदोलाप्रेङ्खोलितब्रह्मलोकैः सोमरसमिव स्वेदबिसरव्याजेन स्रवद्भिः अग्निहोत्रपवित्रभस्मस्मेरललाटपट्टकुशतन्तुचीवरीभिराषाढिभिः प्रहरणीकृतदण्डकमण्डलुमण्डलैः मूर्तैः चतुर्वेदैरिति"। योजनायाह—अत्र हि प्रत्यक्षमिवेति[23]।

---

1. F. धस्य प्रतिर्लम्भः 2. A. कृत् 3. A. तदमृत C. तम्प्राकृत 4. All mss. कृतस्मम 5 All mss. अन्तरस्य 6. A. C. न्यायेन अतो 7. A's alt. भावामति 8. A. सर्वोक्तो दारभंक्तोस्मुन व्याख्यंतुं तेषु शङ्कि 9. E. G. यन्तेषु 10. G. पूकतरत्र 11. A. C. F. शक्यत 12. A. F. लक्षणतोऽथ प्रा 13. E. चायं G. चायपचमितीत 14. A. C. चुल्के 15. A's alt. C. साक्षित 16. A. C. चिनेषाम्भ 17. A. C. D. F. अभाच 18. E. G. दशसु अव 19. A's alt. घनादर 20. A's alt. C. repeat प्रति 21. Omitted in A. C. 22. A. C. आदिना पुलिन्दवर्णनं ॥ 23 After इति A. E. F. G give the passages relating to क्रोधमुनिवर्णनं as "पुनरेषा ... ... ... to कृष्णाजिनस्य" and to पुलिन्दवर्णनं as "दारभंगो. सनुः ... ... to सदा समुद्वहन्तम्"

अयं त्वत्र विचारलेशः संभवति । इह क्वचिद्वर्णनीयस्य वर्णनावशादेव प्रत्यक्षायमाणत्वम् । क्वचित्प्रत्यक्षायमाणस्यैव वर्णनम् । आद्यो यथोदाहृतम् । द्वितीयो यथा—

> अनातपत्रोऽप्ययमत्र लक्ष्यते
> सितातपत्रैरिव सर्वतो वृतः ।
> अचामरोऽप्येष सदैव वीज्यते
> विलासवालव्यजनेन कोऽप्ययम् ॥

इति । अत्र प्रथमप्रकारविषयोऽयमलङ्कारो न प्रकारान्तरगोचरः । कवि-समर्पितानां धर्माणां ह्यलङ्कारत्वात् । न हिमांशुलावण्यादीनामिव वस्तु-सन्निवेशिनाम् । अपि च "शब्दानाकुलता चेति तस्य हेतुं प्रचक्षते" इति भामहीये, "वाचामनाकुलत्वेनापि भाविकम्" इति चोद्भटलक्षणे व्यस्त-

---

ननु वर्णनावशात् प्रत्यक्षायमाणत्वं किं भाविकविषय आहोस्विदनुभाव[1]विशेषा-त्प्रत्यक्षायमाणस्य सतो वर्णनमित्यत आह—अयं [2]त्वत्रेत्यादि । लेश इत्यल्पावशिष्टता-माह—वर्णनावशादिति[3] । भणितिमाहात्म्यमाविष्करोति—प्रत्यक्षायमाण[4]स्यैवेति[5] । भणितिमाहात्म्यनैरपेक्ष्येण निजानुभावविशेषादेव प्रत्यक्षायमाणत्वमनुसन्धत्ते ।

अनातपत्रोऽपीति[6] । अत्र[7] अनातपत्रोऽपि सितातपत्रैरिव वृतत्व[8]मचामरस्यापि वालव्यजने[9]नैवोपलक्षितत्वम् । अनुभावविशेषादेव प्रत्यक्षायमाणत्व[10] वर्ण्यते न तु वर्णनावशात्प्रत्यक्षायमाणता ।

इत्थं विषयद्वये अवस्थिते भाविकम् एकत्रैवेत्याह—अत्र प्रथमप्रकारेति । न[11] प्रकारान्तरगोचर इति यदुक्तं तत्र हेतु—कविसमर्पितानामिति । ये हि [12]कविना प्रति-भया समर्प्यन्ते मुखादौ चन्द्रत्वकमलत्वादयो धर्मास्तेषामेवाऽलङ्कारत्वम् । न तु परमा[13]र्थतः सन्निविष्टानां हिमांशुलावण्यादीनाम् । अतो द्वितीयप्रकारे प्रत्यक्षायमाणत्वं वस्तुसन्निवे-शीति न भाविकालङ्कारः । युक्त्यन्तरेणापि [14]द्रढयितुमाह—अपि च[15] शब्दानाकुलतेत्यादि । चकाराद[16]भूतभाविस्वादय [17]शब्दानाकुलता चेति हेतवो भामहानुशासने उद्भटलक्षणे च अनाकुलत्वरूपं यदनद्वयस्तसम्बन्धरहितशब्दसमर्पितत्वं प्रत्यक्षायमाणत्वप्रतिपादक-मुक्तं तत्[18] कथं प्रयोजकीभवेत् । वस्तुसन्निवेशिधर्मगतत्वेनापि भाविक[19]संभवे निष्प्र-

---

1 A F अत्र C भाव्य 2 A C. omit तु 3 F. इति माला 4 A स्यैवेति 5 A C इति माला 6 C. इत्यादिना आतपत्रो 7 Omitted in A. C. G. 8 A G. तत्रै चाय 9 A F जनेन वोप 10. A C. F G. माण 11 Omitted in A. C F G 12 A C F omit क 13 A C. F. अर्थमपि 14 A. G. दृढ 15. Omitted in A C G 16 F. रात भूतभाविस्वादयो, समुच्चीयन्ते भूत 17. A दय एवानाकुन C त्वादपि च 18 Omitted in A C G 19 F यिक नि

संबन्धरहितशब्दसन्दर्भसमर्पितत्वं प्रत्यक्षायमाणत्वप्रतिपादकं कथं प्रयोजकी-भवेत्, यदि वस्तुसन्निवेशिधर्मगतत्वेनापि भाविकं स्यात्। तस्माद्वास्तवमेव महत्त्वमुत्तरप्रकारविषये वर्णितमिति नायमलङ्कारः। यदि तु वास्तवमपि सौन्दर्यं कविनिबद्धं कविनिबद्धवक्तृनिबद्धं वा सकलवक्तृगोचरीभूतं स्वभावोक्तिवदलङ्कारतया वर्ण्यते, तदायमपि प्रकारो नातीव दुःश्लिष्टः। अतएव, "प्रत्यक्षा इव यत्रार्थाः क्रियन्ते भूतभाविनः। तद्भाविकम्।" इत्येतावदेवान्यैर्भाविकलक्षणमकारि। स्वभावोक्त्या किञ्चित्साहृश्या-

योजन[1]मेव स्यात्। अतो न[2] द्वितीयप्रकारे भाविकमिति निगमयति—तस्माद्वास्तवमेवे-त्यादि। अत्र उत्तरे प्रकारे ननु वास्तवेऽपि सौन्दर्ये लौकिकतया[3] मा भूद्विच्छित्तिः। कवेः कविनिबद्धस्य वा[4] वक्तुः[5] निबन्ध[6]वशादस्त्येव सकलव्यवहर्तृगोचरीभूतता[7] दुरपह्नवा विच्छित्तिः। तत्र कुतो न भाविक[8]मित्यत आह—यदि तु वास्तवमपीत्यादिना। यदि वस्तुसन्निवेश्यपि सौन्दर्यंनिबन्धवशात् सविच्छित्तिकं [9]प्राञ्च आचार्याः स्वभावोक्तिवद-लङ्कारतया वर्णयेयुः तदा[10] अयमपि वास्तवसौन्दर्यविषयतया समाशङ्कितो भाविकप्रकारो [11]नातीव दु श्लिष्टः। [12]सुश्लिष्ट एव सत्या सामग्र्याम्। अय[13]मिहाशयः—यथा हि स्वभा-वोक्तिः वास्तवसौन्दर्यावलम्बिनी वस्तुस्वभावसौक्ष्म्यात् साधारण्येन सचेतनसंवादाच्च विच्छित्तिमती[14] वर्णिता तथैव वास्तवसौन्दर्यावलम्बितया निबन्धा[15]द्विच्छित्ति[16]विशेषोऽय-मलङ्कारतया वर्णनीय एव। तथा च सति भूतभावित्वादि सामग्रीसद्भावेऽन्यकल्पना[17]-गौरवादयमपि भाविकप्रकार इति उन्मीलनं योग्यतया सुशकमेव। उन्मीलिता[18]श्चोल्ले-खभावोदयसन्धि[19]शबलतादय प्रतिप्रथन[20]स्वातन्त्र्येऽपि चिरन्तनसमयव्यतिक्रमः स्यादिति। [21]अमुमेवाशयमाविश्चिकीर्षुः अभियुक्तसंवादायाह—अतएवेत्यादि। भूतभाविनः प्रत्यक्षा इव यत्र क्रियन्ते इत्येतावदेव भाविकलक्षणम[22]कारि यैः[23] खलु तैश्शब्दानाकुलत्वादिव लक्षणत्वेनोक्तम्। नापि वा वस्तुसन्निवेशिनः। सौन्दर्यस्य [24]निबन्धाद्विच्छित्तिः स्वभावो-क्तितुल्यनयशालिनी[25] अलङ्कारत्वेन प्रसञ्जिता। अतो भूतभाविप्रत्यक्षवद्भाविकलक्षणस्य भाविकस्य शब्दानाकुलत्ववास्तव सौन्दर्यावलम्बेनापि[26] भाविकप्रभेदोऽप्यनुशायते। यत इत्थं स्वभावोक्तिप्रतियोगितया मीमांसा प्रवर्तयितव्या, अतः[27] सम्प्रति सङ्गतिमाह—स्वभावोक्त्या किञ्चिदिति। वास्तवसौन्दर्यत्वं[28] साहृश्यम्[29]। तच्च लौकिकत्वसूक्ष्मत्व-

1. A's alt. C. जनामपस्यात् 2. A's alt. C. यद्विती 3. A. C. F. तापा 4. A. F. G. वाचकत्वनि 5. C. वस्तु E. वक्तुं 6. C. निबद्ध 7. F. तत्वादुर 8. F. कत्वमित्य 9. C. प्राञ्च ▪ 10. A. F. तथा 11. A. C. धातावदु 12. A. G. संश्लि 13. A. C. अहमिहादाय यथा 14. A. C. तिरभिर्वाणि 15. A's alt. निबद्धा 16. A. C. शेपेप्वयं 17. E. कल्पन 18. A. F. ताश्चो 19. E. F. शव लत्वाद 20. A. प्रथन F. प्रमथ 21. A. अयम् 22. A. आवारि C. आकारि F. omits अ 23. A. C. तयोर्न खलु 24. A. निबन्ध 25. A. शालिन्यनलं C. शालिन्यं न ज्ञायते 26. A. C. F. omit अपि 27. A. C. F. अथ 28. E. G. सौन्दर्यविषयत्वं 29. A's alt. C. सन्दग्य

तदनन्तरमस्य लक्षण कृतम् ।

समृद्धिमद्वस्तुवर्णनमुदात्तम् ॥८०॥

---

स्फुटत्वसाधारण्यताटस्थ्यप्रतीत्या[1]दिभि वैधर्म्यप्राचुर्यात् भल्पक[2]मित्य[3]भिसन्धायोक्त—किञ्चिदिति । सत्य[4]पि सादृश्य किञ्चिन्मात्र मथापि[5] न्यायसञ्चारायेहास्माभि लक्षणमस्य[6] कृतम् ।

योऽय प्रत्यक्ष[7]वद्भावस्[8]त्वतीतानागतार्थयो ।
तद्भावविम्वनाश्चित्ते विनिवेशाच्च[9]भाविकम् ॥
[9]नाविपर्ययतो भ्रान्ति[10]साक्षात्त्वान्नेतिवृत्तकम्[11] ।
मन्यस्या[12]न्न्यवर्मितेर्नं चात्रातिशयोक्तिता ॥
न पर वर्तमानार्थ[13]धर्म प्रत्यक्षतेष्यते ।
प्रतिपत्त्रनपे[14]क्षाया प्रत्यक्षत्वपरिक्षयात्[15] ॥
प्रत्यक्षत्वे च[16] सामग्री भावना[17]द्भुतवस्तुजा ।
प्रत्यक्षत्व न सभाव्यमिह नोत्प्रेक्षणए तत ॥
मलिङ्ग[18]लिङ्गिभावाच्च काव्यलिङ्ग न चेष्यते ।
ताटस्थ्यात्[19]स्फुटसवित्ते न तदा रसवद्भ्रम ॥
पश्चात्साधारणीभावे रसवास्तन्निमित्तक[20] ।
स्फुटत्वान्न स्वभावोक्तिर्लोको[21]त्तीर्णस्य वस्तुन[22] ॥
स्वभावोक्ते रसवतो भेदस्सवाद[ ]दत ।
न प्रसादगुणश्चैतदस गादौतरकालिकम्[23] ॥
वास्तवेऽपि [24]हि सौन्दर्ये योग्यत्वादस्य सम्भव ।
चिरन्तनानुरोधात्तु तथा व्यक्त न कीर्तितम् ॥
भाविके[25]वृद्धिसवादो मया[26]स्याद्यदि[27] कस्यचित् ।
व्याख्याशिल[28]स्य निकष[29] [30]स मे धीमान्भविष्यति ॥

उदात्ताय[31] सूत्रम्—समृद्धि[32]मद्वस्तुवर्णनमुदात्तम् । समृद्धिमतो वस्तुन कविप्रति

---

1 A C तीत्या वै 2 D E. F H I अल्पक 3 A's alt. इत्यादिभि 4 C E. यद्यपि 5 C मयापि 6 F. लक्षणमुक्त 7 A F सद्भाव C यद्भाव 8 A वेशनाच्च [9] A F न वि 10 A. C भ्रान्ति 11 A वृत्त 12 F यत्रान 13 A. मानाकथ 14 A C त्राया 15 A त्राया C E क्षया 16 A B C स्वसाम 17 C भावनाभूत 18 C लिङ्ग 19 [E] G omit स 20 A C E. निमित्तत 21 A C उक्ति नास्य 22 A B C वस्तुत 23 A कालिका C कालिक 24 A B C च 25 A C द्विर्द्विस 26 A न स्यादितिक A's alt मया सन्यस्य क 27 C यस्य 28 A C. रव्यशीलस्य 29 A C निष्कर्ष 30 A सधामान्माम C F स धीमान् मे 31 A. C दात्तस् 32 A C ऋद्धवस्तु E. ऋद्धिमतोव H ऋद्धिवस्तु

स्वभावोक्तौ भाविके च यथास्थितवस्तुवर्णनम्। तद्विपक्षत्वेनारोपितवस्तुवर्णनात्मन उदात्तस्यावसरः। तत्रासंभाव्यमानभूतियुक्तस्य वस्तुनो वर्णनं कविप्रतिभोत्थापितमैश्वर्यलक्षितमुदात्तम्। यथा—

मुक्ताः केलिविसूत्रहारगलिताः संमार्जनीभिः कृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम्॥

अङ्गभूतमहापुरुषचरितञ्च ॥८१॥

उदात्तशब्दसाम्यादिहाभिधानम्। महापुरुषाणामुदात्तचरितानामङ्गिभूतवस्त्वन्तराङ्गभावेनोपनिबध्यमानं चरितं चोदात्तम्। महापुरुषचरितस्योदात्तत्वात्। यथा—

तदिदमरण्यं यस्मिन्दशरथवचनानुपालनव्यसनी।
निवसन्बाहुसहायश्चकार रक्षःक्षयं रामः॥

अत्रारण्ये वर्णनीये रामचरितमङ्गत्वेन वर्णितम्।

---

भोत्थापितैश्वर्य[1]वर्णनमुदात्तालङ्कारः। ससङ्गतिकं व्याचष्टे—स्वभावोक्तावित्यादिना[2]। यथावस्थितत्व[3] लौकिकत्वम्। आरोपितत्वं कविकल्पितत्वम्। अव (सर[4]) प्राप्तिः। ऐश्वर्यलक्षितमिति लक्ष्यपदनिरुक्तिः[5]।

मुक्ता केलीति— विसूत्रता[6] छिन्नसूत्रता। समार्जनीभिः [7]प्राङ्गणसीम्नि कृता [8]यत्कर्षन्तीति वाक्यार्थ[9]परामर्शः। यदेतत्कर्षणं तत्त्यागलीलायितमित्यर्थः।

उदात्तं तु समृद्धस्य वस्तुनः कविवर्णनम्[10]।

उदात्तान्तराय सूत्रम्—अङ्गभूतमहापुरुषचरितञ्च। पूर्वमैश्वर्ययोगः उदात्तत्वम्। इह पुनश्चरितस्य उदात्तत्वम्[11]। अतश्शब्दसाम्यात्सङ्गतिः[12]। तदेतदाह—उदात्तशब्देत्यादि।

[13]तदिदमिति—अत्रारण्यं तद्वृत्तान्तं [14]धातादङ्गी, यद्वृत्तान्तं पातान् रामचरितमङ्गम्। तदेतदाह—[15]अत्रारण्य इति। अस्य चेह कीर्तनं दर्शनान्तरानुसारेण। [16]ध्वनिदर्शने तु द्वितीयोदात्तविषये रसवदादय एव। विवेचयिष्यते[17] चैतत्।

---

1 A C H यंवद्व वस्तुवर्णं 2 E G omit ना 3 A C E F स्थितस्य 4 All mss अवतार 5 H उक्ति उदात्तं तु 6 A C सूत्रिता स 7 C अङ्गण 8 C य कर्ष 9 A C अर्थ 10 H वर्णनं विभावादिभि (P 213) 11 E F G उदारत्व 12 C सन्ति 13 A C omit तद् 14 A वृत्तान्तान्त C वृत्तात 15 A. C F तत्र 16 A C F स्वदर्श 17 Except Other mss A F G विष्यति

तदाभासो रसाभासो भावाभासश्च । आभासत्वमविषयप्रवृत्त्यानौचित्यात् । तत्प्रशम उक्तप्रकाराणां निवर्तमानत्वेन प्रशाम्यदवस्था । तत्रापि रसस्य परं विश्रान्तिरूपत्वात्सा न सम्भवतीति परिशिष्टभेदविषयो द्रष्टव्य. । एषामुपनिबन्धे क्रमेण रसवदादयोऽलङ्कारा । रसो विद्यते यत्र निबन्धने व्यापारात्मनि, तद्रसवत् । प्रियतर प्रेयो निबन्धनमेव द्रष्टव्यम् । एवमूर्जो बल विद्यते यत्र, तदपि निबन्धनमेव । अनौचित्यप्रवृत्तत्वाच्च तत्र बलयोग । समाहितः परिहारः । स च प्रकृतत्वादुक्तभेदविषय प्रशमापरपर्याय. । तत्र

---

व्यञ्जने व्यभिचार्यन्तराभावो[1]व्यञ्जित । विभावानुभावाभ्या व्यञ्जितो[2] व्यभिचारि वाक्यार्थीभावदशाया भाव उच्यत । सोऽपि त्रयस्त्रिंशद्भेद[3] निर्वेदग्लान्यादिरूपतया । तथा कान्ता[4]व्यतिरिक्ते देवतादिविषये व्यञ्जितो रत्यादिरपि भाव । तस्माद्व्यभिचारि-स्थाय्यात्मकतया भावो द्विजातिकोऽवगन्तव्य । यदाह—

रतिर्देवादिविषया व्यभिचारी तथाञ्जित ।

भाव[5] प्रोक्त ··············· ···· ॥

आभासयोस्स्वरूपमाह—तदाभासो रसेत्यादि । तच्छब्देन रसभावप्रत्यवमर्श । आभासीभावस्तु अविषयप्रवृत्त्यानौचित्यात्[6] । भावप्रशमस्वरूपमाह—तत्प्रशम उक्तेत्यादि । उक्त[7]भावप्रकाराणा निवृत्तौ प्रयास्यदवस्था भावप्रशम उच्यते । ननु[8] रसेऽपि प्रशम किं नोच्यते इत्यत आह—तत्रापीत्यादि । रसस्य हि अखण्डनिरन्तरायप्रतीति[9]चर्वणीयस्य परमविश्रान्तिरूपत्वात् मध्य प्रयास्य[10]दवस्था दुर्लभेति[11] रसव्यतिरिक्तपरिशिष्टभेद-विषयोऽस्य[12] प्रशमो द्रष्टव्य । एषा च रसभावादीनामुपनिबन्धे परिपाट्या रसवदादयो-ऽलङ्कारा ।

चत्वार्यपि लक्ष्यपदानि निर्वक्ति—रसो विद्यत इत्यादिना । यत्र[13] हि व्यञ्जनो-पस्कृतऽभिधादिव्यापारा[14]त्मनि निबन्धे रसोऽस्ति [15]तद्रसवत्[16] । प्रियतरनिबन्धनमेव प्रेयो ज्ञेयम् । ऊर्जो बल तद्यो[17]गिनिबन्धनमेव ऊर्जस्वि[18] । ननु निबन्धने बल नाम किमित्यत आह—अनौचित्येति । रसस्यानौचित्येन प्रवृत्तत्वात् दौर्बल्यम् । [19]निबन्धने तु तदुपकृते[20] बलयोग[21] । समाहित परिहार । कस्य ? प्रकृतत्वादुक्तस्य भावभेदस्य यस्य प्रशम इत्यपि[22] पर्याय ।

ननु रसवदादिना द्वितीयोदात्तस्य च[23]का कथ्यतेत आह—तत्र यस्मिन्नित्यादि ।

---

1. E द्योतित 2 A C G ञ्जित इति व्य 3 A भेद भावप्रशमस्वरूप 4 F. कान्त्या 5 E भाव इति आ 6 E F G चित्याभ्या भाव 7 C उक्त 8 A C. F G न तु 9 C चर्वणीय 10 C दवस्था 11 A लभ्या भवतीति रस C लभ्या भवतीति र 12 E यत् 13 A C यदभिध्य 14 A C पार निय 15 C तत्र 16 A C रसवदन 17 A C योग 18 A स्विन् 19 A C तत्रिव 20 A C कृति 21 A. C योगस्य ईयस्य प्रशम 22. A. अपि 23 omitted in A

यस्मिन्दर्शने वाक्यार्थीभूता रसादयो रसवदाद्यलङ्काराः, तत्राङ्गभूतरसादि-विषये द्वितीय उदात्तालङ्कारः। यन्मते त्वङ्गभूते रसादिविषये रसवदाद्य-लङ्काराः अन्यस्य रसादिध्वनिना व्याप्तत्वात्तत्रोदात्तालङ्कारस्य विषयो नावशिष्यते, तद्विषयस्य रसवदादिना व्याप्तत्वात्। तत्र रसवत उदाहरणम्—

> किं हास्येन न मे प्रयास्यसि पुनः प्राप्तश्चिराद्दर्शनं
> केयं निष्करुण! प्रवासरुचिता केनासि दूरीकृतः।
> स्वप्नान्तेष्विति यो वदन्प्रियतमव्यासक्तकण्ठग्रहो
> बुद्ध्वा रोदिति रिक्तबाहुवलयस्तारं रिपुस्त्रीजनः॥

---

यत्र हि[1] भामहादिदर्शने वाक्यार्थीभावात् प्रधानभूता एव रसादयो रसवदाद्यलङ्काराः तत्र अङ्ग[2]भूतरसादिविषय उपपद्यते। *कल्पो[3] (?) द्वितीय उदात्तालङ्कार.। यस्मिंस्तु[4] रसवदादिरलङ्कारो अङ्गभूतरसादिविषय[5] एव अङ्गिनस्तु रसादेरलङ्कार्यभावापन्न[6]स्य रसभावादिध्वनिरूपतया व्याप्तत्वात् तत्र एव निदर्शने द्वितीयस्याङ्गभूतमहापुरुषचरित-लक्षणस्योदात्तालङ्कारस्य विषयो नावशिष्यते। कुत इत्यत आह—तद्विषयस्येति।

इयमिह प्रक्रिया। यत्र[7] रसादयो वाक्या(र्थी[8])भूता. तत्र रसवदादयोऽल-ङ्कारा इत्यलङ्कारमात्ररसिकाना भामहादीना दर्शने। यदा तु [9]अवाक्यार्थीभावादङ्गभूतो रसादिः, तदाङ्गभूतमहापुरुषचरितलक्षणो द्वितीय उदात्त उपपद्यते नाम। ध्वनिदर्शने तु [10]काव्यात्मनो रसादे. प्राधान्यदशाया[11] अलङ्कार्यत्वादलङ्कारभावानुपपत्तौ अङ्गभूता[12] रसादयो रसवदाद्यलङ्कारा [13]। तथा च सति रसभावादिनायकमहापुरुषचरिताविर्भावोऽपि रसभावाद्यङ्गभावानतिरेकी[14] व्यङ्ग्यव्यञ्जकसम्बन्धात्। व्यञ्जक हि महापुरुषचरितम्[15]। व्यङ्ग्य[16] रसभावादि[17]। व्यङ्ग्यभावा[18]विनाभूताङ्गभाव रसवदलङ्कारस्यैव विषय.[19]। व्यञ्जकमात्र विश्रान्ताना अनवगाढधिया द्वितीयोदात्तभ्रम इति।

किं हास्येनेति—स्वप्नदृष्ट नायक स्वरूप[20]सन्दर्शननिह्नवपरिहासप्रवृत्त[21] मन्य[22]मा-नस्य रिपुस्त्रीजनस्योक्तिवर्णनम्। किं हास्येन चिरात्प्राप्तस्सन् पुनर्मे दर्शन न प्रयास्यसि? निष्करुणता[23] [24]तवेय प्राप्तिसमकालमेव प्रवासरुचिता इत्युदीरय[25]न्नेव तमद्दृष्ट्वा "केनासि

---

1. Omitted in A. C. 2 A's alt C अनन्तर संभूत 3. A. C. अल्पद्वि 4. A C. तु विषये रस 5. A. C. E. G विषये अ 6 C. अपह्नस्य 7. A. C. यद्रसा 8 All mss read वाक्यार्थं 9. Omitted in A. C. 10. A's alt. भाव्या 11 C दशायां व्यञ्जकमहापुरुष 12 A C F. भूत 13 A. काराः व्यञ्जकमहापुरुष 14 Except F. all read अनतिरेके 15 A C. चरितव्य 16. A. C. ङ्गयरस 17 All mss read भावाद्व्यङ्ग्य 18 A C. G. भावोऽपि नाभूता 19 A. C. F G. विषयव्य 20. A's alt. दर्शनीयपरि 21. A. F. वृत्त C. वृति 22. C. मन्यरिपु 23. A. C. कर्णा A's alt. करुणाका 24 A. तवह प्राप्ता संप्राप्ति स C तवेह प्राप्तिसम 25. A's alt. यन्ते

* This word seems to be superfluous.

एतन्मतद्वयेऽप्युदाहरणम्। अत्र वाक्यार्थीभूतः करुणो रसः। अङ्गभूतस्तु विप्रलम्भशृङ्गारः। एवं रसान्तरेष्वप्युदाहार्यम्। प्रेयोऽलङ्कारादौ विशेषमनपेक्ष्योदाह्रियते। प्रेयोऽलङ्कारो यथा—

> गाढालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
> सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
> मा मा मानद माति मामलमिति क्षामाक्षरोल्लापिनी
> सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्॥

अत्र नायिकाया हर्षाख्यो व्यभिचारिभावः। यथा वा—

> तद्वक्त्रामृतपानदुर्ललितया दृष्ट्या क्व विश्रम्यतां
> तद्वाक्यश्रवणाभियोगपरयोः श्राव्यं कुतः श्रोत्रयोः।
> एभिस्तत्परिरम्भनिर्भरभरैरङ्गैः कथं स्थीयतां
> कष्टं तद्विरहेण संप्रति वयं कृच्छ्रामवस्थां गताः॥

---

दूरीकृत." इति वदन् [1]व्यासक्तकण्ठग्रहो[2] बुद्ध्वा रिक्तबाहुवलयस्तार [3]रोदितीति। अत्राङ्गाङ्गिनौ द्वावपि रसावङ्गी रस.। रसवान् मतान्तरे। [4]स्वमते त्वङ्ग[5]भूतो रसवान्। अत उदाहरणमेतन्मतद्वया[6]र्हम्। तदेतदभिसन्धायाह—एतन्मतद्वयेऽपीति[7]। तदेतद्विभज्य दर्शयितुमाह—अत्र वाक्यार्थी[8]भूत इति। वाक्यार्थीभावा[9]त् करुणो रसवान्। मतान्तर इति शेष। अङ्गभावाद्विप्रलम्भशृङ्गारो रसवान्। अस्मन्मत इति शेष। एवंविधे हि विषये वाक्यार्थीभावात् अङ्गिन रस[10] रसवन्तमन्ये प्रतिपेदिरे। अङ्गभूत तु द्वितीयोदात्तम्। ध्वनिदर्शनविदस्तु अङ्गिनो अलङ्कार्यता[11] अङ्गभूतस्य रसवदादिरूपता[12] द्वितीयोदात्ता[13]सभव च सिद्धान्तितवन्त.। [14]इयं च प्रक्रिया रसान्तरेष्वपि ज्ञेयेत्याह—[15]एवं रसान्तरेष्विति। उदाहार्यं उदाहर्तु[16]मर्हं शक्यम्। प्राप्तकालता वोदाहरणस्य। अर्हे[17] शक्ये प्राप्तकालतायां च कृत्य। इत्थं रसवदलङ्कारे[18] मतद्वय कक्ष्याविभागेनोदाहृतम्।

प्रेयोऽलङ्कारादौ तु[19] विशेषाभावस्तु ज्ञात इति साधारण्येनोदाजिहीर्षुराह—प्रेयोऽलङ्कारादाविति। गाढा[20]लिङ्गनेति। मानद मानखण्डन[21] मामित्यर्थोऽत्या नाथायासामहर्षं. प्रत्याख्यते। लक्ष्ययोजनायाह—अत्र नायिकाया इति। हर्षाख्यो व्यभिचारि[22]भाव सम्भोगशृङ्गारप्रति [23]गुणत्वात् प्रेयोऽलङ्कार इति शेष। व्यभिचार्यन्तरायोदाहरति—तद्वक्त्रेति। अत्र चिन्तालक्षणो व्यभिचारी विप्रलम्भशृङ्गाराङ्गतया प्रेयान्। तदेत-

---

1. A C व्यावृत्त 2 C. ग्रहो 3 A. रोदिति 4. A. स्वस्यमते A's alt. C. अस्य म 5 A C. भूते 6 A. C द्वयोदाहरण त 7. A इति कदिति तद्विभ 8. A. थ्यर्थ 9. A C. E F. भावत् 10 Omitted in A 11. A C कार्यतया 12. A C F. रूपत्वाद 13. A's alt. C. दात्तसं 14 A's alt C. इत्थं 15. Omitted in A 16 A हर्तु मस्य 17. C. अर्हो 18 A. कारम C. कार. तद्द्वयं 19 A C. न 20. F. गाढेति 21 A. C. खण्डन 22. A C F चारी 23 E गुणत्वा

अत्र चिन्ताख्यो व्यभिचारिभावः। एष एव च भावालङ्कारः। भावस्य चात्र स्थितिरूपतया वर्तनम्। शान्त्युदयावस्थे तु वक्ष्येते। ऊर्जस्वी यथा—

दूराकर्षणमोहमन्त्र इव मे तन्नाम्नि याते श्रुतिं
चेतः कालकलामपि प्रकुरुते नावस्थितिं तां विना।
एतैराकुलितस्य विक्षततरैरङ्गैरनङ्गातुरैः
संपद्येत कदा तदाप्तिसुखमित्येतन्न वेद्मि स्फुटम्॥

अत्र रावणस्याभिलाषको विप्रलम्भशृङ्गार औत्सुक्यं च व्यभिचारिभावोऽनौचित्येन प्रवृत्तौ। समाहितं यथा—

अक्ष्णोः स्फुटाश्रुकलुषोऽरुणिमा विलीनः
शान्तं च सार्धमधरस्फुरणं भ्रुकुट्या।
भावान्तरस्य तव चण्डि! गतोऽपि रोषो
नोद्गाढवासनतया प्रसरं ददाति॥

---

दाह—अत्र चिन्ताख्य[1] इति। अलङ्कारान्तरभ्रमो मा भूदिति पर्याय[2]मस्याह—एष एव चेति। प्रेयान्[3] 'भावालङ्कारश्चेति पर्यायौ। भावशान्त्यु[4]दयादिभ्योऽस्य भेदमाह—भावस्य चात्रेति। स्थितिरूपतया[5] भावालङ्कारः। 'शान्त्युदयाद्यवस्था तु पृथगलङ्कारा इति भावः। कौ तौ शान्त्युदयाविति अत आह—शान्त्युदयेति। शान्त्यवस्था ऊर्जस्वी[6] तदनन्तरं
समाहि[illegible]

अत्र कोपस्य प्रशम.। एवमन्यत्राप्युदाहार्यम्।

भावोदयसन्धिशबलताश्च पृथगलङ्काराः ॥८३॥

भावस्याङ्कुररूपस्योदय उद्गमावस्था, सन्धिर्द्वयोर्विरुद्धयो स्पर्धित्वेनोपनिबन्ध·, शबलता च बहूना पूर्वपूर्वोपमर्देनोपनिबन्ध । एते च पृथग्रसवदादिभ्यो भिन्नालङ्काराः। एतत्प्रतिपादनं चोद्भटादिभिरेषा पृथगलङ्कारत्वेन निर्दिष्टत्वात्। अथ च सङ्करसंसृष्टिवैलक्षण्येनैते सर्वालङ्कारा पृथक्केवलत्वेनालङ्कारा इति सर्वालङ्कारशेषत्वेनोक्तम्। संसृष्टिसङ्करयोर्हि सम्पृक्ततयालङ्काराणा स्थितिस्तद्वैलक्षण्यप्रतिपादनमेतत्। तत्र भावोदयो यथा—

एकस्मिञ्छयने विपक्षरमणीनामग्रहे मुग्धया<br>
सद्य. कोपपरिग्रहग्लपितया चाटूनि कुर्वन्नपि।<br>
आवेगादवधीरित प्रियतमस्तूष्णीं स्थितस्तत्क्षण<br>
मा भूत्सुप्त इवेत्यमन्दवलितग्रीव पुनर्वीक्षितः॥

---

प्रशाम्य[1]दवस्था कोपस्ये[2]त्याह—अत्र कोपस्येति। इत्य व्यभिचार्यन्तरेऽपि प्रशमो ज्ञय इत्याह—एवमन्यत्रापीति[3]।

रसभावगुणीभावादनौचित्यप्रवृत्तित[4]।<br>
रसवत्प्रेयऊर्जस्वि[5]समाहितचतुष्टयम्॥<br>
रस[6]वत्त्वप्रियत्वाभ्याम् ऊर्जं [7]प्रशमयोगत।<br>
निबन्धन रसवदाद्याख्या[8] सम्प्रतिपद्यते॥

भावोदयाद्यर्थ[9] सूत्रम्—भावोदयसन्धिशबलताश्च[10] पृथगलङ्कारा। उक्तसर्वालङ्काराप[11]त्वात् सर्वालङ्कारशेषतय[12]तत् [13]त्रयोक्ति। पृथग्र[14]सवदादि[15]विविक्तविषयतमेत्यर्थं। व्याचष्टे—भावस्या[16]ङ्कुररूपेत्यादि[17]। मकुररूपस्यो[18]द्गमदशोदय। विरुद्धयो तुल्यकक्ष्यतया विनिवेशन सन्धि। पूर्वपूर्वोपमर्देन बहूना[19]मुत्तरोत्तरनिबन्धश्शबलता। पृथक्प्रतिपादने हेतुमाह—[20]एतत्प्रतिपादन चेति[21]। केवलालङ्कारत्वात्संसृष्टिसकरवैलक्षण्यम्। तयो सम्पृक्तत्व स्वरूपमित्याह—संसृष्टिसकरयोर्हीति।

एकस्मि[22]न्निति—विपक्षनामग्रहण[23] [24]ग्लपितत्वे, ग्लपितत्वमावेगे[25], प्रावगोऽव-

---

1 A C F शाम्यदवस्थस्य इत्याह 2 E पस्याह 3 A's alt इति वागुरा रस 4 A प्रवर्तित 5 A स्विन् 6 A C मप्रियतराभ्यां 7 A's alt नन्दप्रशम 8 A C ख्यात्या 9 A C दयार्थं 10 A ताश्च C H ता इ 11 E G कारत्वात् 12 A यैव तन्त्रयोक्ति 13 E G त्रितयापि 14 A सरसादि 15 C विविक्ता 16 A's alt C H ङ्कररूपे 17 H त्यादि मकर 18 A स्योग्निम F स्योद्गमद 19 A C F मायाना 20 A C मा तत्र 21 C चेत्यादि 22 E F G स्मिन् शयन इति 23 G हरणादपि तथा भावस्तु 24 Except A C all read गृहीतश्च 25 A आवेगा यदि रोषे अवधीरया प्रियतमे रहित भावे तूष्णींभावस्तु

अत्र औत्सुक्यस्योदय.। भावसंधिर्यथा—

वामेन नारीनयनाश्रुधारा कृपाणधारामथ दक्षिणेन।
उत्पुंसयन्नेकतरः करेण कर्तव्यमूढः सुभटो बभूव॥

अत्र स्नेहाख्यरतिभावरणौत्सुक्ययो संधि॰। भावशबलता यथा—

क्वाकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय न. श्रुतमहो कोपेऽपि कान्तं मुखम्।
किं वक्ष्यन्त्यपकल्मषा॰ कृतधिय स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधर पास्यति॥

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्ताना शबलता। तदेते चित्तवृत्तिगतत्वेनालङ्कारा दर्शिता.। अधुनैषा सर्वेषामलङ्काराणा संश्लेष-

---

धीरणे, अवधीरण प्रियतमतूष्णीभावे, तूष्णी[1]भावस्तु पुनर्वीक्षणे हेतु। अत्रौत्सुक्य भावस्योदय तस्य च[2] गुणभाव इह विवक्षणीय।

वामेन नारीति। वामेन करेण[3] प्रियतमाया नयनाश्रुधारा दक्षिणेन कृपाणधारा प्रमार्जयन् कर्तव्यमूढोऽभू[4]दित्यर्थं। [5]अत्र रतिभावरणौत्सुक्ययो सन्धि। तदेतदाह—अत्र स्नेहाख्य इति। स्नेह[6]ग्रहणाद्दते शृङ्गारस्थायिता[7]माह भाविस्थायित्वे (भाव, अस्थायित्वे ?) तु [8]रति प्रीतिमात्रम्।

क्वाकार्यमिति[9]। अत्र क्वाकार्यं क्व च शशलक्ष्मण कुलमिति वितर्क। भूयोऽपि[10] दृश्येत[11] सा इति औत्सुक्यम्। श्रुत दोषप्रशमायेति मति। अहो कोपेऽपि मुख कान्त-मिति स्मृति। किं वक्ष्यन्त्य[12]पकल्मषा इति शङ्का। स्वप्नेऽपि दुर्लभेति दैन्यम्। चेत स्वास्थ्य [13]उपेहीति धृति। को धन्योऽधर पास्यतीति चिन्ता। अत्रो[14]त्तरोत्तरेषा पूर्व-पूर्वोपमर्दैन अवस्थानात् शबलता। तदेतदाह—अत्र [15]वितर्केत्यादि[16]। तानि[17]माभिगम-यति—सर्वे[त[18]] इत्यादि[19]।

स्थितिप्रशम[20]वद्भाव[21]स्योदयस्सन्धिरेव च[22]।
शाबल्य च[23] गुणीभावे पृथक्पृथगलंक्रिया[24]॥

सङ्करसृष्टी [25]प्रतुप्रद्युराह—अधुना एषामिति[26]। संश्लेषस्सम्बन्ध। तस्य

---

1 C भव 2 Omitted in A C. 3 E करणे 4 A C F अभवन् 5 A C E G. इत्यत्र रति 6 A गुणाष्टते 7 A C स्थायित्तमाह 8 A इति C तुरीति 9 A C E. इति क्व 10 A C अपीति 11 C इयतेर्यामु E. G त मर्या 12 A वक्ष्यन्त्य 13 E. G उपेहि 14 E. उत्तरोत्तरा 15 A's alt C वितर्के 16 A C आदिना 17 A C निगमा 18 All read. एतद्रिया 19 A's alt आदिना 20 E. G omit म 21 A भाव उद् C. वत् मोदय द्विगुंण च 22 Omitted in E. 23 E. G H तु 24 E. G क्रिया 25 A's alt प्रतिष्ठाराह C. प्रतिष्ठेराह 26 F इति अनुष्कटत्ने

समुत्थापितमलङ्कारद्वयमुच्यते । तत्र संश्लेषः संयोगन्यायेन समवायन्यायेन च द्विविधः । संयोगन्यायो यत्र भेदस्योत्कटतया स्थितिः । समवायन्यायो यत्र तस्यैवानुत्कटत्वेन वर्तनम् । तत्रोत्कटत्वेन स्थितौ तिलतण्डुलन्यायः । इतरत्र तु क्षीरनीरसादृश्यम् । क्रमेणैतदुच्यते—

एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टिः ॥८४॥

उक्तालङ्काराणां यथासंभवं यदि क्वचित्संघटना स्यात् तदा ते किं पृथक्त्व एव पर्यवसिताः, उत तदलङ्कारान्तरमेव किञ्चिदिति विचार्यते । तत्र यथा बाह्यालङ्काराणां सौवर्णमणिमयप्रभृतीनां पृथक्चारुत्वहेतुत्वेऽपि संघटनाकृतं चारुत्वान्तरं जायते, तद्वत् प्रकृतालङ्कारान्तराणामपि संयोजने चारुत्वान्तरमुपलभ्यते । तेनालङ्कारान्तरप्रादुर्भावो न पृथक्पर्यवसानमिति निर्णयः । अलङ्कारान्तरत्वेऽपि च संयोगन्यायेन स्फुटावगमो भेद, समवायन्यायेन वास्फुटावगम इति द्वयम् । पूर्वत्र संसृष्टिरुत्तरत्र तु सङ्करः । अत एव तिलतण्डुलन्यायः क्षीरनीरन्यायश्च तयोर्यथार्थतामवगमयतः । तत्र तिलतण्डुलन्यायेन भवन्ती संसृष्टिस्त्रिधा । शब्दालङ्कारगतत्वेन, अर्थालङ्कारगतत्वेन,

---

द्वैविध्यमाह—तत्र[1] संश्लेष इत्यादि[2] । भेदकोटेरुत्कटतायां संयोगन्याय अनुत्कटत्वे तु समवायन्यायः । दृष्टान्तेन[3] न्यायभेदमवस्थापयति[4]—तिलतण्डुलन्याय क्षीरनीरसादृश्यमिति च । उभयमपि[5] परिपाट्या सूत्रयितुमाह—[6]क्रमेणेति । एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टि । व्याचष्टे—उक्तालङ्काराणामित्यादि[7] । य[8] एते अनुप्रासादयो [9]भावशबल[10]तान्ता [11] पृथगुक्ता तेषां संभवानुसारेण यदि कुत्रचिद् विषये सहभाव तदैते किं पृथक्पृथगेवालङ्कारा उत सहभाववैचित्र्यमलङ्कारान्तरमेवेति[12] चिन्तायां[13] सिद्धान्तयितुमाह—तत्र यथेत्यादि । सौवर्ण[14]मणिमयानां[15] पृथक् चारुत्वहेतुत्वेऽपि संश्लेषतो यथा चारुत्वान्तरं तथा[16]नुप्रासादीनां [17]अप्यलङ्कारान्तरमेव । संश्लेषेऽपि भेदास्फुटत्वास्फुटत्वाभ्यां विच्छित्तिद्वयमाह—अलङ्कारान्तरत्वे[18] चेति । तत्र[19]सङ्करसंसृष्टी व्यवस्थापयति—पूर्वत्रेत्यादि । यतो[20] भेद उत्कटोऽनुत्कटश्च अतो दृष्टान्तौ सम[21]-ञ्जसाविरयाह—अत एवे[22]त्यादि । उत्कटा[23]नुत्कटत्वे भेदस्य यथार्थता ।

संसृष्टिस्त्रिधेत्याह—तत्र[24] तिलतण्डुलेत्यादि । सङ्कर [25]सप्रभेद जिज्ञासितोऽपि

---

1. A C अत्र 2 H श्वादि कोटे 3 A C न्ते तन्न्याय 4 F यति क्षीरनीरन्याय तिल 5. H अपि सूत्र C अपि पाट्यौ सू 6 A एषा क्र 7 H इति 8 A's alt omits य 9 C भावा 10 A's alt लान्ता 11 E तान्तादपृथ 12. A एव वेति चि C एव चेति चि 13 E चिन्ता सिद्धान्ति तदितु 14 E G वर्णानां मणि 15 G यानां वा 16 A C F तथा प्रासा 17 C अपि इत्यल 18 C त्वेऽपि चेति 19 Omitted in H 20 F स्वतो 21 A C समरसा 22 F. एव चेत्या 23 A F. कटत्वे 24 A C अत्र 25 E G सप्रभेद

उभयालङ्कारत्वेन च। सङ्करस्तु प्रभेदयुक्तो वक्ष्यते। तत्र शब्दालङ्कार-संसृष्टिर्यथा—

कुसुमसौरभलोभपरिभ्रमद्भ्रमरसंभ्रमसंभृतशोभया।
चलितया विदधे कलमेखलाकलकलोऽलकलोलदृशान्यया॥

अत्रानुप्रासयमकयोर्विजातीययोः संसृष्टिः। अत्रैव "लकलोलकलो" इति, तथा "कलोलकलोल" इति सजातीययोर्यमकयोः संसृष्टिः। अर्थालङ्कार-संसृष्टिर्यथा—

देवि! क्षपा गलति चक्षुरमन्दतार-
मुन्मीलयाशु नलिनीव समृङ्गमब्जम्।
एष त्वदाननरुचेव विलुण्ठ्यमानः
पश्याम्बरं त्यजति निष्प्रतिभः शशाङ्कः॥

अत्र सजातीययोरुपमयोः संसृष्टिः।

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥

अत्रोपमोत्प्रेक्षयोर्विजातीययोः संसृष्टिः। उभयसंसृष्टिर्यथा—

आनन्दमन्थरपुरन्दरमुक्तमाल्यं
मौलौ हठेन निहितं महिषासुरस्य।
पादाम्बुजं भवतु मे विजयाय मञ्जु-
मञ्जीरशिञ्जितमनोहरमम्बिकायाः॥

अत्रोपमानुप्रासयोः संसृष्टिः। पादाम्बुजमित्यत्र ह्युपमाया मञ्जीर-

---

मसृष्टयनन्तरं वक्ष्यत इत्याह—सङ्करस्त्वति। कुसुम[1]सौरभेति[2]। असवर्ण्यांकुलं. लोल-दृशा। अत्र पूर्वार्धे [3]भकारापेक्षया उत्तरार्धे च लकारापेक्षया वृत्त्यनुप्रास[4]। लकलो-लकलो इत्यादौ यमकमिति विजातीययोस्संसृष्टिः। तथा लकलोलकलो इति कलोल-कलोल[5] इति च सजातीय[6]यमकयोरपि। तदेतदाह—अत्रानुप्रासेत्यादि।

देवि क्षपेति। अत्र नलिनीव रुचेवेति उपमाद्वय संसृष्टम्। तदेतदाह—अत्र सजातीययोरिति। लिम्पतीवेत्यत्र[7] तु विजातीयसंसृष्टिः स्फुटा।

आनन्दमन्थरेति। [8]मन्थरो मन्दक्रिय। हठेन[9] बलेन[10]। अत्रोपमावृत्त्यनुप्रासयो. उभया[11]लङ्कारयो संसृष्टि[12]। नन्वत्रोपमाप्यनन्यापृथ इत्यत आह—पादाम्बुजमिति[13]। [14]पादाम्बुजमित्येषूपमाया[15] मञ्जीरशिञ्जित[16]योगो व्यवस्थापक। पाद[17] एवाम्बुजमिति

---

1 A's alt चद्नर्मा 2. H इति पादावृत्ति 3 A's alt. चकारमरे 4 A's alt. C ग्रामादप्रकाल इत्या 5 A कोले 6 E.G. तीययोः यम 7. A C. वेत्यत्र 8. C मन्द 9 A's alt. हायग 10 F. लेन मर्जात 11 A. C. F मयो॰ म 12 Omitted in A C. F 13. E.G इमेति 14 A C. पादमम्बु 15 A. C omit या 16. A's alt शिञ्जिताला 17. A C. F. पादमेवा

समुत्थापितमलङ्कारद्वयमुच्यते। तत्र संश्लेषः संयोगन्यायेन समवायन्यायेन च द्विविधः। संयोगन्यायो यत्र भेदस्योत्कटतया स्थितिः। समवायन्यायो यत्र तस्यैवानुत्कटत्वेन वर्तनम्। तत्रोत्कटत्वेन स्थितौ तिलतण्डुलन्यायः। इतरत्र तु क्षीरनीरसादृश्यम्। क्रमेणैतदुच्यते—

एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टिः ॥८४॥

उक्तालङ्काराणां यथासंभवं यदि क्वचित्सङ्घटना स्यात् तदा ते किं पृथक्त्व एव पर्यवसिताः, उत तदलङ्कारान्तरमेव किञ्चिदिति विचार्यते। तत्र यथा बाह्यालङ्काराणां सौवर्णमणिमयप्रभृतीनां पृथक्चारुत्वहेतुत्वेऽपि सङ्घटनाकृतं चारुत्वान्तरं जायते, तद्वत् प्रकृतालङ्कारान्तराणामपि संयोजने चारुत्वान्तरमुपलभ्यते। तेनालङ्कारान्तरप्रादुर्भावो न पृथक्पर्यवसानमिति निर्णयः। अलङ्कारान्तरत्वेऽपि च संयोगन्यायेन स्फुटावगमो भेदः, समवायन्यायेन त्वस्फुटावगम इति द्वैधम्। पूर्वत्र संसृष्टिरुत्तरत्र तु सङ्करः। अत एव तिलतण्डुलन्यायः क्षीरनीरन्यायश्च तयोर्यथार्थतामवगमयतः। तत्र तिलतण्डुलन्यायेन भवन्ती संसृष्टिस्त्रिधा। शब्दालङ्कारगतत्वेन, अर्थालङ्कारगतत्वेन,

---

द्वैविध्यमाह—तत्र[1] संश्लेष इत्यादि[2]। भेदकोटेरुत्कटतायां संयोगन्यायः अनुत्कटत्वे तु समवायन्यायः। दृष्टान्तेन[3] न्यायभेदमवस्थापयति[4]—तिलतण्डुलन्यायः क्षीरनीरसादृश्यमिति च। उभयमपि[5] परिपाट्या सूत्रयितुमाह—[6]क्रमेणेति। एषां तिलतण्डुलन्यायेन मिश्रत्वे संसृष्टिः। व्याचष्टे—उक्तालङ्काराणामित्यादि[7]। य[8] एते अनुप्रासादयो [9]भावशबल[10]तान्ता[11] पृथगुक्ता तेषां संभवानुसारेण यदि कुत्रचित् विषये सहभावः तदैते किं पृथक्पृथगेवालङ्काराः उत सहभाववैचित्र्यमलङ्कारान्तरमेवेति[12] चिन्तायां[13] सिद्धान्तयितुमाह—तत्र यथेत्यादि। सौवर्ण[14]मणिमयानां[15] पृथक् चारुत्वहेतुत्वेऽपि संश्लेषतो यथा चारुत्वान्तरं तथा[16]नुप्रासादीनां[17]मप्यलङ्कारान्तरमेव। संश्लेषेऽपि भेदावगमस्फुटत्वास्फुटत्वाभ्यां विच्छित्तिद्वयमाह—अलङ्कारान्तरत्वे[18] चेति। तत्र[19]सङ्करसंसृष्टी व्यवस्थापयति—पूर्वत्रेत्यादि। यतो[20] भेद उत्कटोऽनुत्कटश्च अतो दृष्टान्तौ सम[21]-ञ्जसावित्याह—अत एवे[22]त्यादि। उत्कटा[23]नुत्कटत्वे भेदस्य यथार्थता।

संसृष्टिस्त्रिधेत्याह—तत्र[24] तिलतण्डुलेत्यादि। सङ्करः [25]सप्रभेदः जिज्ञासितोऽपि

---

1 A C अत्र 2 H आदि कोटे 3 A C न्ते तन्न्याय 4 F यति क्षीरनीरन्याय तिल 5 H अपि सूत्र C अपि पाट्यौ सू 6 A एषा क्र 7 H इति 8 A's alt omits य 9 C भावा 10 A's alt लान्ता 11 E तान्तादपृथ 12 A एव वेति चि C एव चेति चि 13 E चिन्ता सिद्धान्ति तदितु 14 E G वर्णाना मणि 15 G याना वा 16 A C F तथा प्रासा 17 C अपि इत्यल 18 C त्वेऽपि चेति 19 Omitted in H 20 F स्वतो 21 A C समरसा 22 F एव चेत्या 23 A F. कटत्वे 24 A C अत्र 25 E G सप्रभेद

शिञ्जितयोगो व्यवस्थापकं प्रमाणम् । स हि रूपके प्रतिकूलः पारिशेष्या-दुपमा प्रसादयति । तदेवं संसृष्टिस्त्रिधा निर्णीता ।

अधुना क्षीरनीरन्यायेन सङ्कर उच्यते—

क्षीरनीरन्यायेन तु सङ्करः ॥८५॥

मिश्रत्वमेव । अनुत्कटभेदत्वमुत्कटभेदत्वं च मिश्रत्वम् । तत्रोत्कट-भेदा संसृष्टिरुक्ता । अनुत्कटभेदः सङ्करः । तत्र मिश्रत्वमङ्गाङ्गिभावेन, संशयेन, एकवाचकानुप्रवेशेन च त्रिधा भवत्सङ्करं त्रिभेदमुत्थापयति । क्रमेण यथा—

> अङ्गुलीभिरिव केशसंचयं संनिगृह्य तिमिरं मरीचिभि. ।
> कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुख शशी ॥

अत्राङ्गुलीभिरिवेत्युपमा । सैव सरोजलोचनमित्यस्या उपमायाः प्रसाधिका । रजनीमुखमिति श्लेषमूलातिशयोक्तिः । प्रारम्भवदनाख्ययो-र्मुख्ययोरभेदाध्यवसायात् । अत एव तयोरङ्गाङ्गिभावः । एवं च वाक्योक्त-समासोक्तिः । उपमाश्लेषेणानुगृहीता चातिशयोक्तिरुत्प्रेक्षाया चुम्बतीवेति प्रकाशिताया अनुग्राहिका । तद्बलेन तस्याः समुत्थानात् । सा च समुत्थापिता समुत्थापकाना चमत्कारितानिबन्धनमित्यस्त्यङ्गाङ्गिभावः । यथा वा—

---

रूपकपक्षे स प्रतिकूल मम्बुजे तदयोगात् । अतश्शिञ्जितयोगोऽत्र पारिशेष्यादुपमा[1] प्रसादयति । निगमयति[2]—तदेवमिति ।

> तिल[3]तण्डुलनीत्या सश्लेष ससृष्टिरिष्यते ।
> सा[4] शब्दार्थोभयगतैरलङ्कारैस्त्रिधा मता ॥

सङ्करम्[5] उपक्षिपति—अधुनेत्यादि । क्षीरनीरन्यायेन तु सङ्कर. । अधिकारमनु स्मारयति—मिश्रत्व[6]मेवेति । चर्चित सङ्करस्वरूपमनुवदति—अनुत्कटेति[7] । तत्र त्रैवि-ध्यामाह—[8]तच्चेति । अङ्गाङ्गिभावात् संशयादेकवाचकानुप्रवेशाच्च त्रिधा तु सङ्करो-त्थानम् ।

अङ्गुलीभिरिवेति[9] । अत्र अङ्गुलीभिरिवेत्युपमा सरोज लोचनमिवे[10]त्युपमा साधयति । रूपकापोहन साधने प्रकर्ष । मुखशब्देन प्रारम्भवदनयोरभिधानात् श्लेष । मुखयोर[11]भेदाध्यवसायात्[12] श्लेषमूलातिशयोक्ति । अतोऽनयोरङ्गाङ्गिभाव । एव च सति अङ्गुलीभिरिवेति या वाक्येनोक्ता या च सरोजलोचनम् इति समासेन ताभ्या[13]-मुपमाभ्या[14] श्लेषेण चानुगृहीता मुखम् इति अतिशयो (क्ति[15]) चुम्बतीवेत्युत्प्रेक्षाया

---

1 C E उपमा 2 A F यति तावदिति तदे 3 A E F. G तिले 4 A C च श 5 C. सङ्करोत्थानम् 6 E G मिश्रकमे 7 A. इति त्रिधा तु 8 E तत्त्वेति 9. A C F इवेत्युप 10 E इवास्येत्युपमा 11. C भेदात् 12 A F omit त् 13 F भ्या श्लेषे 14 A C उभाभ्या 15 All mss उक्ति

त्रयीमयोऽपि प्रथितो जगत्सु यद्वारुणीं प्रत्यगमद्विवस्वान् ।
मन्येऽस्तशैलात्पतितोऽत एव विवेश शुद्ध्यै वडवाग्निमध्यम् ॥

अत्र प्रथमार्धे विरोधप्रतिभोत्पत्तिहेतुः श्लेषः । दर्शनान्तरे तु विरोधश्लेषौ द्वावलङ्कारौ । तदनुगृहीता द्वितीयेऽर्धे मन्येपदप्रकाशितोत्प्रेक्षा । अतश्चाङ्गाङ्गिभावः ।

तथा ह्यत्र यत्कारणमुत्प्रेक्ष्यते तत्र विरोधश्लेषानुप्रवेशः । यच्चात्र कार्यमुत्प्रेक्षानिमित्तं, तत्र पतितत्वाग्निप्रवेशौ वस्तुस्थित्या अन्यथास्थितावपि अन्यथाभूताभ्यां ताभ्यामभेदाध्यवसितौ ज्ञेयौ । तेनात्राङ्गाङ्गिभावः सङ्करः । न च विरोधप्रतिभोत्पत्तिहेतौ श्लेषे श्लेषस्य विरोधेन सहाङ्गाङ्गिभावः सङ्करः, उत्प्रेक्षाया वा निमित्तगतातिशयोक्त्या सहायं सङ्करः, ताभ्यां विना तयोरनुत्थानात् ।

---

अनु[1]ग्राहिका । तेषां बलेन समुत्थाना[2]दुत्थिता चोत्थापकाना चमत्कारकत्वहेतुः इत्यङ्गाङ्गिता । अतोऽङ्गाङ्गिभावे मिथोऽप्युपकारप्रथना[3]योदाहरणान्तरम्—त्रयीमयोऽपीति । वारुणी पश्चिमा दिक् सुरा च[4] । पतनमवतरणमुपहतिश्च । व्याचष्टे—अत्र प्रथम इत्यादिना[5] । अत्र वारुणीति श्लेषः त्रयीमयोऽप्यगमदिति विरोधप्रतिभोत्थापक.[6] तद्बाध[7]कश्च । श्लेषस्य निरवकाशत्वा[8]दङ्गीकारिणा[9]मते द्वावपि । तदनुग्राह्य[10] "मन्ये पतित" इति शुद्धिं प्रति हेतूत्प्रेक्षा । शुद्ध्यै विवेशेति फलोत्प्रेक्षा च[11] । एतद्विविच्योपपादयति—तथा हीत्यादि । वारुणीगमनं पाता[12]दिकारणमुत्प्रेक्षितम् । तत्र विरोधश्लेषा[13]वनुप्रविष्टौ[14] यच्च कारणोत्प्रेक्षानिमित्तं पातादिकार्यं तत्र वास्तवौ पाताग्निप्रवेशावुपहति[15]हेतुकपाताग्निप्रवेशाभ्यामभेदेन[16] अध्यवसितौ[17] । तेन श्लेषेण सह हेतुफलोत्प्रेक्षयोरङ्गाङ्गिता । ननु विरोधश्लेषयोरतिशयोक्त्युत्प्रेक्षयोश्च कुतो [18]नाङ्गाङ्गिभाव इत्याह[19]—न च विरोधेत्यादि । यद्यपि श्लेषो विरोधप्रतिभोत्पत्ति[20]हेतुः यद्यपि चातिशयोक्तिः उत्प्रेक्षानिमित्त[21] तथापि नानयो[22] श्लेषाभ्या सहाङ्गाङ्गिभावः । [23]तत्र हेतु—ताभ्यां विनेति । विरोधातिशयोक्तिभ्या विना श्लेषोत्प्रेक्षयोः अनुत्थानात् । अतो निरवकाशयो.[24] श्लेषोत्प्रेक्षयोर्बाधकत्वमेव ।

नन्वभेदाध्यवसायमन्तरेणानुत्थानात् उत्प्रेक्षा[25] वा मा भूत् । अतिशयोक्तिर्विविक्तो

---

1. A C गृहीत्वा 2. A. F रूढिता E उत्थिता 3 A's alt. प्रथनादुदा 4 च Omitted in A C सुरात्पत 5 A C. आदि वा 6. A C F. यापितः 7. A. तदाभासक C तद्बाध 8 A. C त्वादङ्गी D E F G H. त्वादनङ्गी 9 C. कारायां 10 A C. F. अह काले च 11 Omitted in E. G 12 A. C. F. पाताधिकरणं 13 Except C all read श्लेषानु 14. A. प्रविष्टे 15. A. इति पाता 16. A. C. भेदाभ्य 17. A C. F मितेन स्त 18. न Omitted in C 19. C इत्यत्राह 20. C. पत्तिः तथापि चाति 21 A C मित्तानिमित्ता चापि नान 22. Except C. all read नानया 23 A C. अत्र 24. E. काशमयो 25 E. F. G. प्रेक्षाया मा

अतश्च निरवकाशत्वाद्बाधकत्वम्। न च मन्तव्य विरोधमन्तरेणापि श्लेषो दृश्यत इति श्लेषस्य सावकाशत्वमिति। यतो न ब्रूमो विरोधमन्तरेणापि श्लेषो न भवतीति। किं तर्ह्यलङ्कारान्तरविविक्तो न श्लेषस्य विषयोऽस्तीति निरवकाशत्वात्तेषा बाधः। तन्मध्ये च विरोधोऽनुप्रविष्ट इति सोऽपि तेन बाध्यत इति न कश्चिद्दोषः। एवमर्थालङ्कारसङ्कर उदाहृत.। शब्दालङ्कारसङ्करस्तु कैश्चिदुदाहृतो यथा—

> राजति तटीयमभिहतदानवरासातिपातिसारावनदा।
> गजता च यूथमविरतदानवरा सातिपाति सारा वनदा॥

अत्र यमकानुलोमप्रतिलोमयोः शब्दालङ्कारयोः परस्परापेक्षत्वेनाङ्गाङ्गिसङ्कर इति। एतत्तु न सम्यगावर्जकम्। शब्दालङ्कारयोः शब्दवदुपकार्योपकारकत्वाभावेनाङ्गाङ्गिभावाभावात्। शब्दालङ्कारसंसृष्टिस्त्वत्र श्रेयसी। यथोदाहृतं प्राक्। यद्वा, अत्र शब्दालङ्कारद्वयमेकवाचकानुप्रविष्ट-

---

विषय। श्लेषस्य तु विविक्तोऽस्त्येवेत्यत आह—न च मन्तव्यमित्यादि। अलङ्कारान्तरविविक्त[1]श्लेषविषयो नास्तीति श्लेषविवेचने वितत्योक्तम्। अत श्लेषेण अन्यबाध इति तन्मध्यानुप्रविष्टो विरोधोऽपि बाध्य एव।

अर्थालङ्कार[2]सङ्कर निगमयति—एवमर्थेति। शब्दालङ्कारेति। [3]कैश्चिदित्यवधीरणा[4]। राजतीति। दानवाना[5] रास आक्रोशस्तदतिपा[6]तिन। सारावा सदा यन सेयमद्रेस्तटी राजति। गजता गजसमूह। स[7] च यूथमतिपाति अतितरा रक्षति[8]। कीदृशी? [9]अविरतेन दानेन मदेन। [10]वरा उत्कृष्टा सा प्रसिद्धा। सारा[11] बलवती। वनदा[12] वनस्य[13] खण्डयित्री[14]। योजनायाह—अत्र यमकेत्यादि। पादावृत्तिलक्षण यमकम्। आदितो[15] अन्ततश्च पाठे[16] [17]सन्दर्भैक्यादनुलोम[18]प्रतिलोमता च। तदेतदुभय सापेक्षमिति शब्दालङ्कारसङ्कर। तदेतद्दूषयति—[19]एतत्त्विति। अनावर्जकत्वे हेतुमाह—[20]शब्दालङ्कारयोरिति[21]। यथा हि शब्दयोर्मिथो [22]नोपकार तथा शब्दालङ्कारयोरपि। कस्तर्हि ईदृशि[23] विषये प्रकार इत्यत आह—शब्दालङ्कारेति[24]। [25]मिथोऽनुपकाराद् नैरपेक्ष्यम्। अत संसृष्टि श्रेयसी। [26]सङ्करतया चैकवाचकानुप्रवेश स्यादित्याह—यद्वेति।

---

1 A C वित्त विष 2. A C काराचिग 3 A's alt C. तत्कश्चि 4 F किरणा G अवधी योगात् सपत्नाधोति (P 228) 5 A निरास 6 A C पातन सारावानदा 7 E सा च 8 A C F वतीति 9 A C रतेति अविरतेन 10 A C F. न परा 11 A आसारा C पारा 12 A's alt C घनदावप्यखण्ड 13 A वनानि 14 F त्रितीति वदना योज 15 A. C दितो ततश्च पा 16 A C प्रथमे स 17 A C F. सदर्भैक्या 18 C H लोमता च तदे 19 A एतदिति E. एषन्त्विति 20 H तथा श 21 H कारयोरपि क 22 C नोपस्तथा 23 A ईदृग्विष C इश 24 E कारे तन्मियो 25 H. यथो 26 C सकरत्वे चैक

मिति तृतीयः संकरो ज्ञेयः। एवमेष प्रकारो दर्शितः। द्वितीयः प्रकारस्तु सन्देहसंकराख्यः। यत्रोभयोरेकतरस्य साधकं प्रमाणं नास्ति बाधकं वा, तत्र न्यायप्राप्तः संशय इति सन्देहसंकरस्तत्र विज्ञेयः। यथा—

> यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
> स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।
> सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
> रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते॥

अत्र विभावनाविशेषोक्त्योः संदेहसङ्करः। तथा ह्युत्कण्ठाकारणाभावे उत्कण्ठाया उत्पत्तौ विभावना। स च कारणाभावो "यः कौमारहर" इत्यादिना कारणविरुद्धमुखेन प्रतिपादितः। तथा "यः कौमारहरः" इत्यादावनुत्कण्ठाकारणसद्भावेऽपि अनुत्कण्ठाया अनुत्पत्तौ विशेषोक्तिः। सा चानुत्पत्तिः समुत्कण्ठत इति विरोधोत्पत्तिमुखेनोक्ता। अत एव द्वयोरप्यस्फुटत्वमन्यत्रोक्तम्। न चानयोः प्रत्येकं साधकबाधकप्रमाणयोग इति सन्देहसङ्करोऽयम्। यथा च—

> यद्वक्त्रचन्द्रे नवयौवनेन श्मश्रुच्छलेनोल्लिखितश्चकास्ति।
> उद्दामरामाहृदमानमुद्राविद्रावणो मन्त्र इव स्मरस्य॥

अत्र वक्त्रं चन्द्र इवेति किमुपमा, उत वक्त्रमेव चन्द्र इति रूपकमिति संशयः। समासस्योभयथापि भावात्। "उपमितं व्याघ्रादिभिः" इत्युपमासमासः, व्याघ्रादीनामाकृतिगणत्वात्। मयूरव्यंसकादित्वात्रूपकसमासः,

---

अत. शब्दालङ्कारपरिहारेण अङ्गाङ्गिभाव इति निर्णयति[1]—एवमेष[2] इति। सन्देहसङ्करं विवेचयति—द्वितीय इति। सन्देह दर्शयति—यत्रोभयोरित्यादि।

यः कौमारेति[3]। व्याख्यात प्राक्। योजयति—अत्र विभावनेत्यादि। अन्यत्र काव्यप्रकाशादौ। इत्थमुपमारूपकयोः सन्देहं दर्शयितुमाह—यथा चेति। यद्वक्त्रचन्द्रेति[4]। श्मश्रुच्छ[5]लेन नवयौवनेनोल्लिखितो मन्त्रश्चकास्तीव[6]। योजयति—अत्र वक्त्रेत्यादि। संशयस्य हेतुमाह—समासस्योभयथाऽपीति[7]। व्याघ्रादीनामावृतिगणत्वाद्विशिष्टगुणानां चन्द्रादीनाम् उपसङ्ग्रह[8] इति। मुख चन्द्र[9] इवेत्युपमा[10]समास.। "अविहितलक्षणस्तत्पुरुषो मयूरव्यंसकादिषु द्रष्टव्य" इति नीत्या। मयूरव्यंसकादीनामावृतिगणत्वात्। मुखमेव चन्द्र इति रूपकसमासश्च साधकबाधक[11]प्रमाणविरहादनयोः

---

1. A. C. निर्णयमिति 2. C. एष (क) इति 3. E. इति प्रथमसंभोगेन कौमार हृतवान मार्ल्लीवसुरभयो मालतीसुरभयः कदम्ब इह वसन्तभूः व्याख्या 4. A. C. चन्द्रम H. चन्द्रस्तुरं 5. E. H. च्छलापेय 6. F. तीव अत्र 7. A. C. H. omit इति 8. A. C. F. ग्रहः 9. A. चन्द्रः 10. A's alt. C उपमितम 11. A. C. साधकान्यतर

मयूरव्यंसकादीनामाकृतिगणत्वात् । नात्र क्वचित्साधकबाधकप्रमाणसद्भाव इति सन्देहसङ्करः ।

यत्र तु कस्यचित्परिग्रहे साधकं बाधकं वा प्रमाणं विद्यते, तत्र नियतपरिग्रहः । तत्रानुकूलं साधकं, प्रतिकूलं बाधकम् । तत्र साधकं यथा—

प्रसरद्बिन्दुनादाय शुद्धामृतमयात्मने ।
नमोऽनन्तप्रकाशाय शङ्करक्षीरसिन्धवे ॥

अत्र शङ्कर एव क्षीरसिन्धुरिति रूपकस्यामृतमयत्वं साधकम् । तस्य शङ्करापेक्षया क्षीरसिन्धावनुकूलत्वात् । उपमायास्तु न बाधकम्, शङ्करेऽप्युपचरितस्य संभवात् । यथा वा—

एतान्यवन्तीश्वरपारिजातजातानि तारापतिपाण्डुराणि ।
सम्प्रत्यह पश्यत दिग्वधूना यशःप्रसूनान्यवतंसयामि ॥

---

सन्देह । साधकबाधकान्यतरसद्भावे तु नियतपरिग्रह इत्याह—यत्र त्विति । साधक[1]-बाधकस्वरूप विवेचयति—तत्रानुकूलमिति[2] ।

प्रसरद्बिन्द्विति[3] । बिन्दु शुद्धाख्योपादान[4]महामाया नादो[5]ऽनाहत[6] तौ प्रस[7]रतो यस्मात् सिसृक्षोस्तस्मै[8] । शुद्धम् [9]अमृतम्, निष्कृष्ट[10] चैतन्य तन्मयात्मने । अनन्तो[11] देशकालाद्यनवच्छिन्न.[12] प्रकाशो यस्य तस्मै । अन्यदा तु बिन्दव शीकरा । नादो लहरी घोष । अमृत सुधा । अनन्त दीपो मथनादौ [13]दीपीभूत, तेन प्रकाश प्रथित[14] । इह[15] शङ्कर[16] एव क्षीर[17]सिन्धुरिति रूपके साधकम् । दर्शयति—अत्र शङ्कर[18] एवेत्यादि । अमृतशब्दो हि सुधाया प्रचुरप्रसिद्धिक क्षीरसिन्धावनुकूलतर इति रूपकसमास एवायम्[19] । अमृतमयत्व च नोपमा[20] प्रति बाधकमित्याह—उपमायास्त्विति । न बाधक किन्तु तटस्थमिति भाव[21] । तत्र हेतु—शङ्करेऽप्युपचरितस्येति । शङ्करत्वेनोपचरितस्य हि सिद्धो[22] रूपकत्वसिद्धि । अत उपमोत्थापिते[23] रूपके[24] विश्रान्तिरिति यावत् ।

उदाहरणा[25]न्तरेणापि न्यायमिमं द्रढयितुम् आह—यथा वेति[26] । [27]एतान्यवन्तीति । अवन्ती[28]श्वररूपात् पारिजातात् जातानि यशोरूपाणि प्रसूनानि दिग्रूपाणा [29]वधू-

---

1 A C F धकस्वरू 2 A C F H कूलत्वमिति 3 H इति उपचरितस्येति 4 A's alt द्वारेष F उपादान E पदान 5. A नादेवानाह F नादौ 6 C हतौ प्र 7 A C प्रहरतो 8 A C F तस्यै 9 A C समृतनि 10 A C. कृष्टाया चै 11. A तोद्देश 12 A C द्विनावकाशो 13 A C नेप 14 A's alt प्रमत 15 Omitted in A C 16 A सकर 17 A's alt सुरासिन्धु 18 A's alt E F सकर 19 E एव समासोऽय 20 A C E उपमाप्रतिज्ञाबाध 21 A C इह तु श 22. A अन्धो E. हि यो 23 A F. पितेन 24 A C F. के च विश्रान्ते 25 A's alt. हरणेऽपि C हरणापि 26 A चेति 27 A's alt एतान्य 28 H न्ती स्वरूप 29. E. वधू

अत्रावतंसनं प्रसूनेष्वनुगुणमिति रूपकपरिग्रहे साधकं प्रमाणम्। बाधकं यथा—

शरदीव प्रसर्पन्त्या तस्य कोदण्डटङ्कृतौ।
विनिद्रजृम्भितहरिर्विन्ध्योदधिरजायत ॥

अत्र विन्ध्यउदधिरि वेत्युपमापरिग्रहे विनिद्रजृम्भितहरिरिति साधारणं विशेषणं बाधकं प्रमाणम्। "उपमितं व्याघ्रादिभिः सामान्याप्रयोगे" इति वचनादुपमासमासे प्रतिकूलत्वात्। अतश्च पारिशेष्याद्रूपकपरिग्रहः। न तु शरदीवेत्युपमात्रोपमासाधकत्वेन विज्ञेया। न हि चापेण पञ्चाशत्सिद्धिः।*

---

नामव[1]तसयामि, पश्यत[2]। अत्राप्युपमाबाध[3]वैमुख्येन रूपकसाधक[4] दर्शयति—अत्रा-वतसनमिति[5]।

बाधकार्थ[6]मुदाहरति—[7]शरदीवेति। हरि सिंहो विष्णुश्च। उपमाबाधकं दर्श[8]-यति—अत्र विन्ध्य इत्यादि। विनिद्र[9]जृम्भितहरित्वं हि साधारणमुपमासमासं बाधते[10]। 'उपमितं व्याघ्रादिभि सामान्याप्रयोगे' इति वचनात्। ननु रूपक[11]सिद्धिसाधकाभावे कथमित्यत आह—अतश्च पारिशेष्यादिति। ननु [12]शरदीवेति[13] समभिव्याहृतेयम् उपमा कथ नोपमासाधिकेत्यत आह—नतु शरदीवेति। न्यायतो वाक्यार्थी[14]भूत रूपकमाभा[15]सत एकदेशवर्तिन्युपमा न हि बाधितुम् ईष्टे। यावता [16]स्वपमप्याभासीभवतीति भाव।

अत्रोपहासायाह—न हि [17]चापेणेति[18]। चापाणा समूह चापमिति स्थितौ पञ्चा-

---

1. H एव तामयामि 2 H. पश्यत 3 A. बाधकमुख्ये 4 A C. बाधक 5 A. C तसयामीति 6 A C H कात् उ 7. A C शरदि वेति 8 E. दर्शयितुमाह 9 A C जृम्भित 10 C H धत्ते व्या 11. E. रूपसि 12 A. शरदिवे 13 A C इति न्यायतो 14 A C अर्थ 15 E आभामत 16 A's alt स्वष्टे एवमप्या H स्वय ईष्टे एवमप्या 17 A's alt H भापे F पापे 18 A C H इति पञ्चा

* The NS Press text and Jayaratha do not have this bit न हि चापेण etc. The TSS. edn and Samudrabandha too do not have it, and both of them read here instead, न ह्यौपम्येन कदाचिदर्थसिद्धिः। Jayaratha has no comment here but Samudrabandha has; but what 'Ullunthana or ironical observation is meant according to him in 'न ह्यौपम्येन etc'. is not clear. The reading 'न हि चापेण etc.' is recorded in the footnote in TSS edn. and it clearly carries a satirical implication, although the precise terms in which Vidyācakravartin explains the saying are not clear. If 'śa' and 'ṣa' are interchangeable and 'Pañcāśat' could be also 'Pañcāṣat', the word would contain a sound-group *Caṣa*, common with *Caṣa* meaning a group of *Caṣa* birds; however it would be ridiculous to suggest that 'Pañcāśat' is derivable from 'Caṣa This is what Vidyācakravartin's comments probably mean

न ह्येकेनालङ्कारेण प्रक्रान्तेन निर्वाहः कर्तव्य इति राजाज्ञा, नापि धर्मसूत्रकारवचनम्। नाप्येष न्यायः। उत्तरोत्तरसाम्यप्रकर्षविवक्षणे प्रक्रान्तोपमापरित्यागेन रूपकनिर्वाहस्यौचितत्वात्। विपर्ययस्तु दुष्ट एव। यथा—"येनेन्दुर्दहनो विषं मलयजो हारः कुठारायते" इति। तस्मात्प्रकृते सामान्यप्रयोग उपमापरिग्रहे बाधक इति मयूरव्यंसकादेराकृतिगणत्वाद्रूपकसमाश्रयेण रूपकमेव बोद्धव्यम्। एवं "भाग्याब्धिः क्षितिगम्भीर." इत्यादौ द्रष्टव्यम्। साधकबाधकाभावे तु सन्देहसङ्करः। यथोदाहृतम्।

तृतीयस्तु प्रकार एकवाचकानुप्रवेशलक्षणः यत्रैकस्मिन्वाचकेऽनेकालङ्कारानुप्रवेशो न च सन्देहो नाप्याङ्गाङ्गिभावः। यथा—

शब्दद्वय (द्वे ?) वाचयोरभेदा[1]श्रयणा (णे ?) [2]व्यत्युत्पन्नप्रतीतेय[3]र्थाव[4]श्रुति। न खलु तन्निबन्धना यथानङ्गमनुहन्ति ।* नचेतरथा अलङ्कार[5]प्रक्रमभेद स्यादित्यत आह—न ह्येकेनेति। प्रक्रान्तेनैकेनैव निर्वहणीयमिति नैषा राजाज्ञा[6] येन दृष्टबाध माशङ्क्यते। [7]यल्लङ्घनेन दृष्टबाधस्स्यात्। नाप्येनन्मन्वादिधर्मसूत्रकारवचन [8]यल्लङ्घनेन मदृष्टबाधस्स्यात्। ननु दृष्टा[9]दृष्टयोर्द्वयोरपि बाधस्स्यात् यतो न्यायोऽयमित्यत आह—नाप्येष इति। प्रक्रान्तेन निर्वहणीयमिति न सार्वत्रिको[10] न्याय। किन्तु विशेष[11]विवक्षायामेव[12]। इह तु उत्तरोत्तर प्रकर्षविवक्षेति उपमापेक्षया रूपके साम्य[13]प्रकर्ष। अतोऽवयवगतोपमापरित्यागेन वाक्यार्थी[14]भूतरूपक[15]परिग्रह एवोचित। विपर्ययस्तु साम्यनिकर्षाद्दुष्ट एव। तदेतत्प्रत्युदाहरणेन द्रढयति—येनेन्दुरिति। चन्द्रेन्दुमलयजयो दहनविषयत्वरूपणात् साम्यप्रकर्ष प्रक्रान्त। हार[16] कुठारायत इति तूपमया प्रकर्ष[17] नीत। [18]चर्चां निगमयति—तस्मात्प्रकृत इति। सामान्यप्रयोग उपमाबाधक इति न्यायोपपन्नो [19]रूपकप्रक्रम एव निर्वहणीय इति यावत्।

न्यायोऽयमत्रापि[20] ज्ञेय इत्याह—भाग्याब्धिरिति। गाम्भीर्यसाधारण्यादुपमाबाधे रूपकमेव द्रष्टव्यम्। साधकबाधकाभावे तु सन्देह इत्युक्तमनुस्मारयति—साधकबाधकेति। इत्थमङ्गाङ्गिभावसन्देह[21]रूप प्रकारद्वय[22] विविच्य[23] तृतीय प्रकार विशेषयति—[24]तृतीयस्त्विति। त विशदयति—यत्रैकस्मिन्निति।

1 C भेदादाश्र 2 A. था व्युत्प C थाव्युप 3 A C F प्रतीतयेय 4 A's alt C भाय H भापा 5 C कारमाप्रमथे 6 E राजाज्ञा यल्लङ्घ 7. H एतल्लङ्घ 8 A C उल्लङ्घ 9 A C दृष्ट्योरपि 10 A C H कोऽय न्या 11 H शेषवि 12 H एव प्रकारान्तर 13 A's alt साम्य प्रकृष्ट 14 A C अथे 15 C पुनिम 16 Omitted in A C 17 F निष्कर्ष 18 E चर्चा 19 A C F रूपकोपक्रम 20 E अन्यत्रापि 21 C. सन्देह्या रूप 22 A C द्वयप्रकार वि 23 E विवेच्य 24 A C तत्तृती

* See footnote on previous page

मुरारिनिर्गता नूनं नरकप्रतिबन्धिनी ।
तवापि मूर्ध्नि गङ्गेव चक्रधारा पतिष्यति ॥

अत्र मुरारिनिर्गतेति साधारणविशेषणहेतुकोपमा । नरकप्रतिबन्धिनीति श्लिष्टविशेषणसमुत्थोपमाप्रतिपत्तिहेतुः श्लेषश्चैकस्मिन्नेव शब्देऽनुप्रविष्टो, तस्योभयोपकारित्वात् । अत्र च यथार्थश्लेषेण सहोपमायाः सङ्करः, तथा शब्दश्लेषेणापि सह दृश्यते । यथा—

सत्पुष्करद्योतितरङ्गशोभिन्यमन्दमारब्धमृदङ्गवाद्ये ।
उद्यानवापीपयसीव यस्यामेणीदृशो नाट्यगृहे रमन्ते ॥

अत्र "पयसीव नाट्यगृहे रमन्ते" इत्येतावतैव समुचितोपमा संपन्ना सत्पुष्करद्योतितरङ्गेति शब्दश्लेषेण सहैकस्मिन्नेव शब्दे सङ्कीर्णा । शब्दालङ्कारयोः पुनरेकवाचकानुप्रवेशेन सङ्करः पूर्वमुदाहृतो "राजति तटीयम्" इत्यादिना । एकवाचकानुप्रवेशेनैव चात्र सङ्कीर्णत्वम् । अत एव व्यवस्थितत्वमन्यानुभाषितमप्रयोजकम्, तुल्यजातीययोरप्यलङ्कारयोरेकवाचकानु-

---

मुरारि[1]निर्गतेति । नरकोऽसुरो निरयश्च[2]। ([2a]गङ्गेवेति) सद्गतिप्राप्तिहेतुत्वम्[3] । योजयति—अत्र मुरारीति[4] । [5]गङ्गेवेत्युपमा मुरारिनिर्गतेत्यर्थभेदाभावात् साधारणविशेषणेन समुत्थापिता । नरकेति श्लिष्टविशेषणो[6]ऽस्योऽर्थः श्लेषश्चोपमाप्रतिपत्तिहेतु । एकत्रैव नरकशब्देऽनुप्रविष्टो [7]श्लिष्ट[8]शब्देनोभयोपकारात् शब्दश्लेषेणाप्युपमा[9]सङ्करार्थमाह—अत्र च यथेत्यादि । सत्पुष्करेति । पुष्करं वाद्यभाण्डमुख[10] पद्म च । द्योतितस्तरङ्गा द्योतितो रङ्गश्च । रज्यन्ते[11]ऽस्मिन् सामाजिकमनांसि इति रङ्गो नाट्यारम्भक्रिया । मृदङ्गसदृशं[12] जलास्फालनवाद्य मृदङ्गवाद्य च । योजयति—अत्र [13]पयसीवेत्यादिना[14] । रमन्त इति साधारणो धर्मः । अत[15] सामग्रीयोगात् सम्पन्ना द्योतितरङ्गशोभिनीत्येकस्मिन्नेव शब्दे सभङ्गपदत्वात् शब्दश्लेषेण सङ्कीर्णम् । शब्दालङ्कारयोरे[16]कवाचकानुप्रवेश[17]मुदाहृतचरमनुस्मारयति—शब्दालङ्कारयोः पुनरित्यादि ।

विजातीय[18]योरेवैकवाचकानुप्रवेश(श?)व्यव[19]स्थेति यदन्यैरुक्तं तदप्रयोजकमित्याह—एकवाचकेत्यादि । अत्र 'राजति तटीयमि'त्यादौ । एवकारेणाङ्गाङ्गिभावसन्देहसङ्करावपोहति । शब्दालङ्कारत्व तुल्यजातीयता[20] । उद्भटप्रकाशितस्तु प्रकारान्तरगोचरशब्दार्था-

---

1. A C F रारिनिग 2. A. C. F निरयश्च 2a. All the mss. read गतेयेति 3. C. हेतुना 4. C मुरारिनिर्गतेति 5. A. C. गङ्गाये 6. A. योत्यः क्षे C. पर्योऽर्थ 7. A प्रविष्टे 8. A. श्लिष्टे शब्दोभयो C श्लेषशब्दे 9. C. उपमा 10. C. मुख मा पद्मोति 11. A's alt. रन्यन्ते 12. A. C. F सदृश 13. E. पयसी 14 A. C. आदिना शब्दालङ्कारयोरेक E. F. आदि रम 15. F. अन्तः 16. C एकं 17. A. C. पेगवाचकमुदा 18. A. C. F. योरेक 19. A. C. वस्थायपति 20. A. C. F. जातीययोः उ

प्रवेशसम्भवात् । शब्दार्थालङ्कारसङ्करस्तु भट्टोद्भटेन प्रकाशितः संसृष्टावन्तर्भावित इति त्रिप्रकार एव सङ्करइ होक्तः ।

इदानीमुपसंहारसूत्रम्—

एवमेते शब्दार्थोभयालङ्काराः संक्षेपतः सूत्रिताः ॥८६॥

---

सकार[1]सङ्कर संसृष्टो अन्तर्भावित इति तस्य सङ्करत्वमङ्गाङ्गिभाव एवोक्तमित्याह—शब्दार्था[2]लङ्कारेत्यादि ।

अङ्गाङ्गिभावा[3]स्सन्देहात्[4] प्रवेशादेकवाचके ।
त्रिधा[5] तु सङ्कर शब्दालङ्कृत्योरेकवाचके ॥

प्रकरणमुपसञ्जिहीर्षुराह—इदानीमिति । तत्र सूत्रम्—[6]एवमेते शब्दार्थोभयालङ्कारा संक्षेपतस्सूचिता[7] । व्याचष्टे—एवमितीति[8] । तत्र[9] पुनरुक्तवदाभासो[10]ऽर्थस्य पौनरुक्त्ये । छेकवृत्त्यनुप्रासौ व्यञ्जनमात्रस्य । यमकं स्वरव्यञ्जनसमुदायस्य । लाटानुप्रास शब्दार्थयोरिति पौनरुक्त्य पञ्चकम् । स्थानविशेषश्लिष्टवर्णपौनरुक्त्ये चित्रम् ।

अथ सादृश्यविच्छित्तौ भेदाभेदतुल्यतायाम् उपमाना[11]न्वयोपमेयोपमा[12]स्मरणानि । अभेदप्राधान्य आरोपाश्रयतया[13] रूपकपरिणामसन्देहभ्रान्ति[14]मदुल्लेखापह्नुतय । अध्यवसायाश्रयेणोत्प्रेक्षातिशयोक्ती । गम्यमानौपम्याश्रयेण तुल्ययोगितादीपकप्रतिवस्तूपमादृष्टान्तनिदर्शनाव्यतिरेकसहोक्तिविनोक्तय । विशेषण[15]विच्छित्त्या समासोक्तिपरिकरौ । विशेषण[16]विशेष्यविच्छित्त्या श्लेष । अप्रस्तुतात्प्रस्तुतावगतावप्रस्तुतप्रशंसा । सामान्यविशेष[17]भावादिना निर्दिष्टप्रकृतसमर्थनेऽर्थान्तरन्यास । गम्यस्य भङ्ग्यन्तरेणोक्तौ पर्यायोक्तम् । स्तुत्या निन्दायाः[18] निन्दया वा[19] स्तुतेर्गम्यत्वे व्याजस्तुति । प्राकरणिकयो विशेषार्थनिषेधाभासे अनिष्टविध्याभासे च आक्षेप[20] । विरोधगर्भतया विरोधविभावना विशेषोक्त्यतिशयोक्ती अन्तरा सङ्गतिविषमसम[22]विचित्रा[23]धिकान्योन्यविशेषव्याघातद्व[24]यानि । शृङ्खलावैचित्र्येण कारणमालैकावलीमालादीपकसारा । तर्कन्यायेन काव्यलिङ्गानुमाने[25] । वाक्य[26]न्यायेन यथासङ्ख्य[27]पर्यायपरिवृत्ति[28]परिसङ्ख्यार्थापत्तिविकल्पसमुच्चयद्वयसमाधय । लोकन्यायेन प्रत्यनीक[29]प्रतीपनिमीलितसामान्यतद्गुणातद्गुणोत्त-

---

1 A C सकारसस्तु 2 G ब्दालका 3 A's alt भावस्थ देहात् C. भावास्थ देहात् 4 A C देहातव्यायिकमुपसञ्जि 5 E त्रिया तु 6 F एवमिति 7 A C F सूचिता 8 A C omit इति 9 A C अत्र 10 A C भासोऽपि अपौनरुक्त्ये वृत्त्यनुप्रासयो अपौनरुक्त्ये वृत्त्यनुप्रासशब्दार्थयोरिति 11 A C मान त्वादयोऽनन्वयो 12 A C स्मरण 13 A C तया भ्रान्ति 14 C भ्रान्तिमुल्ले 15 A वैचित्र्यात् C वैचित्र्यविच्छित्त्या श्ले 16 A C षणविच्छि 17 C शेषादिभाव 18 Omitted in E F G 19 E F G या च वस्तुग 20 A C षेपार्थापत्ति विरोध 21 A C omit वि 22 A C 23 अदिक 24 A C द्वयादिगुणवैचिञ्यात् कारण 25 A C मानेन 26 C वाक्यन्यायेन 27 C सङ्ख्यार्थापत्ति 28 A C E F यथा स 29 C नीकमीलित

एवमिति पूर्वोक्तप्रकारपरामर्शः। एत इति प्रक्रान्तस्वरूपनिर्देशः। सूत्रिता अलङ्कारसूत्रैः सूचिताः संक्षेपेण प्रतिपादिताः।

तत्र शब्दालङ्कारा यमकादयः। अर्थालङ्कारा उपमादयः। उभयालङ्कारा लाटानुप्रासादयः। संसृष्टिप्रकारौ कौचिदलङ्कारौ तद्रूपत्वात्। लोकवदाश्रयाश्रयिभावश्च तत्तदलङ्कारनिबन्धनम्। अन्वयव्यतिरेकौ तु तत्कार्यत्वे प्रयोजकौ, न तदलङ्कारत्वे। तदलङ्कारत्वप्रयोजकत्वे तु श्रौतोपमादेरपि शब्दालङ्कारत्वप्रसङ्गात्। तस्मादाश्रयाश्रयिभावेनैव चिरन्तनमतानुसृतिः।

संपूर्णमिदमलङ्कारसर्वस्वम्।

---

राणि। गूढार्थपरत्वे सूक्ष्मव्याजोक्तिवक्रोक्तिस्वभावोक्तय। स्फुटार्थत्वे भाविकम्। [1]औदात्त्येन उदात्तद्वयम्। चित्तवृत्त्या[2]लम्बेन रसवत्प्रेयऊर्जस्वित्समाहितभावोदयसन्धिशबलत्वानीति शुद्धा। मिश्रतया तु सङ्करसंसृष्टी।

तदिदमभिसन्धायाह—एवमिति। पूर्वोक्तप्रकारपरामर्श —एत[3] इति। प्रक्रान्त[4]-स्वरूपनिर्देश[5] इति। शब्दार्थोभयालङ्कारान् वर्गशो विविनक्ति[6]—तत्र शब्दालङ्कारा इत्यादि। [7]लाटानुप्रासादय इत्यादि। [8]शेषानुद्घाटयति—संसृष्टिसङ्करेति[9]।

ननु चान्वयव्यतिरेका[10]भ्यामुक्ति(क्त)व्यवस्थाभङ्ग इत्यत आह—लोकवदा[11]श्रयाश्रयीति। तदलङ्कार्येति। तच्छब्देन शब्दार्थोभयपरामर्शः। चर्चित चैतद् श्लेषप्रस्तावे[12]। तर्हि अन्वयव्यतिरेकौ कुत्र निबन्धनमित्यत आह—अन्वयव्यतिरेकौ[13]त्विति। अलङ्काराणा शब्दादिकार्यत्वे [14]शब्दाशब्दाद्यन्वयव्यतिरेकौ तत्र[15] निबन्धनम्[16]। ननु शब्दाद्यलङ्कारत्वे[17] को दोष इत्यत आह—तदलङ्कारत्वप्रयोजकत्व[18] इति। श्रौतोपमादौ[19] शब्दान्वयव्यतिरेका[20]नुविधानाद् शब्दालङ्कारत्व प्रसजेद्। निगमयति—तस्मादाश्रयाश्रयीति। चिरन्तनमते[21]ष्युक्तार्थे सवादसमुद्घाटनम्।

शब्दन्यासो विषमविषमो [22]दुर्घटार्थव्यवस्था
व्यासव्यासिप्रकटनपर[23]न्यास(य?)चर्चो गभीरः।

---

1 A आदात्येन 2. A C. वृत्त्या ऊर्ज 3. C. एवमिति 4 A. C F. प्रकारान्तरस्य 5 A C F देशमिति 6 A. C. F. नक्ति लाटा 7. A's alt. मालानु 8. A E. G शब्दपरामृश्यानुद्धा A's alt. शब्दानुप्सा (षषा) दयति C. शब्दानुद्धाट 9. H. इति यक्ति 10 After व्यतिरेक G ends abruptly. 11 A. यादाश्र 12. A, C. तार्थे निबन्धन 13 A. कौ तूर्णाय, अलं 14 A. C. रणे शब्दाद्यन्व 15 A's alt. कुत्र. Omitted in E. 16. A C. F. G. H धन इत्यत आह ननु 17. E. रणे अर्था दो 18. H. कत्वमिति 19. A C. E. F G. उपमादेः 20. A C. F. G रेकपरत्वं प्रस 21. A. C. F G. चिरन्तनोक्तयुक्तार्थे H तनेष्युक्तार्थं 22. H. दुर्लभार्थ 23. C. पटु

इत्थं भूम्ना[1] रुचकवचसां विस्तरः यत्कृतोऽयं
टीकास्माभिः समुपर[2]चिताऽनेन [3]सञ्जीवनीयम् ॥

सूक्ष्माम[4]व्याकुलामत्र शास्त्र[5]युक्त्यु[6]पबृंहिताम् ।
मीमांसामुपजीवन्तु कृतिनः काव्यतान्त्रिकाः ॥

काव्यप्रकाशेऽलङ्कारसर्वस्वे च विपश्चिताम्[7] ।
मत्यादरो[8] जगत्यस्मिन् व्याख्यातमुभयं ततः ॥

इत्या[9]लङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्यकाव्यमीमांसाप्रभाकर[10]-
सहजसर्वज्ञमहाकविश्रीविद्याचक्रवर्तिविरचितायां सञ्जीवन्या-
मलङ्कारसर्वस्वटीकाया[11]मर्थालङ्कारप्रकरणं
समाप्तम् ॥

——:०:——

समाप्ता चेयं सञ्जीवन्याख्या
अलङ्कारसर्वस्वटीका ॥

---

1. C. भूमा 2. E. चरिता 3. A. सञ्जीविनीति A's alt. संग्राहनीयं 4. A's alt. अप्याकुल 5. A. शास्त्रे 6. A's alt. C. वृत्युप 7. E सचेतसां 8. E's alt. येमादरो महांस्तेन H. अलंकारो ज 9. A. F. H. अलंकारचक्र C. अलंकार प्रस्था 10. C. कर सर्व 11. C. D. E. तायां अर्था

# श्रीमद्विद्याचक्रवर्तिकृता अलङ्कारसर्वस्व-
# निष्कृष्टार्थकारिकाः ।

## APPENDIX I

# श्री मद्विद्याचक्रवर्तिकृता अलङ्कारसर्वस्व-निष्कृष्टार्थकारिकाः ।



विश्वं प्रकाशयति या जातिगुणा[1]द्यात्मकैः निजैः प्रसरैः ।
संस्कारगुणसमृद्धा वाणी मामवतु सरलसन्दर्भा ॥१॥
विभागाधिगतं[2] त्रित्वं त्रिशब्देन समाप्यते ।
त्रिप्रकारत्ववचनः[3] इतिशब्दस्ततो मतः ॥२॥
पुनरुक्तवदाभासो यत्रेत्येवं हि संस्क्रिया ।
अलङ्कार्यैकनिघ्नत्वव्यक्तये समुपाश्रिता ॥३॥
प्रकृष्टो वर्णविन्यासो[4] रसाद्यनुगतो[5] हि यः ।
सोऽनुप्रासस्स च छेकवृत्त्युपा[6]धिवशाद्द्विधा ॥४॥
समुदायद्वयं यत्र विविधं साम्यमृ[7]च्छति[8] ।
सच्छेकलालनात्प्रौढैः[9] छेकानुप्रास ईरितः ॥५॥
व्यञ्जन[10]व्यापृतिर्वृत्ति[11]र्वर्णानां रसगोचरा ।
तत्संयोगादियं वर्णरचनावृत्तिरिष्यते ॥६॥
सा वैदर्भ्यादिभेदेन[12] त्रिधा पूर्वं निरूपिता[13] ।
तयोपलक्षितत्वात्तु वृत्त्यनुप्रास [14]इष्यते ॥७॥
यत्र तावेव शब्दार्थौ तात्पर्यं तु विभिद्यते ।
तत्पौनरुक्त्यमाचार्यैर्लाटानुप्रास इष्यते ॥८॥
दोषापत्तिभयादेव शब्दैक्यं स्यादनन्वये ।
अस्मिंस्तु लाटानुप्रासे साक्षादेव[15]हि लक्षणम् ॥९॥
कर्णिकायां लिखेदेकं द्वौ द्वौ दिक्षु विदिक्षु च ।
प्रवेशनिर्गमौ दिक्षु पद्मबन्धो भवेदयम् ॥१०॥

---

1. a. गुणात्मिका b and c. गुणक्रियात्मिका 2. a. b. c. गतत्रित्वं 3. A. C. वचनं 4. C. विन्यासो 5. A. C अनुगुणो हि यः a. b. c. गमस्तु यः 6. C. उपाय 7. D. F. इच्छति 8. F. ति ईरितः 9. D E. प्राज्ञैः 10. c. व्यापृति 11. a b. c. व्यक्तिः 12. A. भेदा त्रि (भेदो त्रि) 13 A's alt. C. उदाहृता 14. A. C. उच्यते 15. H. एवं

आरोप्यलिपिवर्णानां साम्याद्वाचकवर्णताम्[1] ।
खड्गबन्धादिकं चित्रं काव्यालङ्कार इष्यते ॥११॥
भेदाभेदतुलावृत्तौ साधर्म्यमुपमोच्यते ।
धर्मविच्छित्तिवशतः त्रैविध्यमुपयाति सा ॥१२॥
विरुद्धधर्मसंसर्ग[2]स्तुल्यान्तरनिवृत्तये ।
ततस्तदन्वयाभावात् भवेदयमनन्वयः ॥१३॥
उपमानोपमेयत्वव्यत्यया[3] न क्रमं विना ।
उपमेयोपमा तेन वाक्यभेदैक[4]गोचरा ॥१४॥
स्मृतिस्सा स्मर्यते यत्र सदृशात्सदृशान्तरम् ।
असादृश्यादवाच्यत्वादितः प्रेयान्विभिद्यते ॥१५॥
[5]यत्त्वभेदप्रधानं[6] स्यात्साधर्म्यं[7] तद्द्विधा मतम् ।
आरोपाध्यवसानाभ्यां आरोपे[8] रूपकं मतम्[9] ॥१६॥
वस्तुतो भेदसद्भावाच्छङ्कया[10] नातिशयोक्तिता ।
विषयस्यानपह्नुत्या [11]न चैतत्स्यादपह्नुतिः ॥१७॥
ततो विषयिरूपेण रूपवान्विषयो मतः ।
आरोपणेन क्रियते[12] तेनैतद्रूपकं मतम् ॥१८॥
भेदस्तृतीयो यस्तत्र[13] परंपरितसंज्ञकः[14] ।
साधर्म्येणैव[15] तत्सिद्धिर्वैधर्म्येणापि दृश्यते ॥१९॥
विषय्यारोप्यते येन प्रतिस्वं विषयेषु तत् ।
भवेद्विषयसङ्ख्यात्वं सङ्ख्याभेदेऽपि[16] धर्मिणोः[17] ॥२०॥
रूपकं पूर्वसंसिद्धं श्लेषमुत्थापयेद्यदि ।
तदा रूपकमेव स्यादन्यथा श्लेष इष्यते ॥२१॥
विषय्याकारमारोप्य विषय[18]स्यगनं यदा ।
रूपकत्वं तदा तत्र रञ्जनेन समन्वयः ॥२२॥
यदा तु विषयो रूपात् स्वस्मादप्रच्युतो भवेत् ।
उपयुक्तये[19] पराकारं परिणामस्तदा मतः ॥२३॥
आरोप्यमाणः प्रकृते यदासावुपयुज्यते ।
परिणामस्तदा[20] तेन रूपकादस्य भिन्नता ॥२४॥
रूपमात्रसमारोपाद्रूपके रञ्जको ह्यसौ[21] ।

---

1. c. वर्णतः 2. A's alt. C. संबन्ध 3. A's alt. C. व्यत्ययेन 4. A's alt. भेदेन गो 5. D. यत्तु भेद 6. D. प्रधानः 7. D. धर्म्य भावात् 8. A's alt. C. F. आरोपो 9. A's alt. I. भवेत् 10. A. C. F. H. शक्त्या 11. A's alt. C. चेत्तत् 12. A's alt. क्रियया 13. a. b. c. यस्त्वत्र 14. a. संज्ञतः c. संज्ञिकः 15. A. C. E. F. धर्म्येणापि 16. D. H. भेदेऽपि 17 H. धर्मिणः 18. H. पयस्य तं यदा 19. A. C. युक्तौ 20. A. तदानेरू C. तदानेकरू 21. a. रञ्जकोऽप्यसौ

व्यवहारसमारोपा[1]दिह स्यात्प्रकृतान्वय[2] ॥२५॥
परिणामस्समासोक्त्योर्ज्ञातव्योऽस्माद्विपर्यय ।
उपादानानुपादानकृतो भेदस्तयोर्मिथ ॥२६॥
सन्देहोऽप्रकृतद्वारा प्रकृत सस्पृशेद्यदि ।
प्रतिभोत्था[3]पितस्सोऽय सन्देहालङ्कृतिर्मत[4] ॥२७॥
सादृश्योत्थापिता भ्रान्तिर्यत्रासौ भ्रान्तिमान्मत ।
नानाधर्मबलादेक[5] यदि नानेव गृह्यते ॥२८॥
नानारूपसमुल्लेखात्स[6] उल्लेख इति स्मृत ।
यदेक[7] तद्धि[8] नानेति गृह्यते [9]धर्मभेदत ॥२९॥
[10]रुच्यादिवशतो लोके नानात्व [11]चेदकृत्रिमम् ।
अतद्रूपस्य ताद्रूप्यान्न ह्यसौ भ्रान्तिरिष्यते ॥३०॥
न चाप्यतिशयोक्ति स्यादभेदे[12] भेदरूपिणी[13] ।
अत्र नानेकधात्व स्याज्ज्ञातृभेदो[14] न चान्तिमे ॥३१॥
विषयज्ञातृभेदाभ्या विना नोल्लेखसभव ।
यद्यपि श्लेषतो बाधो न तथाऽप्यस्य निह्नव ॥३२॥
अनपेक्ष्यापि[15] यच्छ्लेष तथैव[16] स्थातुमर्हति ।
प्रकृत यन्निषिध्यान्यत्साध्यते सा त्वपह्नुति ॥३३॥
नञा छलादिशब्दैश्च सा शब्दान्तरतस्त्रिधा ।
स्याद्भेदाभेदतुलया[17] विच्छित्तिरुपमादिक [18] ॥३४॥
रूपकादिस्त्वभेदाशो मुख्येत्यारोपसश्रयात् ।
उत्प्रेक्षादिरभेदेन वक्ष्यतेऽध्यवसायभाक्[19] ॥३५॥
यदायमुपमानाशो लोकतस्सिद्धिमृच्छति ।
तदोपमैव येनेवशब्द साधर्म्यसूचक ॥३६॥
यदा पुनरय लोकादसिद्ध कविकल्पित ।
तदोत्प्रेक्षैव येनेवशब्द सम्भावनापर ॥३७॥
गुणक्रियादि[20]सबधात् प्रकृते [21]ऽप्रकृतात्मना ।
सभावन स्यादुत्प्रेक्षा वाच्ये[22]वार्थं [23]परा यथा ॥३८॥

---

1 D दाहादिह 2 A C E F H अय. अप्रकृतान्वेय रूपा प्रकृतस्थिति परि 3 A's alt C. उत्पादित 4 a मत. मतं 5 a A's alt C. रूप 6. a A's alt C समुल्लेखात्तु 7 D एक 8 a A C F नहि 9 a b रूप 10. a A's alt C. प्रायादि 11 a A's alt C भेदरूपया 12 b भेद 13 a A's alt रूपिणु 14 a A's alt. C भेदनिबन्धने 15 a C D F H यत्रैव 16 a b D E F H तथैव 17 A's alt तुल्या 18. a b c प्रादिका 19 b c भाक् गुण 20 A C. क्रियादि 21 C. हृते अ 22 A वाच्या वाच्ये C. D वाच्यवार्थं 23 a b c पाऽप्य

जातिक्रियागुणद्रव्योत्प्रेक्षणात्सा[1] चतुर्विधा ।
भावाभावाभिमानत्वे[2] जात्यादेस्साष्टधा पुन ॥३९॥
गुणक्रियानिमित्तत्वे ज्ञेया [3]षोडशधा तथा ।
द्वात्रिंशच्च निमित्तस्योपादानादन्यथा स्थिते ॥४०॥
हेतौ स्वरूपे चोत्प्रेक्ष्ये फले[4] षण्णवति पुन ।
द्रव्यहेतुफलात्मत्वासंभवात्तद्भिदा[5] च्युति[6] ॥४१॥
तथा प्रतीयमानाया[7] निमित्तस्यानुपग्रह[8] ।
नापि स्वरूप तद्भेदं[9] तस्मा[10]न्न्यूना भवेदियम् ॥४२॥
क्वचिच्छ्लेषेण धर्मांश[11]गतेनैवा न [12]बाध्यते[13] ।
उपमोपक्रमाऽप्येषा भवेत्सापह्नवाऽपि च ॥४३॥
अभेदाध्यवसायो[14] हि फलेऽतिशय[15]नामनि ।
न पुन फलिनोस्तत्राभेदे भेदो न सिध्यति ॥४४॥
[16]प्रकृतेष्वथवान्येषु ज्ञातव्या तुल्ययोगिता ।
गुणक्रियाभिसम्बन्धात्समानादन्वितार्थिका[17] ॥४५॥
[18]दीपक यास्तवौपम्य[19] प्रकृताप्रकृताश्रयम् ।
आदिमध्यान्तवाक्येषु क्रियाकारकभेदत ॥४६॥
प्रसङ्गं धर्मनिर्देश[20] इवादेरनुपग्रहे[21] ।
प्रतिवस्तूपमा ज्ञेया प्रतिवाक्यार्थसाम्यत ॥४७॥
बिम्बानुबिम्बन्यायेन निर्देशे[22] धर्मधर्मिणो[23] ।
दृष्टान्तालङ्कृतिर्ज्ञेया भिन्नवाक्यार्थसंश्रया ॥४८॥
[24]सम्भवद्वस्तुसम्बन्धोऽसंभव[25]द्वावबोधयेत् ।
प्रतिबिम्ब [26]यदि तदा निर्शतिथ्या[27] निदर्शना ॥४९॥
बिम्बानुबिम्बार्थतया वाक्ययो प्रकृतान्ययो ।
स्यान्तरपेक्ष्ये[28] दृष्टान्त सापेक्षत्वे निदर्शना ॥५०॥
भेदप्रधाने साधर्म्ये व्यतिरेको विधीयते ।
आधिक्यादुपमेयस्य न्यूनत्वा[29]द्वोपमानत ॥५१॥

---

1 A C D E F प्रभ्या सा 2 D मानत्वात् 3 A. पाडाया 4 A C. भया 5 A C. E. तद्द्विधा 6 D च्युति 7 E. मानाया F मानत्वात् 9 F महात् [illegible] A C. D E. तभेदं 10 A C नन्यां न्यू 11 A C D F धमाश 12 A C. E. F न न बा 13 D बाध्य 14 A C. E. सायाऽपि 15 A C नायन मिति A's alt गायिनी मनि 16 a b c. मन्नुगनु 17 A धर्यका C आग्निका E. प्रधिना H अथना 18 This kanka is omitted in A C. F 19 D चम्नुगाक्य 20 A C D E. F निर्देशात् 21 A C F महात् 22 A C D F निर्देशा 23 E. धर्मिनो 24 H पयम यम्नु 25 D भवन्या बा 26 Omitted in A C D F H 27 A. मिर्धामन्या 28 a b c D पश्य 29 E. बाधात्

गुणप्रधानभावो ■ [1] शाब्दस्तेन भिदोत्कटा ।
सश्रितातिशयोक्ति च [2] सहोक्तिस्समयोर्मता ॥५२॥
सदसत्त्वनिवृत्तिश्चेन्निवृत्त्याऽन्यस्य वर्ण्यते ।
तदा द्विधा विनोक्तिस्स्याद्विधि[3]रत्र फल भवेत् ॥५३॥
अप्रस्तुत प्रतीत[5] चेद्भेदकांशकसाम्यत [6] ।
व्यवहार[7] समारोप्य[8] प्रस्तुते न्यग्भवत्यय[9] ॥५४॥
सेना[10]प्रस्तुतवृत्तान्तारोपेण प्रस्तुत स्वयम् ।
सक्षेपेणोच्यते तस्मात्समासोक्तिरिय मता[11] ॥५५॥
[12]स्याद्विशेष्यांशसाम्य चेत्प्रस्तुताकाररूपितम् ।
भवेदप्रस्तुत भेद्य रूपकालङ्कृतिस्तदा ॥५६॥
स्यादौपम्यसमासेन समासोक्ति[13]विनिश्चये[14] ।
स्यात्सकरसमासेन समासस्य तु सशये ॥५७॥
न रूपकसमासस्य प्राप्तायस्या प्रवर्तनम् ।
रूपकाद्यर्थससिद्धेरेकदेशविवर्तिन [15] ॥५८॥
विशेषणांशसाम्येनाप्रस्तुतार्थस्य गम्यता ।
समासोक्तिर्मता येन सक्षिप्यार्थो[16]ऽभिधीयते ॥५९॥
शुद्धकार्यसमारोपे साम्य[17] स्यादौपचारिकम् ।
व्यवहारसमारोप साक्षादस्या प्रयोजक [18] ॥६०॥
स्याद्विशेषणसाम्य [19]चेत्समासान्तर[20]सश्रयात् ।
उपमा बाधते नेना[21]मेकदेशविवर्तिनीम् ॥६१॥
दृश्यतेऽर्थान्तरन्यासे[22] समर्थ्ये[23] च समर्थके ।
उत्प्रेक्षायोगिनो चैवा क्वचित्स्यादेककालगा[24] ॥६२॥
विशेषणाना व्यङ्ग्यार्थगर्भीकरणलक्षणा [25] ।
सोऽभाशता[26] परिकरे[27] व्यङ्ग्य परिकरो यत ॥६३॥
शब्दसाम्य[28] भवेच्छ्लेषो विशेषणविशेष्ययो ।

---

1 A C F यस्य स तेन 2 Omitted in A C D F H 3 E धृत्तान्य a b c वृत्त्यां 4 A C D E F द्विधात्र 5 D प्रतीत 6 C सामान्य तद्व्यव D साम्यत्वम् 7 C हार 8 F स्वमारोप्य 9 A C F अपि 10 A C अनेनाप्र 11 A C तत 12 A C F तद्विशेषणांश 13 A उक्तिवि 14 C निश्चया 15 b ■ विवर्तिन सा लौकिके लौकिकस्य समाज्ञपाऽय वस्तुनि । शास्त्रीयवस्तु नस्तद्वच्छास्त्रीये वेत्यनेकधा ॥ विशेषणाना व्यङ्ग्यार्थ 16 A C F क्षिप्तार्थो 17 A's alt E G a b c कार्यं 18 C प्रयोजकम् 19 A's alt च इत्यपाम्ना 20 E अन्ते स 21 A C F H नैन 22 A C D E F न्यास 23 C समर्थे 24 A ■ alt कालता 25 A's alt लक्षणास् 26 A C D E F H भासता 27 a b c D परिकरो 28 A साम्ये

यद्येकोऽप्रकृतार्थश्चेद्भेद्यांशे[1] भिन्नशब्दता[2] ॥६४॥
शब्दार्थोभयनिष्ठोऽयं सर्वालङ्कारबाधकः[3] ।
[4]पूर्वसिद्धस्य चेदङ्गं[5] तदा न्यायेन बाध्यते ॥६५॥
अप्रस्तुतप्रशंसा तु प्रस्तुतावगमोऽन्यतः ।
[6]सा सामान्यविशेषादिविच्छित्या पञ्चधा मता[7] ॥६६॥
भवेत्साधर्म्यवैधर्म्ययोगतस्सा[8] पुनर्द्विधा ।
संभवेऽसंभवे[9] द्वेधे वाच्यस्याथ पुनस्त्रिधा ॥६७॥
प्रस्तुत[10]स्यावगम्यत्वात्पर्यायोक्ताद्विभिद्यते ।
इयमर्थान्तरन्यासाद्दृष्टान्तालङ्कृतेरपि[11] ॥६८॥
समर्थ्यत्वेन निर्दिष्टः प्रकृतो [12]यस्समर्थ्यते ।
सोऽयमर्थान्तरन्यासः सामान्यादिभिरष्टधा[13] ॥६९॥
पर्यायोक्तं तु कार्यादिद्वारा गम्यस्य वर्णनम् ।
अप्रस्तुतप्रशंसातो वाच्यस्य प्रस्तुते[14] भिदा ॥७०॥
व्याजेन व्याजरूपा वा स्तुतिर्व्याजस्तुति[15]द्वयम् ।
अप्रस्तुतप्रशंसातः स्तुतिनिन्दात्मिका भिदा ॥७१॥
निषेधाभास आक्षेपः प्रकृतस्येष्टसिद्धये ।
स उक्तविषये वस्तुतद्व[16]क्त्योर्वार[17]णात्मकः ॥७२॥
वक्ष्यमाणे[18] पुनस्त्वन्यो ज्ञेय आगूरणात्मकः ।
सामान्यतो विशेषां[19]शादंशश्चेत्येष च द्विधा ॥७३॥
इष्टा[20]र्थोऽस्य निषेधो[21]ऽस्य बाधोऽस्यातिशयध्वनिः ।
चतुष्टयमिदं ज्ञेयं संभूयाक्षेपकारणम् ॥७४॥
अनुक्तस्य निषेधस्य विध्याभासेन सूचनम् ।
आक्षेपो वक्ष्यमाणैकविषयस्त्वेष सम्मतः ॥७५॥
विरोधस्तु तदाभासो जात्याद्यर्थसमाश्रयः ।
तद्वै[22]चित्र्याद्दशविधो विपर्यये[23] व्यवस्थितः ॥७६॥
प्रसिद्धकारणाभावे कार्योत्पत्तिर्विभावना ।
कार्योत्पादनवैशिष्ट्याद्द्विधा चेयं निमित्ततः ॥७७॥
कार्यांशस्य यदा भावा[24]भावो वक्तुमपेक्षितो[25] ।

---

1. A. G. गम्यांशे 2. D. शब्दतः 3. D. बाधकं 4. E. सर्वं 5. D. omits चेत् 6. Omitted in D. 7. Omitted in D. 8. D. साधु पुनः 9. A's alt. F. भयासंभ 10. A. स्तुनावग 11. A. C. F. अन्तहृतेरपि 12. C. यत् 13. A. C. F. G. अष्टधाः 14. C. स्तुतो 15. a. b. c. स्तुतिर्द्वं 16. A. C. D. E. F. H. तत्तुक्त्यो 17. A. F. उच्चारणात्म D. मारणा 18. a. माणो 19. A. C. D. E. G. शेष्यांशांशश्च 20. a. c. इष्टार्थो 21. C षेधो तथाति 22. D. चित्र्यं 23. A. C. पर्येऽत्यर्थव्यवस्थिता 24. C. भावो 25. A. F. अपेक्षते

विभावनाविशेषोक्त्योस्तदा सन्देहसङ्करः ॥७८॥
विशेषोक्तिर्भवेत्कार्यानुत्पत्तिः सति कारणे ।
अत्रैक[1]गुणहान्या तु साम्यदार्ढ्यमलक्षणम् ॥७९॥
कार्यकारणयोर्यो[2]तु कालसाम्यविपर्ययौ ।
अन्या त्वतिशयोक्तिस्सा विरोधांशोपजीवनात् ॥८०॥
कार्यकारणयोर्भिन्नदेशत्वे स्यादसङ्गतिः[3] ।
अभेदाध्यवसायादिविच्छित्या दृश्यते च सा ॥८१॥
विरूपानर्थयोर्हेतोरुत्पत्तिर्विषमं[4] मतम् ।
तथा [5]विरूपघटना तेनेदं त्रिप्रभेदकम् ॥८२॥
सरूपयोस्संघटना समालङ्कार इष्यते ।
श्लाघ्याश्लाघ्यत्वयोगेन [6]द्वौ भेदावस्य संगतौ[7] ॥८३॥
प्रयत्नस्तु विचित्रं[8] स्याद्विपरीतफलाप्तये ।
निषेधतो[9] वैपरीत्याद्विषमालंकृतेर्भिदा ॥८४॥
अना[10]नुरूप्यमधिकमाश्रयाश्रयिणोर्मतम् ।
आश्रयाश्रयिवैपुल्यवशतो द्विप्रभेदकम्[11] ॥८५॥
क्रियाजननमन्योन्यमन्योन्यालङ्कृतिर्मता ।
अनाधारादि[12]भेदेन विशेषोऽपि त्रिधा मतः ॥८६॥
यथासाधनमेकेन तथैवान्येन[13] [14]बाधनम् ।
व्याघातोऽस्य विरुद्धस्य[15] सौकर्येण क्रिया तथा ॥८७॥
कार्यं कारणमालायां[16] प्राचः[17] प्राचः परं परम् ।
एकावल्यां यथा पूर्वं भेदकंतूत्त[18]रोत्तरम् ॥८८॥
स्थाप्यतेऽपोह्यते चैव तेनेयं द्विविधा मता ।
मालादीपकमाद्या[19]द्यस्योत्तरोत्तरदीपनम्[20] ॥८९॥
उत्तरोत्तरमुत्कर्षावहत्वे सार इष्यते ।
काव्यलिङ्गं तु[21] हेतुत्वेनोक्तिर्वाक्यपदार्थयोः ॥९०॥
नाय[22]मर्थान्तरन्यासो हेतोश्शाब्दत्व[23]संश्रयात् ।
अनुमानं तु साध्याय[24] साधनस्योपवर्णना ॥९१॥

---

1 A. C. H एकहान्या 2. A. योस्तु स्त. काल C H. योस्तुकाल 3 A सङ्ग्रहः 4. C. विषमः स्मृत. 5. H. विरूप 6 D. यौ 7. a b c. समतौ 8. A's alt. विचित्रः 9. D C. विशेषतो 10. C. अनतु 11. C भेदकः 12. C. नासादिनभे 13. A. C. F. अन्यस्य 14. E. बोध a. b. c माघ 15 A's alt. विरोधस्य 16. a b. c मालायाः 17. D. प्राचं प्राचं 18. A. C. F. चोत्तरो 19 A. C F. आद्यस्य 20. A. दीपनात् 21. Omitted in A. C. 22. C. न्याय 23 C शब्दत्व 24. A C. F साध्यमा

तत्संकीर्णत्व[1]शुद्धत्वविच्छित्त्यान्यविलक्ष[2]णात् ।
अप्रतीतप्रतीतौ स्यादनुमानव्यवस्थितिः ॥९२॥
पदार्थाद्वाथ वाक्यार्थान्निर्देशे सति हेतुतः[3] ।
समर्थनं प्रतीतस्य काव्यलिङ्गद्वयं[4] मतम् ॥९३॥
भवेदर्थान्तरन्यासः ताटस्थ्ये हेतुभावतः ।
कार्यकारणभावे तु तस्योक्तं लक्षणान्तरम् ॥९४॥
प्रागुक्तानामनुक्तैस्तु सम्बन्धः [5]क्रमिको यदा ।
यथासङ्ख्यं तथा शाब्दं आर्थं चेति द्विधा मतम्[6] ॥९५॥
पर्याय एकोऽनेकस्मिन् एकत्रानेक इत्यपि ।
द्विधा[7] क्रमवशादेतौ[8] न विशेषसमुच्चयौ ॥९६॥
नैवं विनिमयाभावात् परिवृत्ति[9]र्भिदास्त्विह ।
यतस्रोऽनेकरूपस्य पृथक्सङ्घातवर्तनात्[10] ॥९७॥
पृथक्सङ्घातवृत्तित्वादनेकोऽर्थो[11] द्विधा स च ।
आधाराधेयभावस्यात्रतस्रोऽस्य भिदास्ततः ॥९८॥
परिवृत्तिर्विनिमयस्त्रिधा सेयं[12] समादिभिः ।
परिसंख्या त्वनेकत्र प्राप्तस्यैकत्र[13] यन्त्रणम् ॥९९॥
चतुर्धा[14] प्रश्नवर्ज्योक्त्योर्भावाभावावियं मता ।
न [15]परं युगपत्प्राप्तिः पक्षेऽपि [16]प्राप्तिरिष्यते ॥१००॥
परिसङ्ख्यानियमयोरतो[17]ऽत्रालौकिकी स्थितिः ।
अर्थापत्तिस्तु [18]कैमुत्येनान्यार्थापात इष्यते ॥१०१॥
प्रकृताप्रकृता[19]पातादियं च द्विविधा मता ।
विरोधे तुल्यबलयोर्विकल्पस्सन्निपातिनोः[20] ॥१०२॥
[21]अश्लेषश्लेषभित्तित्वाद्विधाऽप्यमुपवर्ण्यते[22] ।
गुणक्रियायौगपद्ये[23] त्रिविधस्स्यात्समुच्चयः ॥१०३॥
एकक्रियाया[24]मन्यस्य[25] क्रिया त्वन्यः समुच्चयः ।
सदसद्द्वैध[26]योगेन स[27] त्रिधा संव्यवस्थितः ॥१०४॥
समाधिस्सम्यगाधानं कारणान्तरयोगतः ।

---

1. A. C. F. स्वविच्छि 2. E. लक्षणं 3. D. हेतुकः 4. A. C. लिङ्गान्वयो मतः 5. A. C. क्रमकोविदाः 6. A. C. F. विदुः 7. E. द्विविधा 8. A. एका 9. A. C. F. तदाश्विह 10. A. C. D. F. H. वर्तनात परिवृति 11. E. अनेकार्थो 12. Omitted in a. 13. a. एकस्य 14. a. b. c. चतुर्दा 15. A. C. F. वरं 16. A. C. F. यप्राप्तिः 17. A. C. E. F. अतन्त्रा 18. A. C. F. G. कैमुत्यन्यायार्थं 19. A. C. कृतादियं 20. C. पातिनोः 21. A's alt. C. सश्लेषाश्ले 22. A. C. उपपत्तितः 23. a. b. c. पद्यः 24. A. C. E. G. क्रियामन्य 25. A. C. E. omit स्य 26. A. C. सद्वेद 27. A. C. E. F. G. H. न द्विविधसंव्यव

तदीयस्य तिरस्कार प्रत्यनीकमशक्तित. ॥१०५॥
उपमानस्य कैमर्थ्या[1]दुपमेयत्वकल्पनात्[2] ।
द्विधा प्रतीप काम्येत[3]दुपमानत्वतोऽपि च ॥१०६॥
निजेनागन्तुना[4] वाऽपि लक्षणेनान्यगोपनम् ।
निमीलिताख्योऽलङ्कारो द्विप्रकारः प्रकाशित.[5] ॥१०७॥
प्रस्तुत[6]स्यान्यतादात्म्य सामान्यं गुणसाम्यत[7] ।
तद्गुणस्त्वगुणत्यागा[8]दुत्कृष्टस्य गुणग्रहः ॥१०८॥
न[8] तद्रूपे[9]ऽनुहारस्तु गुणताद्रूप्ययोर्द्विधा ।
उत्तर[10] प्रश्नपिशुन प्रसभाख्योत्तरं द्विधा[11] ॥१०९॥
सूक्ष्म तु सूक्ष्म[12] सलक्ष्य विदग्धेषु प्रकाशनम् ।
[13]इङ्गिताकारत[14]स्सूक्ष्मसंलक्षणमिति द्विधा ॥११०॥
व्याजोक्तिर्व्याजवचनेनोद्भिन्नस्य निगूहनम् ।
अपह्नवाय साहश्य [15]दृष्टा नापह्नुति[16]र्यतः ॥१११॥
अन्यथा योजन[17] वाक्ये वक्रोक्तिरभिधीयते ।
द्विप्रकारा च[18] विज्ञेया[19] काकुश्लेषसमाश्रयात्[20] ॥११२॥
स्वभावोक्तिर्बुधोज्ञेयवस्तुस्वाभाव्यवर्णनम्[21] ।
अथ प्रतीतिवैचित्र्यात्तारतम्यनिरूपणं[22] ॥११३॥
भाविक दूर[23]दुर्लक्ष[24] व्यक्त[25] व्याक्रियतेतमाम् ।
योऽय प्रत्यक्षवद्भाव[26]स्त्वतीतानागतार्थयो. ॥११४॥
तद्भावबिम्बनाच्चित्ते विनिवेशाच्च[27] भाविकम् ।
ना[28]विपर्ययतो भ्रान्ति. साक्षात्स्वाप्नेतिवृत्तकम्[29] ॥११५॥
अन्य[30]त्वानध्यवसितेर्न चात्रातिशयोक्तिता ।
न परं वर्तमानार्थ[31]धर्मः प्रत्यक्षतेष्यते ॥११६॥
प्रतिपत्त्रनपेक्षाया. प्रत्यक्षत्वपरिक्षयात् ।

---

1 A C श्यर्थ 2 A C E F G H कल्पन 3 A चोपेता C काम्येतदु 4 A C गन्तुकविलन 5 A C प्रकीर्तित 6 a स्तुतेन 7 a स्यागादप्युत्कृ [illegible] C. तद्रूपानुहारस्तु हैतौ सम्पप्यतद्गुण A E. omit न 9 A E. गुणानु C गुणोऽनु 10 Except C all mss प्रभाक्षयुत्तर तस्मादुक्त चास कृद्गुणम् 11 After द्विधा A gives व्याकृतव्यञ्जिता etc which [illegible] quoted is the Sañjivani as from Vidyācakravartin's Bharatasamgraha 12 A सूक्ष्म 13 C. चेङ्गित 14 C कारसु 15 A दृष्टान्याय C दृष्टा 16 A. C G मत 17 H. मयन 18 Omitted in C 19 A's alt C मा ज्ञया 20 A आश्रिता 21 C वर्णनम् यो य प्रपन्न 22. A C रूपणे 23 A's alt C दूर 24 A C F ल्क्ष्य 25. A's alt. मया 26 A F मद्भाव 27. A चेतनाच 28 A F न विप 29 A वृत्तं 30. F अन्यत्रान 31. A मामा कर्थ च

प्रत्यक्षत्वे च[1] सामग्री भावनाद्भुत[2]वस्तुजा ॥११७॥
प्रत्यक्षत्वं न संभाव्यमिह नोत्प्रेक्षणं ततः ।
अलिङ्गलिङ्गिभावाच्च काव्यलिङ्गं न चेष्यते ॥११८॥
ताटस्थ्यात्स्फुटसंवित्तेर्न तदा रसवद्भ्रमः ।
पश्चात्साधारणीभावे रसवांस्तन्निमित्तकः ॥११९॥
स्फुटत्वान्न स्वभावोक्तिर्लो[3]कोत्तीर्णस्य वस्तुनः[4]।
स्वभावोक्तेः रसवतोर्भेदस्संवादभेदतः ॥१२०॥
न प्रसादगुणश्चैतद्यस्मादौत्तरकालिकम्[5] ।
वास्तवेऽपि हि सौन्दर्ये योग्यत्वादस्य संभवः ॥१२१॥
चिरन्तनानुरोधात्तु तथा व्यक्तं न कीर्तितम् ।
भाविके बुद्धि[6]संवादो मया[7] स्याद्यदि कस्यचित् ॥१२२॥
व्याख्याशिल्पस्य[8] निकषः[9] स[10] मे धीमान्भविष्यति।
उदात्तं तु समृद्धस्य वस्तुनः कविवर्णनम् ॥१२३॥
अङ्गमन्तरेऽङ्गतापन्नं महच्चरितलक्षणम्[11] ।
द्वितीयोदात्तविषयो व्याप्तो रसवदादिभिः ॥१२४॥
रसभावगुणीभावादनौचित्यप्रवृत्तितः[12] ।
रसवत्प्रेयऊर्जस्विसमाहितचतुष्टयम् ॥१२५॥
रसवत्त्वप्रियत्वाभ्यां[13] ऊर्जः[14]प्रशमयोगतः ।
निबन्धनं रसवदाद्याख्यां सम्प्रतिपद्यते ॥१२६॥
स्थितिप्रशमसद्भाव[15]स्योदयस्सन्धिरेव च[16] ।
शाबल्यं च[17] गुणीभावे पृथक् पृथगलङ्क्रिया[18] ॥१२७॥
तिल[19]तण्डुलनीत्या संश्लेषः संसृष्टिरिष्यते ।
सा[20] शब्दार्थोभयगतैरलङ्कारैस्त्रिधा मता ॥१२८॥
अङ्गाङ्गिभावा[21]त्सन्देहात् प्रवेशादेकवाचके ।
त्रिधा तु सङ्करश्शब्दालङ्कृत्योरेकवाचके[22] ॥१२९॥

---

1. a. b. c. स्वमाम 2. C. घनाभूत 3. A. C. लोकोक्तिः 4. a. b. c. वस्तुनः 5. A. कालिका C. कालिकः 6. A. C. द्विद्रिंसंवा 7. C. मया मन्यस्य क 8. A. C. शीलस्य 9. A. C. निष्कषः 10. A. स धीमान् मा म C. F. स धीमान्से म 11. A's alt. C. वर्णनम् 12. A. प्रवर्तितः 13. A. C. रसप्रियतरत्वाभ्यां 14. A's alt. सन्द्यस 15. A. भावोद 16. Omitted in E. 17. A. C. F. च 18. E. G. क्रिया: 19. A. E. F. G. तिमे त. 20. A. C. च शब्दा 21. A's alt. भावत्वं देहात् 22. After वाचके A. gives the verse शब्दन्यायो विषम etc. and काव्यप्रकाशेऽलंकारसर्वस्वे etc. that are found at the end of his Sañjīvanī. After the above verses, it reads "समाप्तश्चित्रविचित्रविषयेषोऽयं निरूपणं: ॥"

प्रसङ्कारसर्वस्वसूत्रविवृतिः ॥

## APPENDIX II

# VARIANT READINGS IN THE ALAMKARA SARVASVA ACCORDING TO THE THREE EDITIONS

| N S ed (1939) with Jayaratha s Vimarśinī | T S S ed (1938) with Samudrabandha s Vyakhyā | *Present edition with Vidyācakravartin s Sañjīvanī* |
|---|---|---|
| P 1 L 2 भिजालङ्कार | P 1 L 2 गुर्वलङ्कार | P 1 L 2 as in N S |
| P 8 L 1 प्रेय प्रभृतौ | P 6 L 1 प्रेयऊर्जस्वि प्रभृतौ | P 7 L 2 as in T S S |
| P 8 L 2 उक्त तदित्थ | P 7 L 1 उक्त । उत्प्रेक्षातु स्वयमेव प्रतीयमाना कथिता । तदित्थ | P 8 L 1 as in T S S |
| P 8 L 2 द्विविध | P 7 L 1 त्रिविध | P 8 L 2 as in T S S |
| P 9 L 2 काव्यात्मकत्वेन | P 7 L 5 काव्यात्मत्वेन | P 9 L 1 as in T S S |
| P 9 L 7 जीवित | P 8 L 1 जीव | P 9 L 3 as in N S |
| P 9 L 8 अभिधान | P 8 L 3 अभिधा | P 9 L 4 as in T S S |
| P 9 L 4 काव्यात्मत्व | P 9 L 2 काव्ये सत्व | P 11 L 4 काव्यात्मत्व |
| P 11 L 1 भुवता | P 9 L 2 as in N S | P 11 L 5 कथयता |
| P 11 L 4 अभिधाता-त्पर्यलक्षणाख्यव्यापार | P 10 L 2 अभिधाभावकत्वलक्षणातात्पर्याख्य व्यापार | P 11 L 6 as in T S S |
| P 12 L 1 गम्यत्वात् | P 10 L 4 गन्तव्यत्वात् | P 12 L 2 as in N S |
| P 13 L 2 विश्रान्ति-धामत्व | P 10 L 6 as in N S | P 12 L 4 विश्रान्ति स्थानत्व |
| P 13 L 4 विविक्तत्वाभावात् | P 10 L 8 विचार्यत्वाभावात् | P 12 L 6 as in T S S |

| N. S. ed. | T. S. S. ed. | Present ed. |
|---|---|---|
| P. 13. L. 4. घाश्रयेण | P. 10. L. 5. आश्रयणे | P. 12. L. 5. as in T. S. S. |
| P. 15. L. 1. लिङ्गितया | P. 10. L. 7. लिङ्गतया | P. 12. L. 6. as in T. S. S. |
| P. 15. L. 7. आद्योऽप्यर्थ | P. 10. L. 7. as in N. S. | P. 15. L. 1. आद्योऽथ |
| P. 15. L. 8. लक्षणामूल शब्द | P. 13. L. 2. लक्षणामूलः शब्द | P. 15. L. 2. as in N. S |
| P. 18. L. 2. ध्वनिरलङ्कारमञ्जर्यां दर्शितः। काव्यस्य शृङ्गारप्रधानत्वात्। शिष्टस्तु यथा। यसरं तत्रैव विभक्तः। गुणी | P. 13. L. 4. ध्वनिः कालिदासादि प्रबन्धेषु | P. 23. L. 1 as in T. S. S. |
| P. 18. L. 3. गुणीभूतव्यङ्ग्यौ | P. 13. L. 5. गुणीभूतव्यङ्ग्यं | P. 23. L. 1. as in T. S. S. |
| P. 19. L. 1. दर्शितः | P. 13. L. 6. प्रदर्शितं | P. 23. L. 2. as in T. S. S. |
| P. 19. L. 5. वक्ष्यमाण | P. 13. L. 10. as in N. S. | P. 24. L. 4. निरूपयिष्यमाण |
| P. 19. L. 5. शाब्दप्रस्तावे | P. 14. L. 3. शाब्दे प्रस्थाने | P. 24. L. 6. as in T. S. S. |
| P. 23. L. 1. मदीये | P. 15. L. 4. मद्गीये | P. 26 L. 3. as in T. S. S. |
| P. 23. L. 6. An extra third verse दास्याः कादतो etc. from Śrīkanṭhacarita given to illustrate Punaruktavadābhāsa. | P. 15. L. 4. The verse दास्याः काहतो etc. is omitted. | P. 27. L. 1. as in N. S. |
| P. 23. L. 9. शुभ्रांशुशीतगुः | P. 16. L. 1. शुभ्रांशुशेखरः | P. 27. L. 4. as in N. S. |
| P. 24. L. 2. द्वैविध्यमेव स्वरूप्यञ्जनमुदाग्रमर्पनरूत्यमुक्तम्। | P. 16. L. 5. द्वैविध्यमुक्तम् | P. 27. L. 7. as in T. S. S. |

| N. S. ed. | T. S. S. ed. | Present ed. |
|---|---|---|
| P. 24. L. 6. व्यञ्जनसमुदायाश्रितं | P. 17. L. 3. व्यञ्जनमात्राश्रितं | P. 28. L. 2. as in N. S. |
| P. 24. L. 12. एकाभिधानलक्षणः | P. 17. L. 9. एकाभिधानानुप्रवेशलक्षणः | P. 28. L. 7. as in T. S. S. |
| P. 25. L. 5. यथा—आटोपेन etc. | P. 18. L. 5. यथा मदीये श्रीकण्ठस्तवे—आटोपेन etc. | P. 29. L. 3. यथा-सद्यः पद्मग etc. |
| P. 25. L. 7. मन्मनोरञ्जनं | P. 18. L. 8. मन्मनोरञ्जनं | P. 30. L. 3. as in T. S. S. |
| P. 25. L. 8. गुणालङ्कार | P. 18. L. 9. रसालङ्कार | P. 30. L. 4. as in N. S. |
| P. 26. L. 2. The verse सद्यः etc. given as an alternate illustration for पृथगनुप्रास after the verse आटोपेन etc. | P. 18. The verse सद्यः etc is omitted. | P. 29. L. 4. The verse सद्यः etc. precedes आटोपेन etc. but reads in the fourth line सरसाः instead of समदाः |
| P. 26. L. 7. एकस्यानर्थकत्वं अपरस्य सार्थकत्वं | P. 18. L. 12. as in N. S. | P. 31. L. 2. एकस्यार्थवत्त्वमपरस्यानर्थकत्वं |
| P. 27. L. 2. यमकमायाप्रभेदवैलक्षण्य | P. 19. L. 5. यमकमायालङ्कारपौनरुक्त्यवैलक्षण्य | P. 31. L. 8. यमकमायाभेदवैलक्षण्य |
| P. 27. L. 3. पुनरुक्तं | P. 19. L. 6. पौनरुक्त्ये | P. 32. L. 1. as in T. S. S. |
| P. 28. L. 2. शब्दार्थयोः स्वरूपं | P. 20. L. 2-3 शब्दार्थस्वरूपं | P. 32. L. 3. as in T. S. S. |
| P. 28. L. 7. The verse भ्रमः किमपि etc. is fully quoted and then the second line अत्राम्र etc. is referred to. | P. 20. L. 6. Only the line अत्राम्र etc is quoted. | P. 32. L. 6. as in T. S. S. |
| P. 29. L. 1. The whole verse काकाः काकाः etc. is quoted | P. 21. L. 1. काकाः काका इत्यादौ | P. 32. L. 7. as in T. S. S. |

| N. S. ed. | T. S. S. ed. | Present ed. |
|---|---|---|
| P. 29. L. 6. साक्षादेव प्रयोजकं | P. 21. L. 4. as in N. S. | P. 33. L. 4. साक्षादेव हि लक्षणं |
| P. 30. L. 1. व्याख्यातं | P. 21. L. 6. व्याख्यानं | P. 33. L. 5. as in N. S. |
| P. 30. L. 6. वाचकशब्दालङ्कारो | P. 21. L. 11. वाचकालङ्कारो | P. 34. L. 3. as in N. S. |
| P. 32. L. 1. अनेकप्रकारवैचित्र्य | P. 24. L. 2. प्रकारवैचित्र्येण अनेक | P. 36. L. 1. as in T. S. S. |
| P. 32. L. 2. पूर्णालुप्तत्वभेदाद् | P. 24. L. 3. पूर्णालुप्तादित्वभेद | P. 36. L. 2. as in N. S. |
| P. 33. L. 3. उदाहरणम् | P. 26. L. 4. उदाहरणानि | P. 37. L. 4. as in T. S. S. |
| P. 42. L. 6. प्रास | P. 31. L. 4. प्रास | P. 43. L. 1. as in T. S. S. |
| P. 42. L. 7. पातयन् | P. 31. L. 5. दारयन् | P. 43. L. 2. as in N. S. |
| P. 42. L. 8. काल | P. 31. L. 6. काम | P. 43. L. 3. as in N. S. |
| P. 43. L. 1. सद्भावस्वन्तरानुभावे | P. 31. L. 8.[1] सद्भावानुभवे | P. 43. L. 5. as in N. S. |
| P. 43. L. 3. आश्रयेण | P. 31. L. 11. आश्रयणेन | P. 44. L. 1. as in N. S. |
| P. 43. L. 6. अन्यत्रान्यावापो ह्यारोपः | P. 32. L. 2. आरोपोऽन्यत्र अन्यावापः | P. 44. L. 4. as in T. S. S. |
| P. 44. L. 1. तस्य विपयविपर्ययवद्रूप | P. 32. L. 3. विषयस्य विपर्ययवद्रूप | P. 44. L. 5. as in N. S. |
| P. 45. L. 1. अभेदेऽप्यव | P. 32. L. 6. अभेदेनाप्यव | P. 44. L. 7. as in T. S. S. |
| P. 46. L. 6. प्रभ्रमसंचयं | P. 34. L. 2. प्रभ्रमसञ्चयं | P. 46. L. 11. as in T. S. S. |
| P. 47. L. 4. आनीय | P. 34. L. 8. आदाय | P. 46. L. 14. as in T. S. S. |
| P. 47. L. 6. न वा | P. 34. L. 10. न किं | P. 47. L. 1. as in N. S. |
| P. 47. L. 10. वक्त्रेण रूपणामहेतुकं | P. 35. L. 1. वक्त्रेन्दुरूपणहेतुकं | P. 47. L. 5. as in T. S. S. |

| N S ed | T. S S ed | Present ed |
|---|---|---|
| P 47 L 10 पीयूषेणा धरामृतस्य श्लिष्टशब्द रूपणाम् । | P 35 L 1 पीयूषस्या धरामृतेन श्लिष्टशब्देन रूपणाम् | P 47 L 5 as in T S S |
| P 49 L 5 ग्राविष्ट-लिङ्गस्थे | P 37. L 5 आविष्टलिङ्ग सङ्ख्यत्वे | P 49 L 3 आविष्टलिङ्ग-सङ्ख्यात्वे |
| P 51 L 5 ग्रभावात् | P 39 L 1 असभवात् | P 52 L 1 as in N S |
| P 51 L 6 अधिकरणय-प्रयोगात् | P 39 L 2 अधिकर ण्याभ्या | P 53 L 1 as in T S S |
| P 51 L 8 उपहृतवान् | P 39 L 5 उपकृतवान् | P 53 L 4 as in T S S |
| P 52 L 1 ग्रधिकरणा न्तर | P 39 L 8 ग्रधिकरणा-तर | P 54 L 1 as in T S S |
| P 52 L 2 तदत्र | P 40 L 1 तत्र | P 54 L 2 as in N S |
| P 25 L 6 तादात्म्यात् | P 40 L 5 तादात्म्यात्तु | P 54 L 6 as in T S S |
| P 53 L 2 राजसङ्घटने तूपाय | P 40 L 9 ग्रत्र राज सङ्घटने उपाय | P 55 L 3 as in T S S |
| P 53 L 6 ग्रप्रकृत | P 41 L 2 ग्रप्रकृतोऽर्थं | P 55 L 7 as in T S S |
| P 53 L 6 अप्रकृते | P 41 L 2 अप्रकृतसन्देहे | P 55 L 7 as in N S |
| P 53 L 6 विषयोऽपि | P 41 L 2 प्रकृतोऽपि | P 55 L 7 as in N S |
| P 54 L 7 साक्षात् | P 41. L 12 सर्वा | P 56 L 7 as in N S |
| P 54 L [illegible] चिरात् | P 42 L 1 पुर | P 56 L 8 तिर |
| P 55 L 4 केचित्तु | P 42 L 10 as in N S | P 57 L 4 केचित्त |
| P 55 L 4 अध्यव सायाध्यवसंन | P 42 L 10 ग्राध्यव सायात्मकेन | P 57 L 4 as in N S |
| P 55 L 4 सन्देहप्रकारे | P 42 L 10 इम सन्देह कार | P 57 L 4 as in T S S |
| P 55 L 5 घोतकम्मत्वा दुत्प्रेक्षा | P 42 L 11 घोतकत्व मत्वा उत्प्रेक्षा | P 57 L 5 घातकत्वा-दुत्प्रेक्षा |
| P 59 L 1 न चेद् निर्निमित्त | P 44 L 5 न चानिमित्त | P 58 L 10 as in N S |

| N. S. ed. | T. S. S. ed. | Present ed. |
|---|---|---|
| P. 59. L. 1. यथायोगं | P. 44. L. 7. यथासंभवं | P. 58. L. 10 as in N. S. |
| P. 59. L. 5. साधितें | P. 44. L. 9. साधितः | P. 58. L. 3 as in N. S. |
| P. 59. L. 8. श्रीकण्ठाख्यो जन | P. 45. L. 3. श्रीकण्ठजन | P. 58. L. 5 as in T. S. S. |
| P. 59. L. 9. समस्तव्यस्ता | P. 45. L. 5. समस्ता-व्यस्ता | P. 58. L. 7 as in T. S. S. |
| P. 61. L. 2. सङ्करप्रतीतिः | P. 46. L. 4 as in N. S. | P. 60. L. 3. संकरप्रवृत्तिः |
| P. 61. L. 8. एवं पृथुरसि यर्जुनो | P. 47. L. 3. एवं गुरुर्वचसि पृथुरसि वियासो मनस्यर्जुनो | P. 61. L. 1. एवं गुरुर्वचसि पृथुरसि अर्जुनो |
| P. 61. L. 2. विच्छित्तिसद्भावः | P. 48 L. 1. विच्छित्यन्तर-संभवः | P. 61. L. 6. विच्छित्ति-संभवः |
| P. 61. L. 3. अलंकारान्तर | P. 48. L. 3. कारकान्तर | P. 61. L. 6 as in N. S. |
| P. 61. L. 4. आश्रयेण | P. 48. L. 3. आश्रयणेन | P. 61. L. 7 as in N. S. |
| P. 63. L. 1. विपयस्यापह्नवे | P. 49. L. 1. विषयापह्नवे | P. 62. L. 1 as in T. S. S. |
| P. 63. L. 2. प्रक्रान्तापह्नव | P. 49. L. 2. प्रक्रान्तार्थापह्नव | P. 62. L. 2 as in T. S. S. |
| P. 63. L. 5. पूर्वोक्तभेद | P. 49. L. 6. पूर्वकभेद | P. 63. L. 3 as in T. S. S. |
| P. 64. L. 2. शशक इति नो मां | P. 50. L. 2. शश इति न तन्मां | P. 63. L. 6 as in N. S. |
| P. 64. L. 5. अत्रैन्दवस्य | P. 50. L. 6. अत्र स्वैन्दवस्य | P. 63. L. 9 as in N. S. |
| P. 65. L. 4. विलसद्भ्रमर | P. 51. L. 1. विकसद्भ्रमर | P. 64. L. 6 as in N. S. |
| P. 65. L. 15. पौर्वापर्य-प्रयोगविपर्यं | P. 52. L. 2. पौर्वापर्य-प्रयोगपर्याय | P. 65. L. 1. पौर्वापर्य-विपर्यय |
| P. 66. L. 1. सदपि | P. 52. L. 2. संभवदपि | P. 65. L. 1 as in T. S. S. |
| P. 66. L. 2. निरन्तरं | P. 52 L. 4. पूर्वं | P. 65. L. 3 समनन्तरं |
| P. 71. L. 7. सत्यता-प्रतीतिः | P. 54. L. 5. सत्यतया प्रतीति | P. 67. L. 6 as in T. S. S. |

| N.S. ed | T.S.S. ed. | Present ed. |
|---|---|---|
| P. 73. L. 1. प्रतीयमाना यास्तु | P. 56. L. 8 as in N.S. | P. 69. L. 3. प्रतीयमाना-याश्च |
| P. 76. L 8. श्लिष्टशब्दहेतुः | P. 61. L. 9. श्लिष्टशब्दहे-तुका | P. 74. L. 9 as in T. S. S. |
| P. 77. L. 3. क्लिष् | P. 61. L. 8. किंचित्येके | P. 74 L. 8 as in T. S S. |
| P. 77. L. 5. अङ्गदैः | P. 61. L. 11. अङ्गुलीयकैः | P. 74. L. 10 as in N.S |
| P. 79. L. 8. कुटिलत्वादिः निर्दिष्टमेव | P 64. L 12. कुटिलत्वा निर्दिष्टंच | P. 78. L. 2. कुटिलत्वं निर्दिष्टमेव |
| P. 80. L. 2. लोक्य-मानात्मा | P 64. L. 12. लोप्यमा-नात्मा | P. 78. L. 6 as in T. S. S. |
| P. 81. L 7. अत्र अथ-परिवर्तनस्य फल | P. 65. L. 12. अत्राथ-परिवर्तनफल | P. 79. L. 6. अत्र परि-वर्तनस्य फल |
| P. 83. L. 4. अध्यवसाने | P. 66. L. 7. अध्यवसाये | P. 80. L. 6 as in T. S. S |
| P. 83. L. 5. विषयिणा अन्तर्निगीर्णत्वे | P. 66 L. 8 विषयिणा निगीर्णत्वे | P. 81. L. 1. विषयिणा अन्तर्नीतत्वे |
| P. 83. L. 6. सिद्धत्वे तु अध्य | P. 66. L. 9 as in N. S. | P. 81. L. 2. सिद्धत्वे अध्य |
| P 85. L. 6. The verse 'मणिमलङ्किम' etc. given as an alternate illustration for the second variety of Atiśayokti. | P. 67. L. 9 as in N. S. | P. 81. L. 12. The verse "धाराअणोत्ति etc." given as an alternate illustration |
| P 85 L. 7. अपि प्रिया-धररसस्य विषय | P 67 as in N. S | P. 82. L. 1. अपि विषय |
| P. 87. L. 7. विपर्ययो यथा— | P. 69. L. 7. पौर्वापर्य विपर्ययो यथा— | P. 83. L. 7 as in T. S. S. |
| P. 88. L. 6. अभेदादि-वचनं | P. 70. L. 1 as in N. S | P. 83. L. 14. अभेदादि-कथनं |

| N S ed | T S S ed | Present ed |
|---|---|---|
| P 88 L 8 वदनादीना कमलादीभेदऽपि धास्तव | P 70 L 4 वदनादीनां वास्तव | P 84 L 2 as in T S S |
| P 89 L 2 आश्रया-लङ्कार | P 71 L 4 आश्रयेणा लङ्कार | P 85 L 1 as in N S |
| P 94 L [illegible] वस्तुत शब्द | P 77 L 8 वस्तुशब्दस्य | P 90 L 3 as in T.S S |
| P 96 L 1 प्रतिबिम्ब भावतया | P 78 L 6 प्रतिबिम्बतया | P 91 L 2 as in T S S |
| P 96 L 8 तन्निबन्धन | P 78 L 14 एतन्निबन्धन | P 91 L 9 as in T S S |
| P 96 L 11 नोऽस्य | P 79 L 4 नो द्विध | P 91 L 14 as in T S S |
| P 99 L 3 यारोप्यते | P 82 L 5 अभ्यारोप्यते | P 93 L 8 as in T S S |
| P 100 L 1 इय चोप मेय उपमानवृत्तस्यास भवात् | P 82 L 10 as in N S | P 94 L 1 इयं च सामान्येनैवोपमानवृत्त स्योपमेयेऽसम्भवात् |
| P 100 L 12 कर्णजाप | P 83 L 11 कर्णजप | P 95 L 4 as in N S |
| P 100 L 13 धृतोऽन्य सुखदर्पणो | P 83 L 12 कृतान्य सुखमण्डना | P 95 L 5 as in T S S |
| P 105 L 1 कुमुदवने | P 87 L 4 कुमुददले | P 99 L 6 as in T S S |
| P 105 L 3 एतद्विशेषण | P 87 L 6 एतद्विशेष | P 99 L 7 as in T S S |
| P 106 L 1 शोभनत्व स्य भाव शोभनत्व | P 89 L 3 शोभनत्व स्याभाव अशोभनत्व | P 100 L 7 as in T S S |
| P 106 L 2 भाव अशो भनत्व | P 89 L 4 अभाव शोभनत्व | P 101 as in T S S |
| P 106 No alternate illustration for the first variety of Vinokti | P 90 The verse प्रयत्न मधुनैव etc. given as an alternate illustration | P 101 as in N S |

| N S ed | T S S ed | Present ed |
|---|---|---|
| P 108 L 4 समासात्तिविपय | P 92 L 1 समासोक्तेर्गोचर | P 103 L 5 as in N S |
| P 109 L 1 अवच्छेदकत्व | P 92 L 3 अवच्छेदकत्वाच्च | P 104 L 2 as in T S S |
| P 109 L 3 ततश्च | P 92 L 5 तत्त्व | P 105 L 1 as in T S S |
| P 109 L 9 नायकताविकारत्य | P 93 L 4 नायकतात्य | P 105 L 6 as in T S S |
| P 110 L 1 तन्वीत्यादि | P 94 L 1 as in N S | P 106 L 3 तनुरेत्यादि |
| P 110 L 4 इय च समासोक्ति पूर्वं | P 94 L 5 इय च पूर्वं | P 106 L 6 as in N S |
| P 110 L 5 अस्पष्टा | P 94 L 5 अस्फुटा | P 106 L 6 as in T S S |
| P 110 L 7 अलिवृन्दष | P 94 L 7 अलिवृन्देन | P 106 L 9 as in T S S |
| P 111 L 3 पूर्वदर्शित | P 95 L 4 प्राङ्निदर्शित | P 107 L 7 as in T S S |
| P 111 L 7 चन्द्रोऽयमित्यार्त | P 95 L 9 चन्द्रामयेत्यार्त | P 108 L 4 as in T S S |
| P 113 L 4 इय च शुद्ध | P 97 L 7 इत्थ च शुद्ध | P 109 L 6 इत्थ शुद्ध |
| P 114 L 4 हठकामुकत्व | P 98 L 11 हठकामुकव्यवहार | P 111 L 1 as in T S S |
| P 114 L 8 अत्र नीरसैकण्टकिभी | P 98 L 18 as in N S | P 111 L 7 अत्र कण्टकिभि |
| P 114 L 21 व्याकरणप्रसिद्ध | P 99 L 12 व्याकरणशास्त्रप्रसिद्ध | P 112 L 8 as in N S |
| P 115 L 21 The verse स्वपक्ष etc. given as an instance of तर्कशास्त्र स्तुसमारम्भ | P 100 L 101 The verses दृशवक्रविवाद etc. and स्वपक्ष etc given as examples | P 113 L 8 as in N S |

| N. S. ed. | T. S. S. ed. | Present ed. |
|---|---|---|
| P. 115. L. 21. The verse गयडान्ते etc. as an instance of ज्योतिः दारस्थवस्तुम-मारोप | P. 101 as in N. S. | The verse is omitted. |
| P. 116. L. 8. अभ्यन्तरे | P. 103. L. 1 आभ्यन्तरी | P. 115. L. 1 as in T. S. S. |
| P. 116. L. 9. उज्जिधामा | P. 103. L. 2. उज्जिगासा | P. 115. L. 2 उजिहासा |
| P. 117. L. 3. इत्यत्रास्ति-तावद् | P. 104. L. 3. अस्तितावद् | P. 117. L. 6 as in T. S. S. |
| P. 117. L. 11. नायकव्य-वहार | P. 105. L. 1. नायकत्व-व्यवहार | P. 118. L. 3 as in T. S. S. |
| P. 117. L. 7. उपमेव अभ्युपगम्या | P. 105. L. 11. उपमैव उपास्या | P. 119. L. 5 as in T. S. S. |
| P. 117. L. 7. गत्यन्तरा-संभवात् | P. 105. L. 12. गत्यन्तरा-भावात् | P. 119. L. 5 as in T. S. S. |
| P. 118. L. 10. एवेति | P. 106. L. 3. एव युक्तेति | P. 119. L. 8 as in T. S. S. |
| P. 119. L 6. कार्योपनिबन्धनेन उत्था-पितया | P. 107. L. 4. कार्योपनि-बन्धेन उत्थापितया | P. 120. L. 11. कार्यो-त्थापितया |
| P. 119. L. 16. पतिपत्नी | P. 108. L. 4. भर्तृपत्नी | P. 121. L. 6 as in T. S. S. |
| P. 120. L. 2. उपेक्षान्त-रात्तु | P. 108. L. 6. उपेक्षातु | P. 121. L. 8 as in N. S. |
| P. 122. L. 4. अर्थान्तर-गतध्वनेर्विषयः | P. 110. L. 7. अर्थान्त-रावगतिध्वनिविषयः | P. 123. L. 6. अर्थान्त-रावगतिर्ध्वनेर्विषयः |
| P. 122. L. 6. शिष्टप्रकारः | P. 111. L. 1. अथशिष्ट प्रकारः | P. 123. L. 8. श्लिष्टप्रकारः |
| P. 123. L. 5. हरिहर-योर्द्वयोरपि प्राक् | P. 112. L 3. हरिहरयोः प्राक् | P. 125. L. 1 as in N. S. |
| P. 124. The passage from अलङ्कार्यालङ्करण भावस्य... ...लौकव- | P. 113 as in N. S. | Pp. 125-26. The passage अलङ्कार्ये... व्यवस्थानात् follows |

